## चतुर्द्दशाङ्ग पाचनम्[१२]

माहतिता, गुड़ूची, मथा, शुगठी, विल्व, मातघिला ( शोना ) गमारी, पारलि, गणियरी, एषां मिलि २ तोला, जल ३२ तोला, शेष ८ तोला।

## मेघनादोरसः

शुद्धयूतं मृतं ताम्रं द्वयोस्तुल्यन्तु गन्धकम्।
क्वाथेन[१३] मेघनादस्य[१४] पिष्ट्वा रुद्धा पुटे पचेत्॥
षड्भिः पुटे भवेत् सिद्धोमेघनादोज्वरापहः।
पर्णखण्डेन मासैकं विषमज्वरनाशनम्॥
अस्यमात्रा द्विगुञ्जास्यात् पथ्यं दुग्धौदनं हितम्।
नागरातिविषामुस्तं भूनिम्वामृतवतमकैः।
सर्वज्वरातिमारघ्नं क्वाथमस्यानुपाययेत्॥
तरुणन्वा ज्वरं जीर्णं, तृष्णादाहञ्च नाशयेत्।

शुद्ध पारद, मारितताम, दुइरो समान गन्धक। मेघनाद क्वाथेन पिष्ट्वा रुद्धा षड्भिः पुटे पचेत्। पर्णखण्डेन मासैकं लिहेत्। अपरमनुपानं आदा, आतैस, मथा, माहतिता, गुड़ूची, कुटज एषां मिलि २ तोला, जल ३२ तोला, शेष ८ तोला तस्यानुपिवेत्। मात्रा रक्तिद्वयं॥

पिवेत् पर्पटकं क्वाथं, गुड़ूच्या वासकस्य च।
त्रिफलाया रसं वापि श्लैष्मिके विषमज्वरे॥

नरनिया २ तोला, जल ३२ तोला, शेष ८ तोला, एवं गुड़ूची २ तोला, जल, ३२ तोला, शेष ८ तोला, एवं वासकपत्र २ तोला, जल ३२ तोला, शेष ८ तोला एवं त्रिफलाया। सर्वत्र मधु प्रक्षेपः।

जीरकं गुड़संयुक्तं, किञ्चिन्मरिचसंयुक्तं।
जयेदैकाहिकं सद्यो, रणेवीरोरिपुमिव॥

भोगजीरा चूर्ण १ तोला, गुड़ १ तोला, मरिच चूर्ण १६ रति, दुग्ध ( सह ) पेयं।

समुद्रस्योत्तरे तीरे द्विविधानामवानरः।
ज्वरमैकाहिकं हन्ति लिखित्वा यस्तु पश्यति॥

द्विविधानाम वानरमूर्त्ति दर्शन करिले एकाहिक ज्वर नाशः।

गुड़ूच्यामलकं मुस्तं हन्ति चातुर्थकं ज्वरं।

१२। चतुर्द्दशाङ्गपाचनं—चिरज्वरे वातकफोल्वनेवा, त्रिदोषजे वा दशमूलमिश्रः।
किराततिक्तादिगणः प्रयोज्यः, शुद्ध्यर्थिनेवा त्रिवृताविमिश्रः॥ —इति पाचनसंग्रहे।

१३। रसेन, इति रसेन्द्रसारसंग्रहे पाठः।

१४। मेघनादो, रक्ततण्डुलीयकः॥ —इति रसेन्द्रसारसंग्रहे।

गुड़ूची, आमलकी, मथा, एषां मिलि २ तोला, जल ३२ तोला, शेष ८ तोला।

अगस्त्यस्य रसं नस्यं, हन्ति चातुर्थकं ज्वरम्। वकपुष्पनस्य॥

शिरीषपुष्पस्वरसो, रजनीद्वयसंयुतः।

नस्यं सर्पिः समा योगाच्चातुर्थकज्वरं जयेत्॥

शिरीष पुष्पर रस, हरिद्राद्वय रस, घृतेरे नस्य करिव।

कृष्णाम्बरदृढ़ाबद्ध, गुग्गुलूलूकपुच्छजः।

धूपश्चतुर्थक हन्ति, तमः सूर्य्य इवोदितः॥

गुग्गुल्, पेचार पुच्छ, कृष्णवस्त्रेण बद्धा धूपो देयः।

कालिङ्गकापटोलस्य पत्रं कटुकरोहिणी।

कषायोहन्ति नियतं, ज्वर सन्ततनामकं॥

इन्द्रयव, पटोलपत्र, कटुकि एषा क्वाथः।

पटोलं सारिवामुस्त पाठा कटुकरोहिी।

ज्वरं सततनामानं हन्ति सद्यो न संशयः॥

पटोलपत्र, सारिवा, मथा, पाठा, कटुकी एषां क्वाथः।

"निम्बपटोलमृद्वीका, त्रिफलामुस्तवत्सकैः"।

अन्येद्युष्कं ज्वरं हन्ति, तमः सूर्य्य इवोदितः।

निमछाल, पटोलपत्र, गमारी गुटी, मथा, त्रिफला, कुटज एषां क्वाथः।

## सुदर्शनचूर्णम्

कालियकञ्च रजनी, देवदारुवचाघनम्।
अभया धन्वधामञ्च, शृङ्गीक्षुद्रामहौषधम्॥
त्रायन्ती पर्पटीनिम्ब ग्रन्थिक वालकं शठी।
पुष्करं मागधं मूर्वा, कुटजं मधुयष्टिका॥
सिग्रूत्पलञ्चेन्द्रयवं वचा, दार्विन्धचन्दनं।
पद्मकञ्च वलोशीरं त्वचं मौराञ्जिका स्थिरा॥
यवान्यतिविषाविल्वमरिचं गन्धपत्रकम्।
धात्रीचित्रकमूलञ्च, पटोल पद्मकन्तथा॥
कटुक कलमिञ्चैव कुण्डली समभागिकं।
सर्वद्रव्यस्य चार्द्धेन करातं सम्प्रदापयेत्॥
चूर्णं सुदर्शनं नाम ज्वरान् हन्ति न संशयः।
पृथक्द्वन्द्वसमुद्भूतान् धातुस्थान् विषमज्वरान्॥

सन्निपातोद्भवांश्चापि, साध्यासाध्यान् ज्वरान्तथा।
ज्वरांश्च विविधान् हन्यादवारिदोषोद्भवान्तथा॥
ऐकाहिकादिकान् सर्वान्, नाशयेदविकल्पतः।
सुदर्शनं यथाचक्रं, दानवांश्च विनाशयेत्॥
तद्वज्ज्वरानां सर्वेषामिदं चूर्णं प्रनाशनम॥

कृष्णवर्ण आगर, हरिद्रा, उषैकाष्ठ, वच, मथा, हरीतकी, कुबैलता ( दुरालभा ), काकराशृङ्गी कण्टकारी, आदा, नाथकल्प ( वलाडमरु ) क्षेतकपरा, निमछाल, पिप्पलीमूल ( वाला ) वाख्याल, केओरि, वनरिहामूल, पद्ममूल ( कूर ), पिपली, कुटजछाल, यष्टिमधु, चजिनाछाल, भेटफुल, इन्द्रयव, आचुकाष्ठ, रक्तचन्दन, पद्मकाष्ठ, वृहद्वाख्याल, विरिणामूल, दालचिनि. पक्कपर्पटी, शालपर्णि, यमानी, आतइच, वेलशुयठी, ( अथवा वेलछाल ), मरिच, तेजपात ( गन्धभेदेलो ), आमलकी, चितामूल, पटोलपत्र, पद्मचका, कटुकितिता, पिठानी, गुडूची, सवारो सममागे चूर्ण, सर्वचूर्णर आधा, माहतिनार चूर्ण। दुइसान ८० रतिके बोले। सेइ प्रमाणे खाव। शीतलजल अनुपान।

## ज्वरमुरारि

अपरम्—हिङ्गुलञ्च विषं व्योषं टङ्कनं नागराभया।
जयपालसमायुक्तं मद्योज्वरविनाशनम्॥

हिङ्गुल, विष, शुगठी, पिपली, मरिच, सोवागा, हरीतकी, शुगठी, सर्व समं कनकफलम्, सर्वं पिष्ट्वा, कलाय प्रमाण वटिका मधुना आद्रकरसेन एकां पिवेत।

## अथ ज्वरे तैलानि—अङ्गारकं तैलम्

मूर्वालाक्षाहरिद्रे द्वे मञ्जिष्ठारेन्द्रवारुणी।
वृहतीसैन्धवं कुष्ठं, रास्नामांमीशतावरी॥
आरणालाढ़केनैव तैलप्रस्थं विपाचयेत्।
तैलमङ्गारकं नाम, सर्वज्वरविमोक्षणम्॥

वनरिहा, लाक्षा, आन्तुकाठ, हालधि, मजाठि, वननियह, भेरि, सैन्धव, कूर, रास्ना, जटामांसी शतमूल एषां प्रति ५ तोला १६ रतिके, तिलतैल ३ सेर १६ तोला, एइ भागत काञ्जि ६ सेर।

## स्वल्पलाक्षादितैलम्

लाक्षाहरिद्रामञ्जिष्ठा, कल्कैस्तैलं विपाचयेत्।
षड्गुणेनारणालेन, दाहशीतज्वरापहम्॥

तिलतैल ४ सेर काञ्जिक २४ सेर, कल्कार्थं हालधि, मञ्जिष्ठा एषां मिलि २१ तोला २ मङा ३ रति।

### बृहल्लाक्षादितैलम्

लाक्षारसाढ़के प्रस्थं तैलस्य विपचेद्भिषक् ।
षष्ठाढ़कसमायुक्तं, पिष्ट्वा चात्र समाचरेत् ॥
शतपुष्पं हरिद्राञ्च मूर्वा कुष्ठं हरेणुकं ।
कटुकं मधुकं रास्ना, अश्वगन्धाञ्च दारु च ।
मुस्तकं चन्दनञ्चैव, पृथक् कर्षप्रमाणकैः ॥
द्रव्यैरेतैः सुसंसिद्धमभ्यङ्गान्मारुतापहम् ।
विषमाख्यान् ज्वरान् सर्वान्नाश्वेव प्रशमं नयेत् ॥
त्रिकपृष्ठग्रहं शूलं गात्रानां स्फुटनन्तथा ।
पापालक्ष्मीप्रशमनं सर्वग्रहनिवारणम् ॥

तिलतैल ४ सेर, लाक्षारस १६ सेर, दधिमस्तु १६ सेर, नीर १६ सेर। कल्कार्थं शुलूफा, हालधि, बनरिहा, कुर, रेणुका, कटुकि, यष्टिमधु, रास्ना, अश्वगन्धा, दारुहरिद्रा, मथा, रक्तचन्दन, एषां २ तोला सिद्ध।

### अथ रसायणम्। त्रिपुरभैरवः

"विषं टङ्कं वनि ( श्लेष्म ) ( हिङ्गुल ) दन्तिवीजं क्रमाद्वहु ।
दन्त्यर्द्धमर्दितं यामरमस्त्रिपुरभैरवः ॥
वल्वं व्योषेण चाद्रस्य, रसेन सितयाऽथवा ।
जग्ध्वा नवज्वरं हन्ति वान्त्यामनेन शोथहा ॥
हन्ति शूलं सविष्टम्भमर्शांसि क्रिमिजान् गदान् ।
पथ्यं तक्रेण भुञ्जीत, रसेऽस्मिन् रोगहारिणि ॥

शुद्ध विष १ तोला, सुवगा २ तोला, गन्धक ३ तोला, हिङ्गुल ४ तोला, दन्तिबीज ५ तोला, "दन्तिमूलेन मर्दयित्वा बटिका कार्य्या द्विगुञ्जा ।

### नवज्वराङ्कुशोरसः[१५]

अपरञ्च रस १ तोला, गन्धक २ तोला, हिङ्गुल ३ तोला, जयपालबीज ४ तोला (दन्तिबीज ४ तोला) दन्तिमूल रसेन पिष्ट्वा गुञ्जा प्रमाण बटिका कार्य्या, आदार रस बा चिनि अनुपान ।

### ज्वरकेशरी

शुद्धसूतं विषं व्योषं, गन्धं त्रिफलमेवच ।
जयपालं समं कुर्य्यात् शुण्ठीतोयेन मर्द्दितम्[१६] ॥

१५। क्रमेण वृद्धान् रसगन्धहिङ्गुलान्, नैकुम्भबीजान्यथ दन्तिवारिणा ।
पिष्ट्वास्य गुञ्जाभिर्नवज्वरापहा, जलेन चार्द्रा सितया प्रयोजिता ॥ इति रसेन्द्र सारसंग्रहे ।

१६। भृङ्गतोयेन इति रसेन्द्रः ।

वटिकां गुञ्जामात्रान्तु कृत्वा वैद्यः प्रयत्नतः ।
प्रमाणं सर्षपाकारं वालानाञ्च प्रशस्यते ॥
नारिकेलाम्बुना वापि सर्व्वज्वरविनाशिनी ।
नारिकेलजलं शस्तं, त्रिकर्षञ्च पिवेदनु ॥
सितया च समं पीत्वा पित्तज्वरविनाशिनी ।
मरिचेन च पीता सा सन्निपात-ज्वरं जयेत् ।
पिप्पलीजीरकाभ्यान्तु, दाहज्वरविनाशिनी ॥
विषमज्वरभूतोत्थ, ज्वरं प्लीहानमेवच ।
अग्निमान्द्यमजीर्णञ्च, श्वयथुञ्च सुदारुणम् ।
शूलाजीर्ण तथा गुल्मं, कुष्ठाष्टादश पित्तजान् ॥
ज्वरकेशरी नामोऽयं, तरुणज्वरनाशनः ॥

रस १ तोला, गन्धक १ तोला, विष १ तोला, त्रिकटु ३ तोला, त्रिफला ३ तोला, शोधितजयपाल बीज ६ तोला [illegible]रसेन गुञ्जा प्रमाणं बटिका कार्य्या ।

## शीतभञ्जीरसः

रसोहिङ्गुलगन्धञ्च जैपालं सम्मितं त्रिभिः ।
दन्तीक्वाथेन संमर्द्द्य, रसो ज्वरहरः परः ॥
नवज्वरं महाघोरं, नाशयेद्याम मात्रतः ।
आर्द्रकस्य रसेनाथ दाण्येद्रक्तिकाद्वयम् ॥
शर्करादधिभक्तञ्च पथ्यं देयं प्रयत्नतः ।
शीततोयं पिवेच्चानु, इक्षुमुद्गरसो हितः ॥
शीतभञ्जीरसोनाम सर्व्वज्वरकुलान्तकृत् ॥

रस, गन्धक, हिङ्गुल, एषां समभाग ३ टका (तोला), जयपालबीज ३ टका ( तोला ), दन्तीक्वाथेन रक्तिकद्वय प्रमाण बटिका कार्य्या ।

## हिङ्गुलेश्वरः

तुल्यांशं मर्द्दयेत् खल्ले पिप्पलीहिङ्गुलं विषम् ।
द्विगुञ्जा मधुना देया, वातज्वरनिवृत्तये ॥

पिप्पली १ टका ( तोला ), शुद्ध हिङ्गुल १ टका ( तोला ), शुद्ध विष १ टका ( तोला ), जलेन पिष्ट्वा द्विगुञ्जा प्रमाण बटिका कार्य्या ।

## महाज्वराङ्कुशोरसः

सूतं गन्धं विषं तुल्यं, धूर्त्तबीजं त्रिभिः समम् ।
चतुर्णां द्विगुणं व्योषचूर्णं, गुञ्जाद्वयं हितम् ॥
जम्बीरस्य च मज्जाभिरार्द्रकस्य रसैर्युतम् ।
महाज्वराङ्कुशोनाम, ज्वराष्टकनिसूदनः ॥
ऐकाहिकं द्व्याहिकं वा त्र्याहिकञ्च चतुर्थकम् ।
विषमञ्च त्रिदोषोत्थं हन्ति सर्वं न संशयः ॥
रसोदेयोऽनुपानेन. ज्वरान् सर्वान् व्यपोहति ।

रस १ तोला, गन्धक १ तोला, विष १ तोला, धत्तवीज ३ तोला, त्रिकटु १२ तोला, जाम्बीरर गुटी, आद्रक रसेन पिष्ट्वा द्विगुञ्जावटिका कार्य्या । सेइ दुइये अनुपान ।

अथ सन्निपाते—

## लक्ष्मीविलासोरसः

पलं वज्राभ्रचूर्णस्य, तदर्द्धे रसगन्धके ।
तदर्द्धमपि कर्पूरं, जातिकोषफले तथा ॥
वृद्धदारकबीजञ्च, बीजं धुस्तुरकस्य च ।
त्रैलोक्यविजयाबीजं, विदारिमूलमेवच ॥
नारायणी, बलामूलं, तथा नागबलापि च ।
बीजं गोक्षुरकस्यापि, बीजं हिज्जलकस्य च ॥
प्रत्येकं कार्षिकं चूर्णं, नागवल्लीरसैः पुनः ।
निष्पिष्य वटिका कार्य्या, त्रिगुञ्जा फलमानतः ॥
निहन्ति सन्निपातोत्थान् गदान् घोरान् सुदारुणान् ।
वातिकान् पैत्तिकांश्चैव, नास्त्यत्र नियमः कश्चित् ॥
कुष्ठमष्टादशविधं, प्रमेहान् विंशतिन्तथा ।
नाड़ीव्रणं व्रणं घोरं, गुदामयभगन्दरान् ॥
श्लीपदं कफवातोत्थं चिरजं कुलसम्भवम् ।
गलशोथमन्त्रवृद्धिमतिसारसुदारुणम् ।
मेदोगतं धातुगतं निहन्ति च न संशयः ॥
कासपिनसयक्ष्मार्शः, स्थौल्यंदौर्गन्ध्यवान्तिजित् ।
आमवातं सर्वरूपं, जिह्वास्तम्भं गलग्रहम् ॥

उदरं कर्णनासाक्षिमुखवैजाड्यमेवच ।
सर्वशूलं शिरःशूलं, स्त्रीणां गदनिसूदनम् ॥
गुटिका प्रातरेकैका, खादेन्नित्यं यथाबलम् ।
अनुपानमिदं प्रोक्तं, मांसंपिष्टं पयोदधि ॥
वारिभक्तं सुरासिधु, सेवनात् कामरूपधृक् ।
वृद्धोऽपित्त रुणस्पर्द्धी, न च शुक्रक्षयोभवेत् ॥
न च लिङ्गस्य शैथिल्यं, न केशा यान्ति पक्वताम् ।
नित्यं गच्छेत् शतंस्त्रीणां, मत्तवारणविक्रमः ॥
द्विलक्षयोजनदृष्टिर्जायते पौष्टिकः परः ।
रसोलक्ष्मीविलासस्तु, वासुदेव जगत्पतौ ॥
प्रोक्तः प्रयोगराजोऽयं नारदेन महात्मन. ।
अभ्यासादस्य भगवान्, लक्षनारीषु वल्लभः ।

मृताभ्र १ पल ( ८ तोला ), रस ४ टका ( तोना ), गन्धक ४ टका ( तोला ), कर्पूर ४ टका, ( तोला ), जायपत्री ४ टका ( जायफल ४ टका ), दुकरियावोज २ टका, धुस्तुरवीज २ टका ( तोला ), माङ्गवीज २ तोला, भूमिकुष्माण्ड २ टका ( तोला ), शतमूल २ टका (तोला), वाट्याल २ तोला, गोक्षुरवीज २ टका (तोला), गोरख चाकुला २ टका (तोला), हिजलवोज २ तोला, पर्णरसेन मर्दयित्वा त्रिगुञ्जाप्रमाण वटिका कार्य्या ।

अथात्र ग्रन्थान्तरे—

## लक्ष्मीविलासः

गृहीत्वा शुभनक्षत्रे, पलंवज्राभ्रचूर्णकम् ।
रसगन्धककर्पूरजातिकोषफलेतथा ॥
पृथक् द्विकार्षिकं ग्राह्यमन्येषां कार्षिकं मतम् ।
वृद्धदारकवीजञ्च, वीजमुन्मत्तकस्य च ।
त्रैलोक्यविजयावीजं, विदारिकन्दमेव च ॥
नारायणी तथा नागवल नातिवला तथा ।
वीजं गोक्षुरकस्यापि हिज्जलं वीजमेव च ॥
एतेषां श्लक्ष्णचूर्णानि, घृष्ट्वा पर्णरसे पुनः ।
निक्षिप्य वटिका कार्य्या, त्रिगुञ्जासममानतः ॥
निहन्ति सन्निपातोत्थान् गदान् घोरान् सुदारुणान् ॥

### भैरवेश्वरोरसः

द्वौ भागौ मरिचस्यापि, भागैकममृतस्य च ।
अर्द्धभागं वराटञ्च जलेन वटिकां कुरु ॥
भैरवेश्वरनामायं श्लेष्मणां कुलनाशनः ।
शिरःशूलेषु सर्वेषु, नस्यं दद्याद् विचक्षणः ॥
सन्निपाते महाघोरे पिप्पलीचूर्णसंयुताम् ।
वटिकां दत्तमात्रेण मुक्तो भवति नान्यथा ॥

मरिच २ टका, विष १ टका, वराटकभस्म ॥० टका, जलेन पिष्ट्वा गुञ्जाप्रमाण वटिका कार्य्या ।

### त्रिदोषनीहाररस अथवा ज्वरविलास-सूर्य्यम्

रसेन गन्धं त्रिगुणं कृशानुरसैस्त्रिमर्द्याष्टदिनानि घर्म्मे ।
रसार्द्धभागंत्वमृतञ्च दत्त्वा, विमर्द्दयेद्वह्निजलेन किञ्चित् ॥
पित्तैस्तु सम्भावित एष देयस्त्रिदोषनीहारविनाशसूर्य्यः ॥

रस १ टका, गन्धक ३ टका, चित्रकमूल रसेनाष्टदिनानि रौद्रेण शोषणीयं, ततो विष ४ महा पुनः चित्रकमूलरसेन मर्द्दयेत्। ततो रोहित मत्स्यपित्तैर्भाविना देया, गुञ्जाप्रमाण वटिका कार्य्या। आद्रकरसानुपानम् ।

### उदकमञ्जरीरस

सूतो गन्धष्टङ्कनः सोषणस्यादेतैस्तुल्या शर्करामत्स्यपित्तैः ।
भूयोभूयो भावयेत्तु त्रिरात्र वल्लो देयः शृङ्गवेरस्य वारा ॥
सिञ्चेत्तोयं वारिणा तक्रभुक्तं, वृन्ताकाढ्यं पथ्यमेव प्रदिष्टम् ।
अग्नेरुग्रं हन्ति सामप्रभावात्, पित्ताधिक्ये मुर्ध्नि वारिप्रयोगः ॥

रस, गन्धक, सुवागा, मरिच, प्रत्येक १ भाग एवं विष ४ भाग रौमाछर पित्तेवे ३ बार भावना दि —२ रति प्रमाणे आदार रसेरे खाव

अथ विषमज्वरे—

### बृहज्ज्वराङ्कुशः १७

पारदं गन्धकं ताम्रं हिङ्गुलं तालमेव च ।
वङ्गं लोहं माक्षिकञ्च, खर्परञ्च मनःशिला ॥

१७ । महाज्वराङ्कुशः—रसेन्द्रसारसंग्रहे

मृताभ्रकं गैरिकञ्च टङ्कनं दन्तिवीजकम ।
सर्वान्येतानि तुल्यानि, चूर्णयित्वा विभावयेत् ॥
जम्वीरतुलसीचित्रजयादन्तीरसैस्तथा ।
एभिर्दिन त्रयं भाव्यं निर्ज्जले ( निर्ज्जने ) रौद्रसङ्कुले ॥
चनमात्रां वटीं ( कुर्य्याच्छाया ) कृत्वा छायाशुष्काञ्च कारयेत् ।
मन्दाग्निदीपनञ्चैव, सर्व्वज्वरविनाशनः ।
द्वन्द्वजं सर्वजञ्चैव, चिरकालसमुद्भवम् ।
ऐकाहिकं द्व्याहिकञ्च, ज्वरन्तु सान्निपातिकम् ।
चातुर्थकं तथा भुक्ता ( तथात्युग्रं ) जलदोषसमुद्भवम् ॥
सर्व्वान् ज्वरान् निहन्त्याशु, भास्करस्तिमिरं यथा ।
वृहज्ज्वराङ्कुशोनाम ( महाज्वराङ्कुशोनाम ) रसोऽयं मुनिभाषितः ॥

रस १ टका, गन्धक १ टका, शुद्ध हरिताल १, राङ्ग १ टका, लोहा १ टका, स्वर्णमाक्षिक १ टका, सेनुजार । १ टका, शुद्ध मनःशीला १ टका, मृताभ्र १ टका, गेरु १ टका, सुवगा १ टका, दन्तीवीज १ टका, एभिर्भावनीयं । जम्वीर, तुलसो, चित्रक, दन्तीमूलरस एभिर्दिनत्रयं भाव्य चनक प्रमाण वटिकाकार्य्या ।

## चन्दनाद्यलौहम्

रक्तचन्दनह्रीवेर, पाठोशीर कणा शिवा ।
नागरोत्पलधात्रीभिस्त्रिमदेन समन्वितः ॥
लौहं निहन्ति विविधान् समस्तान् विषमान् ज्वरान ॥

रक्तचन्दन १, सुगन्धवाला १, पाठा १, विरिणा १ पिपेलो १, हरीतकी १, शुयठी १, भेटमूल १, आमलकी १, विड़ङ्ग १, चितामूल १, मठा १, एषांमिलि १२ तोला, जारित लौह १२ तोः चनकमात्र वटिका कार्य्या । मधुना भक्ष्या ।

## सूचिकाभरणोरसः

विषं पलमितं सूतं, सानैकं चूर्णयेद् दृढ़म् ।
तच्चूर्णं सम्पुटे धृत्वा मृदालिप्तशरावयोः ॥
मुद्रां कृत्वा च संशोष्य ततश्चूल्ल्यां विनिक्षिपेत् ।
वह्निं शनैः शनैः कुर्य्यात्, प्रहरद्वयसंख्यया ॥

यावत् सूच्यामुखे नग्नं ( लग्नं ) कुप्या निर्य्याति भेषजम् ।
तावन्मात्रो रसो देयो, मूर्च्छिते सन्निपातिनि ॥
क्षुरेण मुण्डिते मुर्ध्नि, तत्राङ्गुल्याच घर्षयेत् ।
तत्र भेषजसम्पर्कात् मूर्च्छितोऽपि स जीवति ॥

विष १ पल, रस ४ मद्दा, मिलित्वा द्वयं चूर्णयेत्। तच्चूर्णं शरावेन धृत्वा, मृतकर्पटकैः मुखं रुद्ध्वा, बालुकायन्त्रे चूल्यां दत्त्वा, अल्पमल्पमग्निं प्रहरद्वयं दद्यात्। औषधे शीते उद्घाटय रसो ग्राह्यः। सूच्या मुखेन नग्नं लग्नं द्रव्यं, सन्निपातिने दद्यादाद्रक रसेन क्वचित् मूर्च्छिते सन्निपातिनि, क्षुरेण मुर्ध्नं मुण्डयित्वा क्षतं कृत्वा दद्यात्, अङ्गुल्यग्रेण मूर्च्छितोऽपि जीवति ।

## श्रीवेतालकोरसः

रसगन्धामृतं तालं मरिचञ्च समांशकं ।
मर्द्दयेत् शिलया तावद्यावज्जायेत कज्जलं ॥
गुञ्जाद्वयप्रमाणेन, चाद्रकस्य रसेन च ।
साध्यासाध्यं निहन्त्याशु सन्निपातं त्रिदोषजं ॥
ईशेनोक्तोन्त गुह्यतमो, वेतालाख्यो महारसः ।
चलिते चेन्द्रियग्रामे, विधिना विनियोजयेत् ॥
स्थाने स्वदोषदुष्टेषु, मोहग्रस्थेषु रोगिषु ।
एष वेतालकोनाम यमदूतनिवारकः ॥

रस १ टका, गन्धक १ टका, विष १ टका, शुद्ध हरिताल १ टका, मरिच १ टका, शीलान्ले मर्द्दयित्वा, कज्जलतुल्यं कृत्वा ततो द्विगुञ्जा प्रमाण वटिका कार्य्या

## सर्व्वज्वरहरलौहम्

चित्रकं त्रिफला व्योपं विड़ङ्गं मुस्तकन्तथा ॥
श्रेयसी पिप्पलीमूलमुशीरं देवदारुकं ।
किरातत्तिक्तकं वालं (पाठा) कटुकि कण्टकारिका ॥
शोभाञ्जनस्य वीजानि मधुकं वत्सकं समम् ।
लौहतुल्यां गृहीत्वा तु वटिकां कारयेद् भिषक् ॥
सर्व्वज्वरहरं लौहं, सर्व्वज्वरविनाशनम् ।

वातिकं पैत्तिकञ्चैव, श्लैष्मिकं सान्निपातिकम् ।
द्वन्द्वजं विषमाख्यन्तु, धातुस्थञ्च ज्वरं जयेत् ॥
शीतकम्प विषं दाहं, घर्म्मञ्चैव तथा वलिं ।
हृल्लासारुचितन्द्रा च कामश्वासज्वरं जयेत् १८॥

चितामूल, त्रिफला, त्रिकटु, विड़ङ्ग, मथा, हरीतकी, पिपलीमूल, विरिणामूल, उभैकाठ, कटुकितिता, माहतिता, सुगन्धवाला, कण्टकारी, चजिनागुटी, यष्टिमधु, कुटजगुटी एषां मिलि समभागे चूर्णं, सर्व्वसमं लौहः, चनकमात्रा बाटि जलेन पिष्ट्वा, मधुना देया ।

## पञ्चाननोरसः

शम्भोः कण्ठविभूषणं ममरिचं दैत्येन्द्ररक्तं रविः ।
पचौ सागरलोचनौ शशियुतं (युगं) भागोर्क संख्यान्वितः ।
खल्वेतत् परिमर्द्दितं रविजलैर्गुञ्जैकमात्रं ददेत् ।
सिद्धोऽयं (सिंहोयं) ज्वरदन्तिदर्पदलनः पञ्चाननाख्योरसः ॥

शुद्ध विष २ टका, मरिच ७ टका, हिङ्गुल २ टका, तामजारण १ टका, अर्कमूलरसेन, गुञ्जा प्रमाण बटिका कार्य्या ।

## ज्वराशनिरसः

गन्धं रसं सैन्धवञ्च, विष ताम्र सम समं ।
सर्व्वचूर्णसमं लौहं तत् समं शुद्धमभ्रकम् ॥
लौहे च लौहदण्डे च निर्गुण्ड्याः स्वरसेन च ।
मर्द्दयेद्यत्नतः पश्चान्मरिचं सूततुल्यकम् ॥

---

१८ । शीतं कम्पं तृषा दाहं घर्म्मश्रुतिवमिभ्रमान् ।
रक्तपित्तमतीसारं मन्दाग्निं कासमेव च ।
प्लीहानं यकृतं गुल्मं आमवातं सुदारुणम् ।
अर्शांसि घोरमुदरं मूर्च्छां पार ' हलीमकम् ॥
अजीर्णं ग्रहणीञ्चैव यक्ष्माणं शोथमेव च ।
बल्यं वृष्यं पुष्टिकरं सर्व्वरोगनिसूदनम् ॥
सर्व्वज्वरहरं लौहं चन्द्रनाथेन भाषितम् ॥ •

रसेन्द्रसारसंग्रहे इत्यधिकः पाठः ।

पर्णेन सह दातव्यं, रसं रक्तिकसान्निभं ।
सर्व्वज्वरहरः श्रेष्ठः ज्वराशनिरुदाहृतः ॥
कासश्वासमहाघोरं, विषमाख्यज्वरं वमिम् ।
धातुस्थं ज्वरसन्दाहं, जयेद्दोषत्रयोद्भवम् ।

रस १ टका, गन्धक १ टका, विष १ टका, ताम्र १ टका, सर्व्वसमं लौहं मारिताभ्रं लौह समं, मरिच चूर्णं रसतुल्यं लौहपात्रे लौहदण्डेण मर्द्दयित्वा निर्गुण्ड्या स्वरसं दत्त्वा गुञ्जाप्रमाण वटिका कार्य्या पर्णेन दातव्यं ।

## चण्डेश्वरोरसः

रसं गन्धं विषं ताम्र, मर्द्दयेदेकयामतः ।
आद्रकस्य रसेनैव, मर्द्दयेत् सप्तवारकं ॥
निर्गुण्ड्याः स्वरसैः पश्चात् मर्द्दयेत् सप्तवारकं ।
गुञ्जैकाद्ररसेनैव, दत्तो हन्ति ज्वरं क्षणात् ।
वातजं पित्तजं श्लैष्मं, त्रिदोषमपि तत्क्षणात् ॥
सुशीतलजले स्नानं तृषार्त्ते क्षीरभोजनम् ॥
आम्रञ्च पनसञ्चैव, चन्दनागुरुलेपनम् ।
एतत् समो रसो नास्ति, वैद्यस्य हृदयङ्गमः ।
एष चण्डेश्वरो नाम सर्वज्वरकुलान्तकृत् ॥

रस १, गन्धक १, अमृत १, ताम १, समभाग करि आदा रसेर भावना दिव ७ वार, पचतीयार रसेरे ७ वार रति प्रमाणे वरि, आदारस अनुपान ।

## मृतसञ्जीवनी

विषं त्रिकटुकं गन्धं टङ्कनं मृतशुल्वकं ।
धुस्तुरस्य च वीजानि, हिङ्गुलं नवमं स्मृतं ॥
एतानि समभागानि, दिनैकं विजयाद्रवैः ।
मर्द्दयेच्चनकाकारा, कर्त्तव्या वटिका शुभा ॥
भक्षयित्वानुपातव्यं रविमूलकषायकं ।
मृतसञ्जीवनी नाम, सन्निपात ज्वरान्तकृत् ॥

मृतसञ्जीवनी वटिका सन्निपातज्वरे रसः ।

—रत्नप्रदीपे

त्रिकटु, विष, गन्धक, सुवगा, ताम, धुतुरागुटी, हिङ्गुल एइ नवरस समभागे चूर्ण, भाङ्गर रसेरे मर्द्दन चनक प्रमाण वरि । अर्कमूलर क्काथ अनुपान ॥

### इशोरसः १६

रसगन्धे २० मटङ्कमरिच विष धुस्तुररसद्रवैः ।
दिनं शुष्कं मर्म्मर्द्दितं पञ्चवक्त्रोरसो भवेत् ॥
आद्रकस्य रसेनैव, दातव्यो रक्तिकामितः ।
सन्निपातं ज्वरं घोर नाशयेन्नात्र संशयः ॥

एइ पञ्च द्रव्य धुतूरा गुटीर रसेरे १ दिन मर्द्दी शुकाइ १ रति प्रमाण वरि, आद्रकर रस अनुपान ।

### सौभाग्यवटी

सौभाग्यामृतजीरपञ्चलवणव्योपाभयच्चामल ।
निश्चन्द्राभ्रकशुद्धगन्धकरसानेकीकृतान् भावयेत् ॥
निर्गुण्डी, युगभृङ्गराजकवृषापमार्गपत्रोल्लसत् ।
प्रत्येक स्वरसेन सिद्धगुडिका हन्ति त्रिदोषोदयम् ॥
येषा शीतमतीव दाहविपुल ( देहमखिलं ) स्वेदद्रवार्द्रीकृत ।
निद्राघोरतरा समस्तकरणव्यामोहमुग्धं मनः ॥
शूलश्वासवलासकामसहितं मूर्च्छारुचिस्तृट् ज्वरं ।
तेषां वै परिकृत्य जीवितममौ गृह्णाति मृत्योर्गुखात् ॥ २१

सुवगा १, बिप १, जीरा १, पञ्चलवण ५, त्रिकटु ३ त्रिफला ३, अभ्र १ गन्धक १, रस १—एइ सकल समभागे लै एकत्र करि निगुण्डी स्वरसेरे भावना दिव ७ दिन, केशराजर रसेर ७ वार, भृङ्गराजर रसेरे ७ वार, वासकर रसेरे ७ वार, अपामार्गर रसेरे ७ वार ; १ रति प्रमाणे खुवाब । टानत २ रतिकै खुवाब ।

१६ । रसेन्द्रसारसंग्रहे पञ्चवक्त्रो रस ।

२० । रसो गन्धष्टङ्कनः शोषणोऽय,
फणी पिप्पलीत्येष धुस्तूरपिष्टः ॥
जयेत सन्निपातं द्विगुञ्जा प्रमाणं
मवेदाद्रकमूलाम्बुसव्योषचूर्णं ॥

२१ । तेषां वै परिहृत्य मृत्युवदनात प्रत्यानयेज्जीवनम् ॥ इति रसेन्द्रः ।

विषमज्वरे— यः स्यादनियतः कालाच्छीतोष्णाभ्यान्तथैवच ।
वेगतश्चापि विषमो ज्वरः स विषमः स्मृतः ॥ इति ।
सन्ततं सततान्येद्युस्तृतीयक चतुर्थकौ ॥
•••श्लेष्माधिक्यात् प्रायः सन्निपातजा एव चरके ।
अजाजीगुड़संयुक्ता विषमज्वरनाशिनी ।

कालजीरा २ तोला, गुड़ ४० रति दि खाव ।

## अपराजितधूपः

पुरध्याम[२२]वचासर्जनिम्बार्कागुरुदारुभिः ।
सर्व्वज्वरहरोधूपः कार्य्योऽयमपराजितः ॥

वच, गुग्गुलु, धुना, निमछाल, आगर सवारे सममागे बाटि धूप करि लव । अपराजिता धूप बोले ।

## अष्टाङ्गधूपः

पलङ्कषा[२३]निम्बपत्रं वचाकुष्ठं हरीतकी ।
सर्षपाः सयवाः सर्पिर्धूपनं ज्वरनाशनं ॥

( गुग्गुलु ) निमपात, वच, कूर, शिलिखा, सेवासरियह, यवधान, घृत सवारे सममाग करि धूप करिव ।

अपामार्गजटाकट्यां लोहितैः सप्ततन्तुभिः ।
बद्ध्वा वारे रवेस्तूर्णं ज्वरं हन्ति तृतीयकम् ॥

वनषटर शिपाक ७ गच्छ रङ्गासूतारे कटित बान्धिब रविवारे ।

मूलं जयन्त्याः शिरसा धृतं सर्वज्वरापहम् । सुगमं ।
काकमाच्यास्तु मूलन्तु कर्णे बद्ध्वा निशाज्वर ।
निहन्ति नात्र सन्देहो, यथा सूर्य्योदये तमः ।

२२ । पुरो गुग्गुलुः, ध्यामं गन्धतृणम् । इति रसेन्द्रटीकायां ।
२३ । पलङ्कषा, गुग्गुलुः ।

## अष्टादशाङ्गचूर्णम्

द्राक्षामृताशटीशृङ्गी, मुस्तकं रक्तचन्दनं ।
नागरं कटुकापाठाभूनिम्ब सदुरालभा ।
उशीरं पद्मकं धान्यं वालकं कन्टकारिका ।
पुष्करं पिचुमर्द्दश्च, दशाष्टाङ्गमिदं शुभं ॥
जीर्णज्वरारुचिश्वास, कासश्वयथुनाशनं ॥

गमारीगुटी, गुड़ूची, केतुरी, काकराशृङ्गी, मथा, रक्तचन्दन, शुगठी, कटुकि, पाठा, माहतिता, कुर्षेलता, उशीर, पद्मकाष्ठ, धनीया, सुगन्धवाला, कगटकारी, कुर, निमपात सममाग चूर्ण ।

## कणादिमोदकः

कणाचूर्ण कणाशुण्ठी त्रिवृद्दन्ती पलं पलं ।
चित्रकञ्चामृतासत्वं, समं चूर्ण प्रकल्पयेत् ॥
कर्षकं शुद्धलौहस्य, शिवधात्री च तोलकं ।
शर्करामधु संयुक्तं, कुर्य्यादक्षममान् गुड़ान् ॥
जीर्णज्वरेऽग्निमान्द्ये च, विष्टम्भे विषमज्वरे ।
ऐकाहिकं द्वयाहिकञ्च, चातुर्थकमथापिवा ॥
श्लेष्माणं पाण्डुरोगञ्च, प्लीहशोथोदराणि च ।
नवज्वरहरो वह्नि, वृद्धिकारिणी मोदकः ॥

महावलामूलमहौषधाभ्या ।
क्काथो निहन्याद्विषमं ज्वरं हि ॥
मान्तं मकम्पं परिदाहयुक्तं ।
विनाशयेत् द्वि-त्रिदिनप्रयोगात् ॥

महावला, बरवरियाल, महौषध शुगठी ।

## चन्दनादिलौहम्

रक्तचन्दनह्रीवेरपाठोशीरकणाशिवा ।
नागरोत्पलधात्रीभिः त्रिमदेन समन्वितं ।
लौहं निहन्ति विविधान् समस्तान् विषमज्वरान् ॥

रक्तचन्दन, सुगन्धवाला, विरिणा मूल, पिप्पली, हरीतकी, शुगठी, कूर, धात्री, चिता, मथा, विडङ्ग, एइ १२ द्रव्यर सममागे लौह १२ माग ।

## अथ जीर्णज्वरः

त्रिसप्ताहव्यतीते तु, ज्वरोयस्तनुतां गतः ।
प्लीहाग्निसादं कुरुते स जीर्णज्वर उच्यते ॥

एकैश दिनर पर यि ज्वर उद्धृति हय, प्लीहा, अग्निमन्द हय ताके जीर्णज्वर बोले ।

पिप्पलीचूर्णसंयुक्तः, क्वाथः छिन्नरुहोद्भवः ।
जीर्णज्वरकफध्वंसी, पञ्चमूलीकृतोऽथवा ॥

आमरि (अमर) लतार काथ करि पिप्पली चूर्ण दि खाव । भेकुरि, कगटकारी, शालनी, पिठानी गोक्षुरकटा, एइ पञ्च ।

### बृहद्गुडपिप्पली

विडङ्गं त्रिकटुहिङ्गु, कुष्ठ लवणपञ्चकं ।
द्विक्षारं फेनकं वह्निः श्रेयसी कृष्णजीरकं ॥
तालपुष्पोद्भवं क्षारं, नाड्याः कुष्माण्डकस्य च ।
गुडतुल्यं प्रदातव्यं, चूर्णञ्चैव कणोद्भवं ॥
अश्विभ्यां निर्मितं ह्येतन्मर्दनाद् गुडपिप्पली ।
खादेदनुदिनं नित्यं, प्लीहानं हन्ति दुर्जयं ॥
यकृतं पञ्चगुल्मंश्च, नानाव्याधिहरन्तथा ।
जीर्णज्वरं तथा शोथं, कासं पञ्चविधन्तथा ॥
कामलां पाण्डरोगञ्च, अग्निमान्द्यहरं परं ।
ग्रहणीजञ्च यद्रोगं बालाञ्चापि शष्यते ॥

विडङ्ग, त्रिकटु, हिङ्गु, कुर, पञ्चलवण, सर्जिखार, यवखार, समुद्रफेन, चिता, शिलिखा, कालजीरा, तालफुलर खार, कोमोरारठारिर खार, बनपटर खार सबारे सममागे चूर्ण यतेक, पुरण गुड़ तनेक । गुडर तुल्य पिप्पली चूर्ण मिश्रित करि १ तोलाके खाव । उष्ण जलेर ।

### जीरकाद्यमोदकः

टङ्कनं वारिवाहञ्च, महता जीरकद्वयं ।
गुडूची सत्वकञ्चैवं भागं वृद्धं यथोत्तरम् ॥
गुडेन मधुनामिश्रं, मोदकं परिकल्पयेत् ।
जीरकाद्य मोदकोऽयं महादेवेन निर्म्मितः ॥

जीर्णज्वरं चिरभवं, प्लीहानं पाण्डुकामलां ।
हन्ति पित्तं तथा वातं, बलवर्णाग्निवर्द्धन ॥

मृवगा १, अभ्र २, जीरा ८, गुरुचीसत्त्व ८, घृत सर्व्वसम, मोदकबन्धनयोग्य मधु ।

### वृहज्जीरकाद्यमोदकः

जीरकं कृष्णजीरक, कुष्ठ शुण्ठी च पिप्पली ।
मरिचं त्रिफलात्वक् च, पत्रमेला च केशरं ॥
शुभालवङ्गशैलेयं, चन्दनं श्वेतचन्दनं ।
काकोलीक्षीरकाकोली, जातिकोषफले तथा ॥
यष्ठीमधुरिकामांसी, मुद्गं, शैलेयकं वचा ।
धान्यकं, देवताड़ञ्च, मुराद्राक्षाशठी तथा ।
शतपुष्पा पद्मकञ्च, मेथिका सुरदारु च ।
मजलं नालुकाचैव, सैन्धवं गजपिप्पली ।
कुन्दः प्रियङ्गुः कर्पूरं, समभागं विचूर्णयेत् ॥
लौहं वङ्गञ्चाभ्रकञ्च, द्विगुणं तत्र दापयेत् ।
एतेषां सर्व्वचूर्णानां जीरकञ्च समं मतं ॥
सिता च द्विगुणा देया, मोदकार्थं भिषग्वरैः ।
क्षीर सितासमं देय, युक्त्या च वटिवर्द्धनं ॥ ( वन्धन )
ततः पाकक्रमं ज्ञात्वा मोदकं कर्षमानतः ।
अनुपानं प्रयोक्तव्यं, दुग्धञ्चैव सशर्करं ।
अशीतीन् वातजान् रोगान्, चत्वारिंशच्च पैत्तिकान् ।
प्रदर नाशयत्याशु, वृक्षमिन्द्राशनिर्यथा ॥
नानावर्णमतीसारं, विशेषादामसम्भवं ।
शूलमष्टविधं हन्येदर्शोरोगं चिरोद्भवं ॥
जीर्णज्वरञ्च सततं, विषमज्वरमेवच ।
स्त्रीनाञ्चाप्यनपत्यानां, दुर्व्वलानाञ्च देहिनां ॥
पुत्रकृत् पुष्टिकृच्चैव, बलवर्णाग्निवर्द्धनं ।

दुइ जीरा, कुर, पिप्पली, शुयठी, मरिच, त्रिफला, दालचिनि, तेजपत्र, एलाचि, नागकेशर, वंशलोचन, लवङ्ग, शैलज रक्तचन्दन, काकोली, क्षीरकाकोली, जाइपत्री, जाइफल, मधुयष्टि, गुवामरि, मुरामांसी,

मुगमाह, बचाशैलज, धनीया, देउतरा मूल, द्राक्षा, केतुरी, शुलका, पचारचका, मिथि, देवदारु, सुगन्धवाळा नालुका, सैन्धव, गजपिप्पली, कुन्दुरखुटो, प्रियङ्गु काफुर, सबारे सममागे चूर्ण, लौहा, राङ्ग, अभ्र एइ तिनिर दुभाग, सर्व्वसम जीराचूर्ण, सबारे द्विगुण चिनि, गोक्षीर चिनिर तुल्य, कर्षप्रमाण मोदक। अनुपान— दुग्ध, चिनि विशेषेण मन्दाग्नौ प्रशस्तः॥

## बृहत्षट्कट्वरतैलम्२४

कृष्णाचित्रकषड्ग्रन्था, वासकं विकषायनः॥
ग्रन्थिकैले चातिविषा, रेणुकञ्च कटुत्रयम्।
यवानीगोस्तनीद्राक्षाभूनिम्बं विल्वचन्दनं॥
भार्गीश्यामोशीरं मूर्व्वा, स्थिराधात्री सजीरका।
सर्षपं हिङ्गुकटुका, विड़ङ्गञ्च समांशकं॥
एष कृष्णादिकोनाम, गणोज्वरविनाशकः॥

पिप्पली, चिता, वच, वासक, मञ्जिष्ठा, मथा, एलाचि, पिप्पली मूल, आतइच, रेणुका, त्रिकटु, यमानी, द्राक्षा, चिराइता, वेलशुगठी, रक्तचन्दन, अकलविरर मूल, श्यामलता, विरिणामूल, वनरिहा, शालनी, आमलखी, मोगजीरा, मेवासरियह, हिङ्ग, कटकीनिता, विड़ङ्ग, एषां प्रति २ तोलाने तिल तैल ३ सेर, तक्र ४ सेर २ पोवा जल १२ सेर दि सिद्ध करिब।

## पिप्पल्याद्यतैलम्

पिप्पलीमुस्तधान्याकं, सैन्धवं त्रिफलान्यथ।
यमानी चाजमोदाच, चन्दनञ्च पुराणि च॥
पठीद्राक्षागवाक्षि च, शालपर्णीत्रिकन्टकं।
भूनिम्बारिष्टपत्रञ्च, महानिम्बं निदिग्धिका॥
गुड़ूची पृश्नीपर्णी च, बृहतीदन्ति चित्रकौ।
वृक्षाम्लञ्च हरिद्रे द्वे पर्पटं गजपिप्पली॥
एतेषां कार्षिकैर्भागैस्तैलप्रस्थं विपाचयेत्।
दधिकाञ्जिकतक्रैश्च, मातुलुङ्गरसैरथ॥
प्रस्थं पृथक् समेतैश्च, शनैर्मृद्वग्निना पचेत्।
सिद्धमेतत् प्रयोक्तव्यं, चिरज्वरं व्यपोहति॥
एकजं द्वन्द्वजञ्चैव दोषत्रय समुद्भवम्।
सततं सन्ततं हन्ति तृतीयक-चतुर्थकौ॥

२४। तथा च चक्रदत्ते—"दध्नः स सारकस्तात्र, तक्रं कट्वरमिष्यते।
घृतवत् तैलपाकोऽपि तैले फेनोऽधिकः परः॥

मासजं पक्षजञ्चैव, चिरज्वरं समूर्च्छितम् ।
सततं नाशयत्याशु पिप्पल्याद्यमिदं शुभं ॥

पिप्पली, मथा, धनीया, सैन्धव, त्रिफला, यबानी, आजन, रक्तचन्दन, केतुरी, द्राक्षा, गुडूची, शालपाणि, गोखुर कटा, माहतिता, निम्बपत्र, महानिम, कण्टकारो, पिठानी. भेकुरि, तेतेली, दुरहरिद्रा, पर्पट, गजपिप्पली, प्रत्येके ९ तोलाके तिल तैल १ प्रस्थ, दधि १ प्रस्थ, काञ्जि १ प्रस्थ, तक्र १ प्रस्थ दिब । सोलेश्वर रस १ प्रस्थ दि, मृदु अग्नि एरे पाक करि सिद्ध हले चेकि घहिव ।

माहतिता, मुगन्धवाला, कुटज छाल, इन्द्रयव एषा मिलि ० टका, जल ३० टका, शेष ८ टका ।

## पञ्चमूल्यादि[२५]

### व्योषादिचूर्ण

व्योष वत्सकवीजञ्च, निम्बभूनिम्बमार्कवं ।
चित्रकं रोहिणी पाठा, दार्व्वीमतिविषा समाम् ॥
श्लक्ष्णचूर्णीकृतान् सर्व्वा स्तत्तुल्या वत्सकत्वचम् ।
सर्व्वमेकत्र संयुज्य, प्रपिवेत्तण्डुलाम्बुना ॥
मक्षौद्रं वा लिहेदेतत् , पाचन ग्राहिभेषजं ।
तृष्णारुचिप्रशमनं, ज्वरातीसारनाशनं ॥
कमला ग्रहणीदोषान् , गुल्मं प्लीहानमेव च ।
प्रमेहं पाण्डुरोगञ्च श्वयथुञ्च विनाशयेत् ॥

त्रिकटु, इन्द्रयव, निमछाल, माहतिता, भृङ्गराज, चितामुल, कट्कि, आकणादि, दारुहरिद्रा, आतइच, (एषा मिलि २ तोला जल ३० तोला) कुटजछाल चूर्ण सर्व्वमेकीकृत्य तण्डुलदकेन मधुना भक्षणीयं लेह्यं ।

२५ । तथा च पाचनसंग्रहे पञ्चमूल्यादि—

पञ्चमूलबलाविश्वगुडूचीमुस्तनागरैः ।
पाठाभूनिम्बह्रीवेर, कुटजत्वक्फलैः शृत ॥
हन्ति सर्व्वानतीसारान , ज्वरदोषं वमिं तथा ।
सशूलोपद्रवं श्वासं, कासं हन्यात् सुदारुणम ॥
पञ्चमुली तु सामान्या, योज्या पैत्ते कनीयसी ।
महती पञ्चमूली तु वातश्लेष्मातुरे हिता ॥

## दशमूलशुण्ठी

दशमूलीकषायेण विश्वभेषजसमं पिबेत् ।
ज्वरे चैवातिसारे च, सशोथे ग्रहणीगदे ॥

दशमूल मिलि २ तोला, जल ३२ तोला, शेष ८ तोला प्रक्षेप शुण्ठीचूर्ण २ मशा ।

## रसाभ्रवटिका

कर्ष सूतस्य शुद्धस्य, गन्धकस्याभ्रकस्य च ।
ततः कज्जलिकां कृत्वा, व्योषचूर्णं प्रदापयेत् ॥
केशराजभृङ्गराजनिर्गुण्डीचित्रकस्य च ।
ग्रीष्मसुन्दरकस्याथ, जयन्त्याः स्वरसस्तथा ॥
मण्डूकपर्ण्याः स्वरसः, तथा शक्राशनस्य च ।
श्वेतापराजितायाश्च, स्वरसः पर्णसम्भवः ॥
रसतुल्यं प्रदातव्यं, चूर्णं मरिचसम्भवं ।
देयं रसार्द्धभागेन, चूर्णं टङ्कनसम्भवं ॥
शुद्धे पाषाणपात्रे च, घर्षणीयं प्रयत्नतः ।
शुष्कमातपसंयोगाद्गुटिकां कारयेद्भिषक् ॥
कलायसम्मितामेवं, खादेत् तां प्रत्यहं नरः ।
हन्ति कासं तथा श्वासं, वातश्लेष्मभवं रुजं ॥
एतद्वाजीकरं श्रेष्ठं, बलवर्णाग्निवर्द्धनम् ।
ज्वरे चैवातिसारे च, सिद्ध एष प्रयोगराट् ॥
नातः परतरं श्रेष्ठं, विद्यते च रसायनम् ।
चातुर्थकज्वरे श्रेष्ठं, सूतिकातङ्कनाशनं ।
दध्यवश्यं सदापथ्यं, प्राह नागार्जुनोमुनिः ।

रस २ टका, गन्धक २ टका, अभ्र २ टका, त्रिकटु ६ टका, आतपे, एभिः द्रव्यैरसैर्भावयेत् । केशराज ७, भृङ्गराज ७, पचतीया ७, श्वेत अपराजिता ७, जयन्ती ७, मानिमुनि ७, भाङ्ग ७, पर्णरस ७, पृथक भावयित्वा, मरिच चूर्ण २ तोला, सुवगा १ तोला एतैर्घृष्ट्वा, कलायप्रमाणा बटिका कार्य्या ।

## कनकसुन्दरोरसः

हिङ्गुलं मरिचं गन्धं, पिप्पलीटङ्कनं ( गगन ) विषं ।
कनकस्य च बीजानि, समांशं विजयाद्रवैः ॥

मर्द्दयेद्याममात्रन्तु, चनमात्रावटीकृता ।
भक्षणाद्ग्रहणीं हन्ति, रसः कनकसुन्दरः ॥
अग्निमान्द्यं ज्वरं तीव्रमतीसारञ्च नाशयेत् ।
दध्यम्लं दापयेत् पथ्यं, यद्वा तक्रौदनं हितं ॥

हिङ्गुल, बिष, मरिच, गन्धक, पिप्पली, अभ्र, धुस्तूर बीज, एषां प्रति समभाग चूर्णं कृत्वा भाङ्गर रसेरे मर्द्दन करि चनक प्रमाण बटिका कार्य्या ।

## ग्रहणीकपाटः

जातिफलं टङ्कनमभ्रकञ्च, धुस्तूरवीजं समभागचूर्णं ।
भागद्वयं स्यादहिफेनकस्य, गन्धालिकापत्ररसेन मर्द्द्यं ॥
चनप्रमाणां वटिकां प्रकुर्य्यात्, तां छागीदुग्धैर्ग्रहणीगदेषु ।
सामेषु रक्तेषु सशूलकेषु, पक्केष्वपक्केषु गुदामयेषु ॥
पथ्यं सदध्योदनमत्र देय रसोत्तमोऽयं ग्रहणीकपाटः ।
हन्यादतिसारगदं समग्रं कामज्वरं तीव्रमतिप्रवृद्धं ॥
असाध्यरोगग्रहणीं प्रवृद्धां शोथं तथा पाण्डुरोगं निहन्ति ।

जातीफल १ टका, सुवगा १ टका, अभ्र १ टका, धुस्तूर बीज १, काफिङ्क (आफिं) २ टका, गन्ध-भेदेलो रसेन मर्द्दयित्वा, चनक प्रमाणा बटिका कार्य्या ॥

॥ इति वैद्यकसारोद्धारे ज्वरचिकित्सोपदेशः ॥

द्वितीयः परिच्छेदः

# उदरचिकित्सोपदेशः

## ६। अथातिसारे—धान्यपञ्चकम्

धान्यकं बालकं मुस्तं नागरं विल्वमेव च।
[ धान्यकं नागरं मुस्तं बालकं विल्वमेव च ]।
आमशूलविबद्धघ्नं, पाचनं वह्निदीपनम् ॥

धान्यक, वाला, मथा, आदा, विल्वशुगठी एषां मिलि २ तोला, जल ३२ तोला, शेष ८ तोला।

केषाञ्चिन्मते धान्यचतुष्कमिति।
इदं धान्यचतुष्कं स्यात् पित्ते शुण्ठीं विना पुनः।
शुण्ठ्याः स्थानेऽभयादेया, विट्ग्रहे पित्तपाण्डुजे ॥

धनिया, शिलिखा, मथा, वाल्याल, विल्वशुगठी एषा मिलि २ तोला, जल ३२ तोला, शेष ८ तोला।

कृत्वा लवालं सुदृढं, पिष्टैरामलकैर्भिषक्।
आर्द्रकस्य रसेनाशु, पूरयेन्नाभिमण्डलम् ॥
नदीवेगोपमं घोरमतिसारं [ निरोधयेत् ] विनाशयेत्।

आमलकी कल्केन नाभौ मण्डलाकारं कृत्वा आद्रकरसेन नाभि पूरयेत्।

आम्रस्य वल्कलं पिष्टं काञ्जिकेन प्रयत्नतः।
नाभिं सलेपयेत्तेन, कल्केन मतिमान् भिषक् ॥
नदी वेगोपमं घोरमतिसारं विनाशयेत्।

आम्रवल्कलं काञ्जिकेन पिष्ट्वा नाभौ लेपयेत्।

### कुटजादिकाथः

कुटजत्वक् फलं मुस्तं, क्वाथयित्वा जलं पिबेत्।
अतिसारं जयत्याशु शर्करामधुयोजितं ॥

कुटजछाल, इन्द्रयव, मथा एषां मिलि २ टका, जल ३२ टका, शेष ८ टका, प्रक्षेप मधुशर्करा।

### कुटजावलेहः

कुटजत्वक्कृतः क्काथो घनीभूतः सुशोभनः ।
लोहितोऽति विषायुक्तः, सर्व्वातिसारनाशनः ॥१

कुटजछाल १६ पल, जल ६४ पल, शेष १६ पल, वस्त्रेण चालयित्वा, पुनः पक्का घनीभूते, अवलेह रूपं कार्य्यं आतैच चूर्णं तण्डुलोदकेन, किञ्चिन्मधुना मोक्तव्यं ।

### कुटजपाचनम्

कषायो मधुनापीतस्त्वचो दाड़िमवत्सवात् ।
सद्यो जयत्यतीसारं, सरक्तं दुर्निवारण ॥

दाड़िमछाल, कुटज छाल २ तोला, जल ३२ तोला, शेष ८ तोला ।

### विल्वाद्यवलेहः

गुड़ेन खादयेद् विल्वं रक्तातिसारनाशनं ।

अग्निदग्धं विल्वं पुरातनगुड़ेन मिश्रयित्वा खाद्यं ।

विल्व छागपयःसिद्धं सिताभाच रसान्वित ।
कलिङ्गचूर्णसयुक्त, रक्तातिसारनाशनम् ॥

विल्व शुगठी २ टका, छागदुग्ध ८ टका, जल ३२ टका, दुग्धावशेषं कार्य्यं प्रक्षेप शर्करा, शिमल आठा, इन्द्रयव चूर्णं प्रक्षिप्य पेयं ।

### कुटजपुटपाकः

स्निग्धं घनं कुटजवल्कमजन्तु जग्ध-
मादाय तत्क्षणमतीव च पोथयित्वा
जम्बुपलाशपुटतण्डुलतोयसिक्तं,
वद्धं कुशेन च वहिर्घनपङ्कलिप्तं,
सुस्विन्नमेतदवपीड्य रसं गृहीत्वा,
क्षौद्रेण युक्तमतिसारवतांप्रदद्यात् ॥

१ । तथाच चक्रदत्त ॥ आमपक्वक्रमं हित्वा नातिसारे क्रियायतः ।
अतः सर्व्वातिसारेषु, ज्ञेयं पक्वामलक्षणम् ॥

कृष्णात्रिपुत्रमतपूजित एष योगः,
सर्व्वातिसारहननान् स्वयमेव राजा ॥

काचा कुटज छाल ४ टका, तण्डुल जलदि खुन्दि, जाम्बु (पलास) पातेरे मेराइ, कुशेरे बान्धि, बोकालिपि पुरिब, पाचे चेपि रस लब, मधुदि खुवाब।

## कुटजाष्टकः

तुला२मथार्द्रां गिरिमल्लिकायाः, संक्षुद्य पक्त्वा रसमाददीत।
तस्मिन् सुपुते पलसन्मितानि, श्लक्ष्णानि पिष्ट्वा सह शाल्मलेन ॥३
पाठां समङ्गातिविषां समुस्तां, विल्वञ्च पुष्पाणि च धातकीनां।
प्रक्षिप्य भूयो विपचेत्त तावद्, दर्वीप्रलेपः स्वरसस्तु यावत् ॥
पीतस्त्वसौ कालविदाजलेन, मण्डेन वाऽजापयसाथवापि।
निहन्ति सर्व्वन्त्वतिसारमुग्रं, कृष्णं सितं लोहितपीतकं वा ॥
दोषं ग्रहण्या विविधञ्च रक्तं शूलं तथार्शांसि सशोणितानि।
असृग्दरञ्चैवमसाध्यरूपं, निहन्त्यवश्यं, कुटजाष्टकोऽयं ॥

कुटजछाल १०० पल १२।० सेर, जल ६४ सेर, शेष १६ सेर बस्त्रेण गालयित्वा, पुनःपक्व घनीभूते, शिमलु आठा, पाठा, बराहक्रान्ता, मजाठि, आतैच, मथा, विल्वशुण्ठी, धाइफुल एषां मिलि ८ तोला, एतानि निक्षिप्य लेहवत् पाकं कृत्वा, तोलक प्रमाणे भक्षणं कार्य्यं।

## जातीफलादिः

जातीफलं त्रिदशपुष्पसमन्वितञ्च,
जीरं सटङ्कनयुतं, चनकप्रमितं।
एतानि माक्षिक-मितासहितानि लिढा ;
ह्यामातिसारमखिलं विनिहन्ति शूलं ॥

जातीफल १ टका, लवङ्ग १ टका, भोगजीरा १ टका, टङ्कन १ टका, चनक प्रमाणा वटिका कार्य्या मधुना खाद्यं।

२। तुलाद्रव्ये जलं द्रोणो, द्रोणे द्रव्यतुलामता ॥ इति चक्रदत्तः

३। स्वरसस्य गुरुत्वेन, पुटपाकपलं पिबेत्।
पुटपाकस्य पाकोऽयं, बहिरारक्तवर्णता ॥ इति चक्रदत्तः।

## लघु गङ्गाधरचूर्णम्

मुस्तमिन्द्रयवो विल्वं लोध्रमोच रसस्तथा ।
धातकीं चूर्णयेत् श्लक्ष्णं, गुड़ाढ्यं पाययेत् सुधीः ॥
सर्व्वातिसारशमनं विरुणद्धि प्रवाहिकां ।
लघुगङ्गाधरंचूर्णं, ग्रहणीनाशनं परं ॥

मथा, इन्द्रयव, बेलशुयठी, भूमलति छाल, शिमलु आठा, धातकी, एषां प्रति समभाग चूर्णं, तण्डुल-जलमनुपानं ।

## वृहद्गङ्गाधरचुर्णम्

मुस्तको विल्वशुण्ठीभिः, धातकीलोध्रवासकैः ।
विश्वामोचरसाभ्याञ्च, पाठेन्द्रयववत्सकैः ॥
आम्रवीजमतिविषालज्जालुरिति चूर्णितैः ।
क्षौद्रतण्डुलपानीयपीतैर्य्याति प्रवाहिका ।
सर्व्वातिसारग्रहणीपीतैर्य्याति प्रवाहिका ॥
वृहद्गङ्गाधरं चूर्णं, सरिद्वेगोऽपि बन्धनं ॥

मथा, बेलशुयठी, धाइफुल, भूमलति, वासक, आदा, शिमलु आठा, पठा, इन्द्रयव, कुटज छाल, आमगुटो, आतैच, नागिनी, मुरवन्धा, आलु एषां प्रति समभाग चूर्णं तयडुलजल मधुमिश्रयित्वानुपेयं ।

## आनन्दभैरवः

दरदं मरिचं कृष्णावत्सनाभञ्च टङ्कनं ।
चूर्णयेत् समभागेन, रसोह्यानन्दभैरवः ॥
गुञ्जैकां वा द्विगुञ्जाम्वा, वलं ज्ञात्वा प्रयोजयेत् ।
मधुना लेहयेच्चानुकुटजस्य फलत्वचौ ॥
रसोऽयं दत्तमात्रेण, त्रिदोषानातिसारजित् ।
दध्यन्नं दापयेत् पथ्यं, सत्तग्जं तक्रमेव वा ॥
पिपासायां जलं पीतं, विजय चाहिताशिनी ।

शुद्ध हिङ्गुल, शुद्ध बिष, मरिच, टङ्कन, पिप्पली, एषां समभागं जलेन पिष्ट्वा, गुञ्जा प्रमाण बटिका कार्य्या । तक्रेण भक्ष्यं ।

ज्वरातिसारोक्तं जातीफलाद्या अत्र योज्याः ।

वालं विल्वं गुड़ं तैलं पिप्पलीं विश्वभेषजं ।
लिह्याद्वाते प्रतिहते, सशूलः सप्रवाहिकः ॥

बिल्व, पुरणि गुड़, तिलतैल, पिप्पली, शुगठीचूर्ण समभागं कृत्वा लेहयेत ।

पयसा पिप्पलीकल्कः पीतो वा मरिचोद्भवः ।
त्र्यहात् प्रवाहिकां हन्ति, चिरकालानुबन्धिनीं ॥

दुग्ध ८ टका, पिप्पलीकल्क १ टका, अथवा मरिचचूर्ण १ टका मिश्रयित्वा खाद्यं

स्नानावगाहमभ्यङ्ग गुरुस्निग्धातिभोजनं ।
व्यायाममग्निसन्तापमतिसारी विवर्जयेत् ॥

॥ इति वैद्यकसारोद्धारे अतिसाराधिकारः ॥

## ७ । अथ ग्रहण्यां

ग्रहणीरोगिणं तक्रं, दीपनं ग्राहिलाघवं ।

ग्रहणीरोगतो तक्रहित, अग्नि बाढे, मल संग्रह करे, तत्काले आहार जीर्ण करे ।

नागरातिविषामुस्तक्वाथः सामविपाचकः ।

आदा, आतैच, मथा एषां मिलि २ तोला, जल ३२ तोला, शेष ८ तोला ।

### श्रीफलादिः

श्रीफलशलाटुकल्को, नागरचूर्णेन मिश्रितः सगुड़ः ।
ग्रहणीगदमत्युग्रं तक्रभुजाशीलितो जयति ॥

बिल्वशुगठीचूर्ण २ तोला, आदाशुगठीचूर्ण १६ रति पुरणिगुड़ २४ रति दि खाव ।

### कुटजावलेहः

गिरिमल्ल्याः पलशतं जलद्रोणे विपाचयेत् ।
तेन पादावशेषेण, शर्करापलविंशतिं ॥
दत्त्वा पक्त्वा लेहपाकं, चूर्णानि च विनिक्षिपेत् ।
पाठासमङ्गाबिल्वञ्च, धातकीमुस्तकन्तथा ।
दाडिमातिविषाविश्वं, लोध्रं शाल्मलीवेष्टकं ॥

रसाञ्जनं धान्यकञ्च उशीरं बालकन्तथा ।
प्रत्येकमेषान्तु पलं, निक्षिपेत् पाकविद्भिषक् ॥
शीते च मधुशंस्नात्र, कुड़वार्द्धं विनिक्षिपेत् ।
सर्व्वरूपमतिसारं ग्रहणी सर्व्वरूपिणी ॥
रक्तश्रुति ज्वरं शोथं वमिमर्शो गदन्तथा ।
अम्लपित्तं तथा शूल, चाग्निमान्द्यं नियच्छति ॥

कुटजछाल १०० पल, जल २४ सेर, शेष ६ सेर, चेनि १० पल लेहपाकार्थें, प्रक्षेप, पाठा, वराहक्रान्ता, वेलशुयठी, धाइफुल, मथा, डाड़िमवाकलि, आतैच । शुगठी, भूमलति छाल, शिमलु आठा रसाञ्जन धनिया, विरिणामूल, वाला एषां प्रतिचर्ण १ पल, शीते मधु १ पल प्रक्षेपः ।

## महागङ्गाधरचूर्णम्

विल्वं मोचरसं पाठाधातकीधान्यमेव च ।
समङ्गानागरं मुस्तं तथैवातिविषासमम ॥
अहिफेनं लोध्रकञ्च डाड़िमं कुटजन्तथा ।
पारदं गन्धकञ्चैव, समभागं विचूर्णयेत् ॥
तक्रेण भक्षयेत् प्रातः, चूर्णं गङ्गाधरं महत् ।
ज्वरमष्टविधं हन्यादतिसारं सुदुस्तरं ॥
ग्रहणी विविधञ्चैव, कोष्ठव्याधिहरं पर ।

विल्वशुयठी, शिमलुआठा, धाइफुल, धनिया, मजाठि, शुगठी, मथा, आतैच, काफिङ्ग, भूमलतिछाल, डाड़िमफल, कुटजछाल, रस, गन्धक, एषां प्रति समभागं तक्रेण भक्ष्यं ।

अतिसारे पूर्व्वोक्त जातिफलाद्या वटिकाऽत्र कर्त्तव्या ।

## नृपतिवल्लभोरसः

जातीफललवङ्गाब्दत्वगेलाटङ्करामठं४ ।
जीरकं तेजपत्रञ्च, यमानीविश्वसैन्धवाः ॥
लौहमभ्रं रसोगन्धस्ताम्रं प्रत्यकशः पलम् ।
मरिचं त्रिपलं५ दत्वा छागीदुग्धेन पेषयेत् ॥

---

४। नृपतिवल्लभे अब्दो मुस्तकं ।

५। मरिचं द्विपलमिति रसेन्द्रसारे पाठः ।

धात्रीरसेन वा पेष्यं वटिकां कारयेद्भिषक् ।
वदरास्थिप्रमाणेन, वटिकां कुरु यत्नतः ॥
श्रीमद्गहननाथेन विचिन्त्य परिनिर्म्मितः ।
सूर्य्यवत्तेजसा चायं, रसोनृपतिवल्लभः ॥
अष्टादशवटी खादेत्, पवित्रः सूर्यदर्शकः ।
हन्ति मन्दानलं सर्व्वमामदोषं विसूचिकां ॥
प्लीहगुल्मोदरानाह, यकृत्पाण्डुहलीमक ।
हृत्शूलं कण्ठशूलञ्च, चक्षुःशूलञ्च कामल ॥
शिरःशूलं कटिशूलमानाहमष्टशूलकं ।
कासं श्वासं वमिं हिक्कां, श्लीपदं शोथमर्व्वुदं ॥
गलगण्डं गण्डमालामम्लपित्तञ्च दारुण ।
कृमिं कुष्ठान् निहन्त्याशु, वातरक्तं भगन्दरं ॥
उपदंशमतिसारं ग्रहण्यर्शः प्रमेहकं ।
अश्मरी मूत्रकृच्छ्रञ्च मूत्राघातान् त्रयोदश ॥
जीर्णज्वरं ज्वरं घोरं तन्द्रालस्य कृमि ( वमि ) भ्रमं ।
दाहविद्रधिहिक्काञ्च, जड़गद्गदमूकतां ॥
वाधिर्य्यं स्वरभेदञ्च, ब्रध्नबृद्धिविसर्पकान् ।
उरुस्तम्भं रक्तपित्तं, गुदभ्रंसारुचितृषं ॥
कर्णनासामुखोत्थांश्च, दन्तरोगञ्च पीनसं ।
स्थौलञ्च श तपित्तञ्च, स्थावराणि विषाणि च ॥
वातपित्तकफोत्थांश्च द्वन्द्वजान् सान्निपातिकान् ।
सर्व्वरोगापहं ख्यातं चण्डांशुरिव पापहा ॥
बलवर्णकरोहृद्य, आयुष्यो वीर्य्यवर्द्धनः ।
परं वाजीकरः श्रेष्ठः, पटुदो मन्त्रसिद्धिदः ॥
अरोगी दीर्घजीवी स्याद् रोगी रोगाद्विमुच्यते ।
रसस्यास्य प्रसादेन वुद्धिमान् जायते नरः ॥

जातीफल ८ टका, लवङ्ग ८ टका, मथा ८ टका, दालचिनि ८ टका, टङ्कन ८ टका, हिङ्गु ८ टका, भोगजीरा ८ टका, तेजपत्र ८ टका, यनी ८ टका, शुण्ठी ८ टका, सैन्धव ८ टका, लौह ८ टका, अभ्र ८ टका, रस ८ टका, गन्धक ८ टका, ताम्र ८ टका, मरिच चूर्ण २४ टका, धात्रीरसेन पिष्ट्वा वटिका कार्य्या ।

तारमित्येकशः पलमिति केचिद् वदन्ति ।

## महागन्धकं

रसगन्धकयोर्ग्राह्यं, कर्षमेकं सुशोधितं ।
ततः कज्जलिकां कृत्वा, मृदुपाकेन साधयेत् ॥
जातीफलं तथा कोधं, लवङ्गारिष्टपत्रके ।
एतेषां कर्षमात्रेण, चूर्णेण सह मर्द्दयेत्६ ॥
मुक्तागृहे पुनः स्थाप्यं, पुटपाकेन साधयेत् ।
गुञ्जाद्वयप्रमाणेन७ वटिकां कारयेद्भिषक् ॥
एतत् प्रोक्तं कुमाराणां रक्षणाय महौषधं८ ।
अर्शोघ्नं९ दीपनञ्चैव बलवर्ण प्रसाधनं ॥
दुर्व्वारग्रहणीरोगं जयेच्चैव प्रवाहिकां ।
सूतिकाञ्च जयेदेतदपि वैद्यविवर्ज्जितं ॥
श्वासकासातिसारघ्नं वाजीकरणमुत्तमं ।
बालरोगं निहन्त्याशु सर्व्वोपद्रवसंयुतं ॥
पिशाचा दानवा दैत्या बालानां व्याधिकारकाः ।
यत्रौषधवरस्तिष्ठेत्तत् सकासं न यान्ति ते ॥
बालानां गदयुक्तानां स्त्रीणाञ्चापि विशेषतः ।
महागन्धमेतद्धि सर्व्वव्याधिनिसूदनम् ॥

रस २ तोला, गन्धक २ तोला, द्वयो कज्जलिकां कृत्वा शम्बुकचक्रेण धृत्वा, पर्पटीकां किञ्चित् पक्त्वा तत् उद्धृत्य जाइफल, जाइत्री, लवङ्ग निम्बपत्र, प्रत्येक २ तोला लइ, जल दि मर्द्दन करि, पङ्क प्राय करि, शीलातकद्वयमध्ये स्थापयित्वा, सूत्रेरे मेराइ, मृत्तिका वस्त्रेरे लेपि शुकाइ गोशुयठीत पुरिव, रक्तवर्ण हले आनि दुरति प्रमाणे वरि बान्धिव ।

## पञ्चामृतपर्पटी

अष्टौ गन्धकतोलकं रसदलं१० लौहं तदर्द्धं शुभं
लौहार्द्धञ्च वराभ्रकं सुविमलं ताम्रं तथाभ्रार्द्धकं ॥

६। सिन्धुवारदलञ्चैव एलाबीजं तथैव च। इत्यपि रसेन्द्रसारे।
७। गुञ्जाष्टक प्रमाणेन इति पाठः रसेन्द्रसारे।
८। घनपङ्के बहिर्लिप्त्वा, पुटमध्ये निधापयेत्—रसेन्द्रः।
९। ज्वरघ्नमिति रसेन्द्रे पाठ.।
१०। दलं अर्द्धभागत्वमिति रसेन्द्रः।

पात्रे लौहमये च मर्द्दनविधौ चूर्णीकृतश्चैकतो,
दर्व्व्या बादरवह्निना च मृदुना, पाकं विदित्वा दले।
रम्भाया लघुचालयेत् पटुरियं पञ्चामृतापर्पटी।
ख्याता क्षौद्रघृतान्विता प्रतिदिनं गुञ्जाद्वयं वृद्धितः।
लौहे मर्द्दनयोगतः सुविमलं भक्तक्रिया लौहवत्;
गुञ्जाष्टावथ माषकं११ त्रिचतुरः सप्तद्वयं वा रुजः॥
नानावर्णग्रहण्यामरुचिसमुदये दुष्टदुर्नामकादौ।
छर्द्या' दीर्घातिसारे ज्वरभवकलितं रक्तपित्ते क्षयेपि।
वृष्याणां वृष्यकारी वलिपलितहरानेत्ररोगैकहन्त्री।
तत्स्थं१२ दीप्तस्थिराग्निं पुनरपि नवकं रोगिदेहं करोति॥

गन्धक ८ तोला, रस ४ तोला, लोहा २ तोला, अभ्र १ तोला, ताम्र १० रति, सर्व्वाणि मर्द्दयित्वा रसपर्पटीवत् पाकः कार्य्यः।

## पञ्चामृतलौहं

लौहं ताम्रं समं चाभ्रं, पारदं गन्धकन्तथा।
त्रिकटुत्रिफलामुस्तं विडङ्गं चित्रकं कणा॥
कैरातं देवकाष्ठञ्च हरिद्राद्वयं कुष्ठकं।
यमानीजीरकं युग्मं, शटीधान्यकचव्यकं॥
लौहतुल्यं समाख्यातं, श्लक्ष्णचूर्णानि कारयेत्।
सर्व्वचूर्णार्द्धसंयुक्तं, संशुद्धं लौहकीट्टकं॥
गोमूत्रे पाचयेद्वैद्यो लौहाष्टगुणितं तथा।
पुनर्णवाष्टगुणितं क्वाथं दत्वा विपाचयेत्॥
आत्मनः शोभने चन्द्रे, पूजयित्वा द्विजं गुरुं।
मासमेकं ततो लेह्यं, कोकिलाद्यनुपानतः॥
ग्रहणीं चिरजां हन्ति, सशोथं पाण्डुकामलां।
अग्नेश्च कुरुते दीप्तिं, ज्वरमाशु व्यपोहति॥

११। गुञ्जाष्टावाथवा त्रिकं त्रिगुणितं सप्ताहमेवं भजेत। इति रसेन्द्रसारे पाठः।
१२। तत्स्थमिति रसेन्द्रे पाठः।

प्लीहानं यकृतं गुल्ममुदरञ्च विशेषतः ।
कासं श्वासं प्रतिस्यायं, बलपुष्टिविवर्द्धनं ।
पञ्चामृतमिदं लौहं सर्व्वव्याधिविनाशकृत् ॥

लौह १ टका, ताम्र १ टका, अभ्र १ टका, रस १ टका, गन्ध १ टका, त्रिकटु ३ टका, त्रिफला ३ टका, मथा १ टका, विड़ङ्ग १ टका, चिता १ टका, पिपली १ टका, माहतिता १ टका, छचे १ टका, हरिद्रा १, दारुहरिद्रा १, क़र १, यमानी १, द्विजीरा २, शठी १ टका, धनिया १ टका, चै १ टका, शुद्ध मण्डूर १३ तोला, गोमूत्र ८ भाग, पुनर्णवा काथ ८ भाग शीने मधु १ पल ।

## नायिकाचूर्णं

चित्रकं त्रिफलाव्योषं विड़ङ्गं रजनीद्वयं ।
भल्लातकं यवानीञ्च हिङ्गुलवणपञ्चक ॥
गृहधूमो बचाकुष्ठमुस्तमभ्रकगन्धकं ।
क्षारत्रयाजमोदा च पारदं गजपिप्पली ॥
अमीषां गुड़कं यावत्तावत् शक्राशनस्य च ।
अभ्यर्च्चय नायिका प्रातर्य्योगिनी कामरूपिनी ॥
विड़ालपदमात्रञ्च भक्षयेदस्य गुड़क ।
मन्दाग्निकासदुर्नाम प्लीहपाण्डुज्वरापहं ।
प्रमेहशोथविष्टम्भसंग्रहग्रहणीहरः ॥
सर्व्वातिसारशमनः सर्व्वशूलविनाशनः ॥
आमवातगदच्छेदी सूतिकाटङ्कनाशनः ।
न तस्मिन् व्याधयः सन्ति वातपित्तकफोद्भवा ।
काष्ठमप्युदरे यस्य भक्षणाद्याति भष्मतां ।
व्यायामञ्च व्यवायञ्च स्नापन शीतभोजनं ।
काञ्जीकाम्लं सदा पथ्यं दग्धमीन पयोदधि ॥
तस्मादसौ सदा सेव्यो गुड़को नायिकाकृतः ।

चितामूल, त्रिफला, त्रिकटु, विड़ङ्ग, हरिद्राद्वय, भल्ला, यमानी, हिङ्गु, पञ्चलवण, गृहधूम, वच, कुष्ठ, मथा, अभ्र, गन्धक, यवक्षार, स्वर्जिकाक्षार, सुवगा, अजमोदा, रस, गजपिप्पली, एतां प्रति समभागचूर्ण, सर्व्वचूर्णसम भाङ्गचूर्ण, तदद्द्लोदकेन मोक्तव्यं ।

## सूतसुन्दरः

शुद्धसूतं मृतञ्चाभ्रं गन्धकं मर्द्दयेत् समं ।
लौहपात्रे घृतं दत्वा क्षणं मृद्वग्निना पचेत् ॥

चालयेल्लौहदण्डेन, चावतार्य्यं विभावयेत् ।
त्रिदिनं जीरकक्काथैर्माषैकं भक्षयेत्ततः ॥
ग्रहणी शान्तिमायाति सर्व्वोपद्रवसंयुता ॥

रस १, गन्धक १, अभ्र १, एतानि समभागं कृत्वा लौहपात्रे कियदुष्णं कृत्वा, त्रिदिनं विजया—पत्ररसेन भावयेत् । जीरक काथानुपानेन भक्ष्यं ३ रति प्रमाणं ।

## जातीफलाद्यचूर्णं

जातीफलं सर्जरसं, धातक्यतिविषाभ्रकं ।
जीरकं शाल्मलीश्चैवमहिफेनं सटङ्कनं ॥
एलावीजं मुस्तकञ्च लवङ्गं तेजपत्रकं ।
वीजपूरकविल्वञ्च दाड़िमं कुटजस्य च ॥
वीजमेषाञ्च संग्राह्यमुशीरं बालकन्तथा ।
एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत् ॥
खादेच्छानमितं प्रातः छागीदुग्धसमेन च ।
नानावर्णमतिसारं संग्रहग्रहणीहरं ॥
अग्निञ्च कुरुते दीप्तं धातुपुष्टिप्रदं शिवं ।
तृष्णादाहं ज्वरं शूलं, कोष्ठामयनिसूदनम् ॥
चूर्णं जातीफलं नाम अतिसारे सुपूजितं ॥

जायफल, धुना, धाइफुल, आतैच, अभ्र, मोगजीरा, शिमलु आठा, काफिङ्ग, सुबगा, एलाचि, मथा, लवङ्ग, तेजपत्र, सोलेङ्ग, बेलशुंठी, दाड़िम, कुटजगुठी, विरिणा, मगन्धवाला—प्रत्येक सममाग चूर्ण, प्राते ४० रति प्रमाणे छागीदुग्ध ( समाने ) मिहलाइ खाव ।

## लवङ्गाद्यचूर्ण

लवङ्गातिविषामुस्तं विल्वं पाठा च शाल्मली ।
तज्जयेद्ग्रहणी दुष्टं मन्दाग्निमपिदारुणं ॥
नानातिसारशमनं, सग्रहग्रहणीहरं ।

लवङ्ग, आतैच, मथा, पाठा, बेल, शिमलु आठा सबार सममागे चूर्ण करि, ४० रतिके खाव, उपकारकेरे ।

## कामेश्वरमोदकः

सम्यक्मारितमभ्रकं कट्फलं कुष्ठाश्वगन्धामृता ;
मेथी-मोचरसो विदारी-मुषली-गोक्षुरकः क्षीरकः ।
भीरुश्चैव कसेरुकं यमनिका-तालाङ्कुरं धान्यकं,
यष्टिनागवला, तिलामधुरिका जातिफलं सैन्धवं ॥
भार्गी कर्कटशृङ्गकं त्रिकटुकं जीरद्वयं चित्रकं ।
चातुर्य्यात-पुनर्णवा-गजकणा-द्राक्षाशठी-वासकं ।
शाल्मल्यङ्घ्रि,फलत्रिकं, कपिभवबीजं समं चूर्णयेत्,
चूर्णांशाविजया मिता द्विगुणितामध्वाज्य मिश्रं ततः ॥
कर्षार्द्धं गुड़िकाऽथ कर्षमथवा सेव्या सदा सर्व्वदा ।
पेया क्षीरशीताम्बुवीर्य्यकरणे स्वस्थेऽप्यलं कामिनां ॥
रामावश्यकरः सुखातिसुखदः प्रौढ़ाङ्गनाद्रावकः ।
क्षीणे पुष्टिकरः क्षयं क्षयहरो नानामयध्वंसकः ।
कासश्वासमहातिसारशमनो मन्दानलोद्दीपनः ।
दुर्नाम ग्रहणीहरः स्वरकरः, पित्तप्रमेहापहः ॥
नित्यानन्दकरो विशेष कविताावाचां विलासोत्तरैः,
धत्ते सर्व्वगुणं महा-स्थिर-यशो ध्यानावधानेऽप्यलं ।
अभ्यासेन निहन्ति मृत्यु-पलित-कामेश्वरो वत्सराट् ॥
वृद्धानां मदनोदयो दयकरः प्रौढ़ाङ्गनासङ्गमे ॥
सिद्धोऽयं समदृष्टिप्रत्ययकरः भूपैः सदा सेव्यते ।
दृष्टः सिद्धफलो रसायनरसः कामेश्वरो दुर्ल्लभः ॥

मारित अभ्र १, काइफल ( कट्फल ) १ कूर १, अश्वगन्धा १, आमैलता १, मिथि १, शिमलु आठा १, गजालि कोमरा ( भूइकोमरा ) १, नागिनो १, गोक्षुर कटा १, क्षीर काकाली १, शतमूल १, केहरु १, यनी १, तालघोर १, धनिया १, यष्टिमधु १, कुकुरमूता १, तिल १ गवामरि १, जातीफल १, सैन्धव १, अकलविर १, काकराशृङ्गी १, त्रिकटु ३, जोराद्वय २, आगियाचिता १, दालचिनि १, एलाचि १, तेजपत्र १, नागकेशर १, पुनर्णवा १, हातिपिप्पली १, द्राक्षा १, केतुरी १, वाहक १, शिमलुगुटी १, त्रिफला ३, वान्दरकेकोवार गुटी ( आलकुचो ) १, एतत् सममागचूर्ण अ शमागो विजया, सर्व्वचूर्ण द्विगुण चिनि घृतमधुभ्यां मोदकं कृत्वा, क्षीरसिताभ्यां तोलकमान भक्ष्य ।

कलर आठा, माह, धनिया, आजनि, सर्व्वौषधानां षोड़शांशं अभ्रं तदर्द्धं मूर्च्छितरस, रसाभावे कज्जली दातव्या, एतद् युक्तं चेत् बृहत् कामेश्वरः ।

## ग्रहणीगजेन्द्रवटिका

रसगन्धकलौहानि शङ्खटङ्कनरामठं ।
शठीतालीशमुस्तानि धान्यकं सैन्धवन्तथा१३ ॥
धातक्यतिविषाशुण्ठीगृहधूमं हरीतकी ।
भल्लातकं तेजपत्रं जातीफलं लवङ्गकं ॥
त्वगेलावालकं मेथिबिल्वं शक्राशनं समं ।
छागीदुग्धेन वटिका-रस वैद्येन कारिता ॥
गहनानन्दनाथेन श्रीमता लोकरक्षणे ।
ग्रहणीं विविधां हन्ति ज्वरातिसारनाशिनी ॥
भ्रमोन्मादाम्लपित्तानि कामलाञ्च हलीमकं ।
बलवर्णाग्निजननीसेविता च चिरायुषं ॥
कण्डूं कुष्ठं विसर्पञ्च, गुदभ्रंसं क्रिमीन् जयेत् ।
माषद्वयप्रमाणेन, छागीदुग्धानुपानतः ।
ग्रहणीगजेन्द्रसंज्ञोऽयं ग्रहणीनां कुलान्तकृत्१४ ॥

रस, गन्धक, लोहा, शङ्ख, सुवगा, हिङ्गु, केतुरी, मथा, तालिशपत्र, धनिया, सैन्धव, धाइफुल, आतैच, शुगठी, गृहधूम, हरीतकी, भला, तेजपत्र, जातीफल, लवङ्ग, दालचिनि, एलाचि, वेलशुगठी, मिथि, भाङ्ग, प्रत्येक सममागचूर्ण छागीदुग्ध दि, दुइ माप प्रमाणे बरि करिव । छागीदुग्ध अनुपान ।

## मार्कण्डेयचूर्ण

शुद्धसूतञ्च गन्धञ्च हिङ्गुलं टङ्कनन्तथा ।
कोषं जातिफलञ्चैव लवङ्गं तेजपत्रकं ॥
एलाबीजं मुस्तकञ्च चित्रकं गजपिप्पली ।
नागरं सजलं चाभ्रं धातक्यतिविषा तथा ॥

१३ । धान्यजीरकसैन्धवमिति रसेन्द्रे पाठः ।

१४ । माषद्वयां वटीं खादेत् छागीदुग्धानुपानतः ।
वटी गजेन्द्रसंज्ञेयं श्रीमता लोकरक्षणे ।
गहनानन्दनाथेन भाषितेयं रसायने ॥
शूलगुल्माम्लपित्तानि कामलाञ्च हलीमकं ।
वयोऽग्निबलमाधोद्य भुक्त्या वा त्रुटीवर्द्धनं ॥ इति रसेन्द्रे

सिग्रुकं शाल्मलीञ्चैवमहिफेनं पलाशकं ।
सिग्रुपलाशयोर्वीजमेव ग्राह्यं भिषग्वरैः ॥
एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत् ।
खादेत्तस्मात् प्रतिदिनं माषैकं सितया सह ॥
संग्रहग्रहणीं हन्ति चाग्निमान्दयञ्च नाशयेत् ।
धातुवृद्धिं वयोवृद्धिं रसपुष्टिविवर्द्धनं ।
मार्कण्डेयमिदं चूर्णं महादेवेन निर्म्मितं ॥

शुद्ध रस, शुद्ध गन्धक, हिङ्गुल, सुवगा, त्रिकटु, जातीफल, लवङ्ग, तेजपत्र, एलाचि, मथा, चिता, गजपिप्पली, आदा, सुगन्धवाला, अभ्र, धाइफुल, आतैच, चाकिनागुटी, शिमलुआठा, काफिङ्ग, पलाशगुटो, प्रत्येकर समभागचूर्ण १० रतिके, चेनि दि खाव ।

**इति वैद्यकसारोद्धारे ग्रहणीरोगाधिकारः ।**

## ८ । अथार्शोऽधिकारः

आनुपपिषितं मत्स्यं पिन्याकं दधिपिष्टकं ।
माषान् करीरं निष्पावं, विल्वं तुम्बितथैव च ॥
पक्काम्रं सर्व्वशालुकं विष्टम्भीनि, गुरूणि च ।
आतपं जलपानानि वमनं वस्तिकर्म्म च ॥
स्नेहपानमसृङ् मोक्षं नदीनां सलिलानि च ।
वेगरोधं स्त्रियं पृष्ठयानमुत्कुटकासनं ॥
यथादोषं वक्ष्यमानमर्शसः परिवर्ज्जयेत् ॥

छागमांस, बराहमांस, हरिणादिमांस, वृहन्मत्स्य, तिलवटा, दधि, गुड़विकार, पिष्टक, माष, वाहगाज, तृणधान्य, विल्व, लाउ, पक्काम्र, सकल आलु, आफुमाङ्ग, काफिङ्ग, महिषक्षीर, कलादालि, अति रौद्र, सकलो दूषित जल, वान्ति, भरणलवा, घिउ, तेलग्रहा, तेजकटा, नदोजल, विष्ठामूत्र रोधन, अतिमैथुन, हस्तिघोड़ागमन, कुटुकासन, अतिजला, अर्शरोगतो इसव नाचरिव ।

शुष्कार्शसां प्रलेपादिक्रिया तीक्ष्णा विधीयते ।
स्राविनां रक्तमालोक्य क्रियाकार्य्या च पैत्तिकी१५ ।।

शुकान अर्श बाहिरलै अल्प ओलाइले तात तीक्ष्ण लेप दिब । सिजु, आकन इयार आठारे लेप दिब । ताते यदि फाटि रक्त बहे पित्त क्रिया करिब ।

## रक्तार्शलेपः

स्नुक्क्षीर रजनीयुक्तं, लेपाद्दुर्नामनाशन ।

सिजु आठा हरिद्राद्वयोर्लेपः ।

कोषातकी१६ रजोघर्षान्निपतन्ति गुदोद्भवाः ।

कोषातकीचूर्ण गुह्यद्वारत घहिब ।

अर्शोघ्नीगुदगावर्त्तिर्गुड़घोषाफलोद्भवः ।

घोषाफलचर्ण गुड़ेन द्वयोर्लेपः ।

ज्योतिष्मतिकामूलकल्केन लेपो रक्तार्शसां हितः ।

कोबाचुटि लतामूल बटि लेप दिब ।

**विड़्बद्धे**—विड़्विबन्धे हितं तक्रं, यमानी विड़संयुतं ।

तक्र ८ तोला, यवानीचूर्ण २० रति, विड़लोण २० रति आलोड्य पेयं ।

वातश्लेष्मार्शसां तक्रात परं नास्तीह भेषजं ।
गुदजान्नाशयत्याशु, योजिता सगुड़ाभया ।।

हरीतकीचूर्णं गुड़ेन भक्षणीयं ।

तिल भल्लातकं पथ्या गुड़श्चेति समांशिककम् ।
दुर्नामकासश्वासघ्नं प्लीहपाण्डुज्वरापहं ।।

तिलभजाचर्ण ४ तोला, भल्ला ४ तोला, हरीतकीचूर्ण ४ तोला समभाग गुड़ेन भक्षणीयं ।

१५ । क्रिया-कार्य्यात्रपैत्तिकी ।। इति चक्रदत्ते पाठः ।

१६ । कोषातकी, घोषकः । इति चक्रदत्त टीकायां शिवदासः ।

## प्राणदागुड़िका

त्रिपलं शृङ्गवेरस्य चतुर्थं मरिचस्य च ।
पिप्पल्याः कुडवार्द्धञ्च चव्यायाः पलमेवच ॥
तालीशपत्रस्य पलं पलार्द्धं केशरस्य च ।
द्वे पले पिप्पलीमूलादर्द्धकर्षञ्च पत्रकात् ॥
सूक्ष्मैलाकर्षमेकन्तु कर्षं त्वगमृणालयोः ।
गुड़ात् पलानि तु त्रिंशच्चूर्णमेकत्र कारयेत् ॥
अक्षप्रमाणा गुड़िका प्राणदेति च सा स्मृता ॥
पूर्व्वं भक्ष्या तु पश्चाच्च, भोजनस्य यथाबलं ।
मद्यं मांसरसं यूषं क्षीरं तोयं पिबेत्तथा ॥
हन्यादर्शांसि सर्व्वाणि, सहजान्यस्रजानि च ।
वातपित्तकफोत्थानि, सन्निपातोद्भवानि च ।
पानात्यये मूत्रकृच्छ्रे वातरोगगलग्रहे ॥
विषमज्वरे मन्देऽग्नौ, पाण्डुरोगे तथैव च ।
क्रिमिहृद्रोगिणाञ्चैव गुल्मशूलार्त्तिना तथा ॥
श्वासकासपरीतानामेषा स्यादमृतोपमा ।
शुन्ठ्याः स्थानेऽभया देया विड्ग्रहे पित्तपायुजे ॥
प्राणदेयं सिता दत्त्वा चूर्णमानाच्चतुर्गुणा ।
अम्लपित्ताग्निमान्द्यादौ, प्रयोज्या गुदजातुरे१७ ॥

शुगठी ३ पल, मरिच १ पल, पिप्पली २ पल, चविक १ पल, तालीशपत्र १ पल, नागेश्वर ४ तोला, पिप्पलीमूल २ पल, तेजपत्र १ तोला, एलाचि १ तोला दालचिनि १ तोला, मृणाल २ तोला, पुरण गुड़ ३० पल ।

बद्धकोष्ठे शुगठीस्थाने हरीतकी देया ।
पैत्तिके चतुर्गुणा शर्करा देया ।

## शूरणपिण्डी

चूर्णीकृताः षोड़श शूरणस्य, भागास्ततोऽर्द्धेन च चित्रकस्य ।
महौषधाद्द्वौ मरिचस्य चैको, गुड़ेन दुर्नामजयाय पिण्डी ॥

शूरणचूर्ण १६ टका, चितक ८ टका, शुगठी २ टका, मरिच १ टका समगुड़ेन पिण्डं कृत्वा भक्षणीयं ।

---

१७। अनुपानं प्रयोक्तव्यं व्याधौ श्लेष्मभवे पलम् ।
पलद्वयन्तु निलजे, पित्तजेतु पलत्रयम ॥ इत्यधिकपाठः चक्रदत्ते ।

## व्योषाद्यचूर्णम्

व्योषाग्न्यरुष्करविड़ङ्गतिलाभयानां,
चूर्णं गुड़ेन गहितन्तु सदोपयोज्यम्।
दुर्नामकुष्ठगरशोथशकृद्‌विबन्धा,
नग्नेर्जयत्यवलतां क्रिमिपाण्डुताञ्च ॥

त्रिकटु ३ तोला, चित्रक १ तोला, भल्ला १ तोला, विड़ङ्ग १ तोला, तिल १ तोला, सिलिखा १ तोला। एषां चूर्णानि समगुड़ेन मिश्रयित्वा भक्षं।

## प्रकारान्तरेण व्योषाद्यचूर्णम्

शुन्ठीकणामरिचनाग१८दलत्वगेलं,
चूर्नीकृतं क्रमविवर्द्धितमूर्द्धमन्त्यात्।
खादेदिदं सममितं गुदजाग्निमान्द्य-
कामारुचिश्वसनकण्ठगदामयेषु ॥

शुयठी १ तोला, पिप्पली २ तोला, मरिच ३ तोला, नाहरफुल ४ तोला, तेजपत्र ५ तोला, एतानि समानि, सितां दत्त्वा भक्षणीयं।

## विजयचूर्णम्

त्रिकत्रयं वचाहिङ्गुपाठाक्षारनिशाद्वयम्।
चव्यतिक्ता-कलिङ्गाग्नि शताह्वालवणानि च ॥
ग्रन्थि-बिल्वाजमोदा च, गणोऽष्टाविंशतिर्मतः।
एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत् ॥
ततो विड़ालपदकं१९ पिवेदुष्णेण वारिणा।
एरण्डतैलयुक्तन्तु, सदा लिह्या ततो नरः ॥
श्वास हन्यात् तथा शोथमर्शांसि च भगन्दरं।
हृच्छूलं पार्श्वशूलञ्च, वातगुल्मं तथोदरं ॥
हिक्काश्वासप्रमेहांश्च, कामला पाण्डुरोगतां।
आमान्वगमुदावर्त्तमन्त्रवृद्धि गुदं क्रिमीन् ॥

१८। नागं नागकेशरचूर्णमिति शिवदासः

१९। बिड़ालपदकं कर्षमिति शिवदासः।

अन्ये च ग्रहणीदोषा, ये मया परिकीर्त्तिताः ।
महाज्वरोपसृष्टानां, भूतोपहतचेतसा ॥
अप्रजानान्तु नारीणां, प्रजावर्द्धनमेव च ।
विजयोनाम चूर्णोऽयं, कृष्णात्रेयेण पूजितः ॥

जालुक १ तोला, पिप्पली १ तोला, आदा १ तोला, सिलिखा १ तोला, आमलकी १ तोला, मोमोरा १ तोला, एलाचि १ तोला, दालचिनि १ तोला, तेजपत्र १ तोला, हिङ्गु १ तोला, बच १ तोला, आकलबिन्धि १ तोला, यवक्षार १ तोला, निशाद्वय २ तोला, चव्यक १ तोला, कटुकि १ तोला, कुटजरगुटी १ तोला, चित्रक १ तोला, शुल्फा १ तोला, सैन्धब १ तोला, सौवर्च्चल १ तोला, बिट् १ तोला, कर्कच १ तोला, सामुद्री १ तोला, पिप्पलीठारि १ तोला, विल्वमूल १ तोला, आजनि १ तोला, एतानि पटशोषितानि२० तोलैकमुष्णोदकेन भक्षणाय ।

## उदक-षट्पलं घृतम्

सक्षारैः पञ्चकोलैस्तु, पलिकैस्त्रिगुणोदके ।
समक्षीरं घृतप्रस्थं, ज्वरार्शः प्लीहकासनुत् ।

पिप्पली ८ तोला, पिप्पलीमूल ८ तोला, चविक ८ तोला, चित्रक ८ तोला, आदा ८ तोला, यवक्षार ८ तोला, घृत ६ पोवा ८ तोला, क्षीर घृतसम, जल ३ गुण पक्तव्यं ।

**रक्तार्शे**—शक्रक्वाथः सविल्वो वा, ।कम्वा विल्वशलाटुजः ।
योज्यं रक्तार्शसे तद्वत्, ज्योत्स्निकामूललेपनम् ॥

इन्द्रयव काथ, प्रक्षेप शुण्ठीचूर्ण, विल्वक्काथ प्रक्षेप शुण्ठीचूर्ण, कोवानुटिलतामूल लेप दिव ।

नवनीततिलाभ्यासात्, केशर-नवनीतशर्कराभ्यासात् ।
दधिसरमथिताभ्यासाद् गुदजाः शाम्यन्ति रक्तवहाः ।

तिलबाटि नवनीतेर खाव । नागकेशर नवनीत चिनि मिशाइ खाव । दधिसर मथि खाव ।

## कुटजावलेहः

कुटजत्वक्पलशतं जलद्रोणे विपाचयेत् ।
अष्टभागावशिष्टन्तु कषायमवतारयेत् ॥
वस्त्रपूतं पुनः क्काथ, पचेल्लेहत्वमागत ।
भल्लातकं विडङ्गानि, त्रिकटुत्रिफलान्तथा ॥
रसाञ्जनं चित्रकञ्च कुटजस्य फलानि च ।
वचामतिविषां विल्वं, प्रत्येकञ्च पलं पलं ॥

२० । पटशोषितानि, वस्त्रगालितानि ।

त्रिंशत् पलानि गुड़स्य, चूर्णीकृत्य निधापयेत् ।
मधुनः कुड़वं दद्याद्घृतस्य कुड़वन्तथा ॥
एष लेहः शमयति चार्शोरक्तसमुद्भवम् ।
वातिकं पैत्तिकञ्चैव, श्लैष्मिकं सान्निपातिक ॥
ये च दुर्नामजारोगास्तान् सर्व्वान् नाशयत्यपि ।
अम्लपित्तमतीसारं, पाण्डुरोगमरोचकं ॥
ग्रहणीमार्द्दव कार्श्यं, श्वयथुं कामलामपि ।
अनुपान घृतं दद्यन्मधुतक्रं जल पयः ।
रोगानीकविनाशाय, कौटजोलेह उच्यते ॥

कुटज छाल १०० पल १२॥० सेर, पाकार्थ जल ६४ सेर, शेष १६ सेर, पुरातन गुड़ ३० पल, घृत ८ पल, सिद्धे प्रलेप । भल्ला, विड़ङ्ग, त्रिकटु, त्रिफला, रसाञ्जन चित्रक, कुटजफल वच, आतैच, विल्वमूल प्रत्येक ८ तोला प्रक्षेप, शीतीभूते मधु ८ पल ।

## पञ्चाननोरसः

मृतसूताभ्रलोहानि मृतार्कगन्धकैः सह ।
सर्व्वाणि समभागानि भल्लातं सर्व्वतुल्यकं ॥
सर्व्वमेकं समादाय, द्रवैः शूरणकजैः ।
मर्द्दयेद्दिनमेकन्तु, माषमात्रं पिवेद्घृतैः ॥
भक्षणाद्धन्ति सर्व्वाणि अर्शांसि च न संशयः ।
असाध्यस्यापि कर्त्तव्या चिकित्सा शङ्करोदिता ॥
कुष्ठानि नाशयत्याशु मृत्युरोगकुलान्तकृत् ॥

मारित रस ४ तोला, शोधित गन्धक ८ तोला, अभ्र ४ तोला, लोहा ८ तोला, शोधितभल्ला २० तोला, सर्व्वमेकीकृत्य शूरणद्रवैर्मर्द्दयित्वा दिनमेकं, दशरक्तिप्रमाणा वटिका घृतेनानुपानं ।

## अष्टाङ्गोरसः

गन्धं रसेन्द्रं मृतलौहकिट्टं फलत्रयं त्र्यूषणवह्निभृङ्गं ।
कृत्वा समं शाल्मलिकागुडूचीरसेन यामत्रित्तय विमर्द्य ।
निष्कप्रमाणं गदितानुपानैः सर्व्वाणि चार्शांसि हरेत् सुपीतं ॥

रस ४ तोला, गन्धक ४ तोला, मारित लोहाकिट ८ तोला, त्रिफला १२ तोला, त्रिकटु १२ तोला, चित्रक ४ तोला, भृङ्गराज ८ तोला, सर्व्वमेकीकृत्य शाल्मलि गुडूचीरसेन दिनमेकं विमर्द्य, गुञ्जाप्रमाणा-वटिकां घृतेर्लिहेत् ।

**इति वैद्यकसारोद्धारे अर्शोऽधिकारः ।**

## ६ । अथाजीर्णे

समस्य रक्षणं कार्य्यं विषमे वातनिग्रहः ।
तीक्ष्णे पित्तप्रतीकारो, मन्दे श्लेष्मविशोधनम् ॥२१

### हिङ्ग्वष्टकं चूर्णम्

त्रिकटुकमजमोदा सैन्धवं जीरके द्वे
समधरणधृतानामष्टमो हिङ्गुभागः ।
प्रथमकवलभुक्तं सर्पिषाचूर्णमेत-
ज्जनयति जठराग्निं वातरोगांश्च हन्ति ॥

त्रिकटु, आजनि, सैन्धव, जीरा, कृष्ण जीरा, हिङ्गु एषां प्रति समभागः घृतेन भक्षणीयं ।

### अन्नमण्डगुणाः

अन्नमण्डं पिवेदुष्णं, हिङ्गुसौवर्चलान्वितं ।
विषमोपि समस्तेन, मन्दो दीप्येत पावकः ॥

अन्नमण्ड १ पल प्रक्षेप, हिङ्गु ५ रति, सौवर्चल ५ रति पेयं ।

### तीक्ष्णाग्नि चिकित्सा

नारीक्षीरेण संयुक्तां पिवेदौडुम्बरी त्वचम् ।
आभ्यां वा पायसं सिद्धं पिवेदत्यग्निशान्तये ॥

यज्ञडुम्बर छाल ४० रति, नारी दुग्धेन पेयं, तथा एताभ्यां पायसं सिद्धं भोक्तव्यं ।

यत् किञ्चिद्गुरुमेध्यञ्च, श्लेष्मकारि च भेषजं ।
सर्व्वं तदत्यग्निहितं, भुक्त्वा, प्रस्वपनं दिवा ॥

गुरु द्रव्य, माछ मांस, कफकारी अम्ल, क्षीर भोजन करि दिवसत शुव, एइ सकलत अग्नि गुचाय

मुहुर्मुहुरजीर्णेऽपि भोज्यमस्योपकल्पयेत् ।
निरिन्धनोऽन्तरं लब्ध्वा यथैनं न निपातयेत् ॥२२

२१ । इति चक्रदत्तात ।
२२ । इत्यपरार्द्धं चक्रदत्तात ।

### सैन्धवादिचूर्णम्

सिन्धूत्थ पथ्यमगधोद्भववह्निचूर्ण-
मुष्णाम्बुना पिवति यः खलु नष्टवह्निः ।
नस्यामिषेण मघृतेन वरं नवान्नं,
भष्मीभवत्यशित-मात्रमिह क्षणेन ।

सैन्धव, हरीतकी, पिप्पली, चिता, एषां समभाग चूर्णं उष्ण जलेन खादेत् ।

### अग्निमुखं चूर्णं

हिङ्गुभागो भवेदेको वचा च द्विगुणा भवेत् ।
पिप्पली त्रिगुणा चैव शृङ्गवेरं चतुर्गुणम् ॥
यमानिका पञ्चगुणा षड्गुणा च हरीतकी ।
चित्रकं सप्त-गुणितं, कुष्ठञ्चाष्टगुणं भवेत् ॥
एतद्वातहरं चूर्णं पीतमात्रं प्रसन्नया ।
पिवेद्दध्ना मस्तुना वा सुरया कोष्णवारिणा ॥
सोदावर्त्तमजीर्णञ्च प्लीहानमुदरन्तथा ।
अङ्गानि यस्य शीर्यन्ते, विषं वा येन भक्षितम् ॥
अर्शोहरं दीपनञ्च श्लेष्मघ्नं गुल्मनाशनम् ।
कासं श्वासं निहन्त्याशु, तथैव यक्ष्मनाशनम् ॥
चूर्णमग्निमुखं नाम न क्वचित् प्रतिहन्यते ॥

हिङ्ग १ तोला, वच २ तोला, पिप्पली ३ तोला, शुगठी ४ तोला, यवानी ५ तोला, हरीतकी ६ तोला, चिता ७ तोला, कुर ८ तोला मिश्रयित्वा चूर्णं उष्णोदकेनानुपेयं । कर्ष प्रमाणम ॥

### धान्यशण्ठी

धान्यनागरसिद्धञ्च तोयं दद्याद्विचक्षणः ।
आमाजीर्णप्रशमनं, दीपनं वस्तिशोधनं ॥

धान्याकरतगडुल १ तोला, शुगठी १ तोला, जल ८ पल, शेष १ पल ।

### मेथिमोदकः

त्रिकटुत्रिफलामुस्तं जीरकद्वयधान्यकं ।
कटफलं पौष्करं शृङ्गी यमानी-सैन्धवं विड़ं ॥
तालिशं केशरं पत्रं तज्जातीफलमेव च ।
जातिकोषंलवङ्गञ्च मुरा-कर्पूरचन्दने ॥

यावदेतानि चूर्णानि, तावच्चूर्णन्तु मेथिका ।
पुरातनगुड़ेनैव मोदकं परिकल्पयेत् ॥
घृतेन मधुना मिश्रं खादेदग्निवलं प्रति ।
अत्यग्निकारकं चूर्णं, दीप्तानलसमप्रभं ॥
ग्रहण्यर्शो विकारादीन् प्लीहपाण्डुज्वरामयान ।
नाशयेद्वातरोगांश्च, सत्यं गुरुवचो यथा ॥
प्रमेहान विंशतिञ्चैव मूत्राघातं तथाश्मरी ।
पाण्डुरोगां स्तथा कासं यक्ष्माणं हन्ति कामलां ॥
स्तनौ न पतितौ गाढ़ौ भवौ तालफलोपमौ ।
दृष्टिप्रसादकश्चामौ नारीणां पुत्रदः परः ।
भाषितः कामदेवेन मेथिमोदकउत्तमः ॥

त्रिकटु, त्रिफला, मथा, जीरा, कृष्णजीरा, धनिया, काइफल, कूर काकराशृङ्गी, यवानी, सैन्धव, विट् तालीश पत्र, नागेश्वर, तेजपत्र, जाइफल, जाइपत्री, लवङ्ग, मूरामांसी काफुर, रक्तचन्दन, एषां प्रति समभाग चूर्णं सर्व्वचूर्णसम मेथिचूर्णं, सर्व्वचूर्णा द्विगुण पुरातन गुड़, तोलकप्रमाण मोदकं घृतेन मधुना खादेत ॥

## हुताशनोरसः

गन्धेशटङ्कनैककं विषमत्र त्रिभागिकं ।
अष्टभागन्तु मरिचं जम्भाम्भोमर्द्दितं दिनं ॥
तद्वटी मुद्गमानेन कृत्वार्द्रेण प्रयोजयेत् ।
शूलारोचकगुल्मेषु विसूच्यां वह्निमान्द्यके ॥
अजीर्णे सन्निपातादौ, शैत्य जाड्ये शिरोगदे ।

गन्धक १ तोला, रस १ तोला, सुवगा १ तोला, विष ३, मरिच ८ जम्बीर रसेरे १ दिन मर्द्दन करिव, मुद्ग प्रमाण वटी, आर्द्रक रस अनुपान ।

## रामवाणरसः

पारदामृतलवङ्गगन्धकं भागयुग्ममरिचेन मिश्रितं ।
जातिकाफलमथार्द्धभागिक तिन्तिड़ीफलरसेन मर्द्दितं ॥
माषमात्रमनुपानयोगतः सद्य एव जठराग्निदीपनः ।
सेव्यतामखिलरोगनाशनं रामवाणवटिका रसायनं ॥
वह्निमान्द्य ( दशकण्ठ/दशवक्त्र ) नाशनो, रामवाण इति विश्रुतो रसः ।

रस १, गन्धक १, लवङ्ग १, अमृत १, मरिच २, जातीफल अर्द्ध तोला, सवाके चूर्ण करि तिन्तिड़ी फल रसेन मर्द्दन करिव । कलाय प्रमाणा वटिका कार्य्या ।

अभ्र व्योमलौह मिश्रिते बृहद्रामवाण इति ।

## अग्निकुमारः

टङ्कनं रसगन्धे च समभागं त्रयं विषात् ।
कपर्द्दशङ्खौ त्रिभागौ. वसुभागं मरिचकं ॥
दिन जम्भाम्भसा पिष्टं भवेदग्निकुमारकः ।
विसूची-शूलवातादि, अग्निमान्द्ये द्विगुञ्जकं ॥
अजीर्णे संग्रहण्यां वा प्रयोज्योऽयं चिकित्सकैः ॥

सुबगा १, रस १, गन्धक १, विष ३, करिभष्म ३, शङ्ख ३, मरिच ८, जम्बीर रसेरे मर्द्दन, कलाय प्रमाणा वटिका कार्य्या ।

## वृहत् अग्निकुमारः

रस-गन्धं विषं व्योषं टङ्कनं लौहभष्मकं ।
अजमोदाहिफेनञ्च सर्व्वतुल्यं मृताभ्रकं ॥
चित्रक-त्वक् कषायेण मर्द्दयेद्याममात्रकं ।
मरिचाभां वटिं खादेदजीर्णं. ग्रहणी तथा ॥
नाशयेन्नात्र सन्देहो गुह्यमेतत् चिकित्सितं ।

## महोद्धिरसः

एकैकं विषसूतञ्च जातीटङ्कं द्विकं द्विकं ।
कृष्णा त्रिकं विश्वषटकं गन्धं कपर्द्दकं द्विकं ॥
देवपुष्पं बाणमितं सर्व्वं सम्मर्द्द्य यत्नतः ।
महोदधिवटीनाम नष्टवह्निं प्रदीपयेत् ॥

विष १, रस १, जातीफल २, टङ्कन २, कणा ३, शुगठी ६, करिभष्म २, लवङ्ग ५. जंनन मर्द्दयित्वा, द्विगुञ्जा वटिका ।

## अजीर्णकण्टकोरसः

त्रिकटुत्रिफलालौह किट्टानामपि कार्षिकं
कर्षार्द्धं जयपालस्य वीजं शुद्धं विचूर्णयेत् ॥
गुडूच्याः स्वरसैश्चैव ततः पिष्ट्वा पुनः पुनः ।
शुष्कीकृत्यार्द्रकस्याथ स्वरसैः गुड़िकीकृतः ॥
गुञ्जाद्वय प्रमाणेन भक्ष्यमानेन सर्व्वदा ।
नानाजीर्णप्रशमनं गुल्मप्लीहोदरं जयेत् ॥
अजीर्ण-कण्टकं नाम्ना सर्व्वव्याधिविनाशनं ॥

त्रिकटु ६ तोला, त्रिफला ६ तोला, शुद्ध मगडुर २ तोला, जयपाल बीज १ तोला प्रत्येके मिलाइ, गुडूची रसेन पिष्ट्वा शुष्कीकृत्य पुनश्चाद्रकरसेन पिष्ट्वा गुञ्जाद्वय प्रमाणा वटिका कार्य्या।

## भक्तोत्तरीयवटिका

पारदं गन्धकं लौहमभ्रकं विषमेव च।
समांशं मरिचञ्चाष्टौ टङ्कनञ्च चतुर्गुणम्॥
भृङ्गराजरसैः सप्त-भावयेदम्लडाड़िमैः।
गुञ्जाद्वयं पर्णखण्डे खादेत् यामं निहन्त्यमौ॥
वातश्लेष्मोद्भवानेतान् मन्दाग्निं ग्रहणीज्वरान्।
अरुचिं पाण्डुताञ्चैव जयेदचिरसेवनात्॥
नष्टमग्निं जयत्येष कालभास्कर-तेजसं।
पर्व्वतश्चापि जीर्य्येत प्राशनादस्य देहिनः॥
गुर्व्वन्नं मांसमम्लञ्च भक्षणादेव जीर्य्यति।

रस १ तोला, गन्धक १ तोला, लौह १ तोला, अभ्र १ तोला, विष १ तोला, मरिच ८ तोला, सुवगा ४ तोला, भावना भृङ्गराज रसे ७ दिन, अम्ल डाड़िम रसे ७ दिन, गुञ्जाद्वय प्रमाणा वटिका कार्य्या पर्णखण्डानुपानं।

## चिन्तामणिरसः

रसं गन्धं मृतं शुद्धं मृतमभ्रं फलत्रिकं।
त्र्युषणं बीजजैपालं समं खल्वे विमर्दयेत्॥
द्रोणपुष्पीरसैर्भाव्यं शुष्कं तद्वस्त्रगालितं।
चिन्तामणिरसोह्येष नष्टमग्निं प्रदीपयेत्॥
ज्वरमष्टविधं हन्ति सर्व्वशूलहरः परः।
गुञ्जैकाम्वा द्विगुञ्जाम्वा चामवातहरः परः॥

शुद्ध रस १ तोला, शुद्ध गन्धक १ तोला, अभ्र १ तोला, त्रिफला ३ तोला, त्रिकटु ३ तोला, जैपाल बीज १ तोला, द्रोणरसे ७ दिन भावना दि चूर्ण वस्त्र गालित करि गुञ्जा प्रमाण वरि पर्णखण्डेनानुपानं।

विष्टब्धे स्वेदनं पथ्यं, पेयञ्च लवणोदकम्।

अजीर्णांत विष्ठा नचले यदि उदरत सेक दिव। उष्ण जल लोण मिहलाइ खाव; कोष्ठ शुद्ध हइ, मल याइ।

आलिप्य जठरं प्राज्ञो हिङ्गुत्र्यूषणसैन्धवैः।
दिवास्वप्नं प्रकुर्व्वीत सर्व्वाजीर्णविनाशनम्॥

हिङ्गु, त्रिकटु, सैन्धव, उदरत लेप दिब। दिवसत शुब।

## विसूचिका चिकित्सा

विसूचिकाया वमितं विरिक्तमिति। उदर चले, वात आहे, उदर काटे, विन्धादि शूल धरे, ताके विसूचिका बोले।

करञ्जनिम्बशिखरी-गुडूच्यर्ज्जुनवत्सकैः।
पीतः कषायो वमनाद्घोरां हन्ति विसूचिकां॥

लेटागुटी, निम्ब, अपामार्ग, गुडूची, अर्ज्जुन, कुटज छाल एषां मिलि २ तोला, जल ४, पल शेष १ पल, एइ क्वाथ खुवाइ वान्ति कराव।

पिपासायामनुत्क्लेशे [लवणस्याम्बु शस्यते] लवङ्गं सुप्रशस्यते।

लवङ्ग बाटि जलेन खादेत्।

जातीफलस्य वा शीतं शृतं भद्रघनस्य वा।

जातीफल, मथा क्वाथ करि दिब।

## अलसकचिकित्सा

वमनन्त्वलसे पूर्व्वं लवणेनोष्णवारिणा।

अलस बोले, उठिव लरिवर मन नायाइ; उष्ण जल लोण मिहलाइ खाव, वान्ति करिव। मंक लव, लङ्घन करिव, अग्निवर्द्धन हइ।

## मृतसञ्जीवनी रसः

सुवगा १ तोला, स्वर्ण माखि १ तोला, आदा १ तोला, रस १ तोला, गन्धक १ तोला, विष २ तोला, हिङ्गुल ७ तोला सर्व्वमेकीकृत्य लेम्बुरसेन मर्द्दयित्वा सर्षप परिमाणा वटिका कार्य्या। आद्रकरसेन खाद्यं। दाहे पैत्तिके च शीतल जलेन खाद्यं। दधिभक्तं पथ्यं।पथ्यं]।

## अजीर्णगजकेशरी

सूतकं गन्धकं लौहं विषमभ्रं समांशिकम्।
नागवल्लरीलाताम्रं एषा रस समं भवेत्॥

रसाष्टभागं मरिचं टङ्कनञ्च चतुर्गुणम् ।
निर्गुण्डीभृङ्गराजाख्यैर्भावयेदम्लडाडिमैः ॥
द्विगुञ्जा-परिमाणेन पर्णखण्डेन दापयेत् ।
आमाजीर्ण-प्रशमनं संग्रहग्रहणीहर ।
सर्वोदरप्रशमनं सर्वामयनिसूदनम् ॥
शिवेन कथितोह्येष अजीर्णगजकेशरी ॥

**इति वैद्यकसारोद्धारे अजीर्णाधिकारः ।**

## १० । अथ क्रिमिरोगे

पारासीय यमानिका पीता पर्य्युषितवारिणा प्रातः ।
गुड़पूर्व्वा क्रिमिजातं कोष्ठगतं पातयत्याशु ॥

पलाश बीज २८ रति वासिजलेन पिष्ट्वा लोड्य, पूर्व्वं गुड़ं भुक्त्वा क्षणं स्थित्वा पश्चात् पेयं ।

पारिभद्रकपत्रोत्थं रसं क्षौद्रयुतं पिवेत् ।

निम्बपत्र रस ४ तोला मधुनालोड्य पेयं ।

लिह्यात् क्षौद्रेण वैड़ङ्गं चूर्णं क्रिमिविनाशनम् ॥

विड़ङ्ग चूर्ण २ तोला मधुना लेह्य पेयं ।

### मुस्तादिः

मुस्ताखुपर्णीफलशिग्रुदारु-क्वाथः सकृष्णाक्रिमिशत्रुकल्कः ।
मार्गद्वयेनापि चिरप्रवृत्तान् क्रिमीन् निहन्ति क्रिमिजांश्च रोगान् ॥

मथा, मुषकपर्णि, त्रिफला, बनरिहा, उभे एषां मिलि २ तोला, जल ४ पल, शेष १ पल, पिप्पली विड़ङ्गचूर्ण प्रक्षेप ।

अपक्क-क्रमुकं पिष्टं पीतं जम्बीरजैरसैः ।
निहन्याद् विड़्भवं कीटं रसः खर्ज्जूरसम्भवः ॥

केचा गुवाक पिष्ट्वा १ तोला, जम्बीर रस १ पल, आलोड्य पेयं । खर्ज्जुरपत्र रस २ पलं पेयं ।

पलाशवीजेन्द्रविड़ङ्गनिम्बभूनिम्बचूर्णं सगुड़ं लिहेयः ।
दिनत्रयेण क्रिमयः पतन्ति पलाशवीजेन यवानिका वा ॥

पलाशगुटी, कुटजगुटी, विडङ्ग, निम्ब, भूनिम्ब, एषां समभाग चूर्णानि गुडेन लेह्यं खादेत्। पलाशबीज १ तोला, यवानी १ तोला, मधुना लेह्यं खादेत्।

## कीटारिरसः२३

शुद्धसूतमिन्द्रयवमजमोदा-मनःशीला।
पलाशबीजं गन्धश्च देवदाल्या ( देवदान्या ) द्रवैर्दिनम् ॥
संमर्द्य भक्षयेन्निष्कं मुद्गपर्णिद्रवैः सह।
सितायुक्तं पिबेच्चानु क्रिमिपातो भवत्यलं ॥

शुद्ध रस १ तोला, गन्धक १ तोला, मनःशीला १ तोला, कुटजबीज १ तोला, यवानी १ तोला, पलाशबीज १ तोला, घोषापत्र रसेन वा पटोल पत्र रसेन विमर्द्य स्थाप्यं, अतो माषकद्वयं शर्करया सह लेह्यं, मुद्गपर्णीरसमनुपिबेत् पलमेकं।

## कीटमर्द्दोरसः

शुद्धसूतं शुद्धगन्धमजमोदा विड़ङ्गकं।
विषं मुण्डी-ब्रह्मदण्डी यथाक्रमगुणोत्तरम्२४ ॥
चूर्णयेन्मधुना मिश्रं निष्कैकं क्रिमिजिद् भवेत्।
कीटमर्द्दोरसोनाम मुस्ताक्काथं पिबेदनु ॥

रस १ तोला, गन्धक २ तोला, यवानी ३ तोला, विड़ङ्गचूर्ण ४ तोला, मुण्डिरी मूल चूर्ण ५ तोला, भार्गीमूलचूर्ण ६ तोला, सर्व्वं चूर्णीकृत्य अतो माषकद्वयं, मुस्तानुपानं।

## धुस्तुरपत्रजोलेपः

रसेन्द्रेन समायुक्तो रसो धुस्तुरपत्रजः।
ताम्बुलपत्रजो वापि लेपाद्यूकाविनाशनः ॥

रस १ तोला, ताम्बुलपत्र रस ८ तोला मर्दित्वा लेपः। धुस्तुरपत्रजो वा लेपः।

पारदं मर्द्दयेन्निष्कं कृष्णधुस्तुरकद्रवैः।
नागवल्ल्याद्रवैर्व्वाथ वस्त्रखण्डं प्रलेपयेत् ॥

२३। क्रिमिहरोरसः—रसेन्द्रसारसंग्रहे।
२४। विषमुष्टि, ब्रह्मबीजं क्रमाद्द्विगुणितं भवेत्। इति रसेन्द्रे पाठः।

तद्वस्त्रं मस्तके वेष्ट्य धार्य्यमाणं समन्ततः ।
यूकाः पतन्ति निःशेषा लिख्याश्च नात्र संशयः ॥

रस १ राति कृष्ण धुस्तुर रसे मर्दि वस्त्रखण्डत लिपिव । पानर रसे वा, सेइ वस्त्र माथात वेष्टन करिव, क्रिमिपात हइ ।

## धुस्तुरतैलम्

धुस्तुरस्य च कल्केन तद्रसेनैव साधितं ।
तैलमभ्यङ्गमात्रेण यूकां नाशयति क्षणात् ॥

कटुतैल १ सेर, धुस्तुर-पत्र रस ४ सेर, धुस्तुर मूल कल्क ४ पल, पाकः कार्य्यः ।

## विडङ्गाद्यतैलम्

सविडङ्गं गन्धकशीला-सिद्धं सुरभिजलेन कटुतैलं ।
आजन्म नयति नाशं लिख्या सहितांस्तु यूकांस्तु ॥

कटुतैल १ सेर, विडङ्ग १ पल, मनःशीला १ पल, गन्धक १ पल, गोमूत्र ४ सेर, पाकः कार्य्यः ।

## धूपः

लाक्षाभल्लातकश्रीवासश्वेतापरजिताशिफा ।
अर्जुनस्य फलं पुष्पं विडङ्गसर्जगुग्गुलु ॥
एभिः कृतेन धूपेन शाम्यन्ति नियतं गृहे ।
भुजङ्गा मुषकादंशाघूणा मशकमतकुणाः ॥

लाहा १ तोला, मल्ला १ तोला, आगर १ तोला, वगा अपराजिता मूल १ तोला, अर्ज्जुनफल १ तोला, तस्य पुष्प १ तोला, विडङ्ग १ तोला, धुना १ तोला, गुग्गुल १ तोला, एषां समभागेन चूर्णयित्वा धूपो देयः ।

## क्रिमिकालानलोरसः

अभ्रकं त्रिफलारिष्टं स्वर्जिका चित्रकं बिड़ं ।
एतानि समभागानि श्लक्ष्ण-चूर्णानि कारयेत् ॥

सर्व्वचूर्णाद्द्विगुणिकं क्रिमिघ्नस्य प्रदापयेत् ।
पारिभद्ररसेनैव पातव्यं रसमुत्तमम् ॥
तप्तोदकेन वा पेयं क्रिमिकालानलोरसः ।
नानावर्णक्रिमीन् पाण्डुन् विड्विबन्धाग्निमार्द्दवं ॥
अन्तर्गतं वहिर्जातं, क्रिमिरोगं नियच्छति ॥

मारिताभ्र १ तोला, त्रिफला ३ तोला, निम १ तोला, स्वर्जिकाक्षार १ तोला, चिता १ तोला, विट्लोण १ तोला, एतानि सममागानि चूर्णानि, सर्वचूर्णाद् द्विगुणिता विडङ्ग चूर्णानि, निम्बपत्ररसमनुपेयं ।

इति वैद्यकसारोद्धारे क्रिमिचिकित्सोपदेशः ।

तृतीयः परिच्छेदः

# पाण्डुरोगादिचिकित्सोपदेशः

## ११ । अथ पाण्डुरोगाधिकारः

माध्यन्तु पाण्डामयिनं समीक्ष्य स्निग्धं घृतेनोर्द्ध्वमधश्च शुद्धम् ।
विरेचनद्रव्यकृतान् पिवेद् वा योगांश्च वैरेचनिकान् घृतेन ।।

पाण्डुरोग बोले ( शोम शोथके )—२१ पाठ प्राचीन पुस्तके । पाण्डुरोगत युवा बालक वृद्ध अवस्था ाजि औषध नियोजन करिव । प्रथमे रेचनक्रियांग काय शुद्ध करि, औषधक्रिया आचरिव ।

विधिः स्निग्धन्तु वातोत्थे तिक्तशीतन्तु पैत्तिके ।
श्लैष्मिके कटुरुक्षोष्णः कार्य्यो मिश्रस्तु मिश्रके ।।

विधिपूर्व्वक वात दोषर रेचन औषध विहित करिव । पित्तदोषत पित्तर रेचन औषध करिव । श्लेष्मादोषत कफ रेचन विहित औषध दिव । द्विदोषत द्वन्द्वज क्रिया करिव ।

द्विशकरं त्रिवृच्चूर्णं पलार्द्धं पैत्तिके पिवेत् ।

त्रिवृच्चूर्ण १ तोला, शर्करा २ तोला, शीत जलेन पित्तहरत्वात् ।

कफ-पाण्डौ च गोमूत्रक्लिन्नयुक्ता हरीतकी ।
क्षीरभुक् मूत्रसयुक्तां पथ्यां पाण्डामयी नरः ।।
लौहपात्रे श्रितं क्षीरं सप्ताहं पथ्यभोजनः ।
पिवेत् पाण्डामयी रोगी ग्रहणी-दोषपीड़ितः ।।

गोमूत्रसिद्ध हरीतकी २ तोला, गोमूत्र १ पल पेय । लौह पात्रत पगाखीरेरे भोजन करिव ।

नागरं लौहचूर्णं वा कृष्णा पथ्यां तथाश्मजं ।
गुग्गुलुं वायमूत्रेण कमपाण्डामयी पिवेत् ।।

जारित पुटित लौहचूर्ण शुण्ठी चूर्णेन, गोमूत्रमनुपिवेत् । एवं पिप्पलीचूर्ण, हरीतकी चूर्ण शुद्ध शिलाजतु गोमूत्र १ पलेन पेयं, गुग्गुलु २४ रति गोमूत्र १ पलेन पेयं ।

फलत्रिकामृतावासातिक्ताभूनिम्बनिम्बजः ।
क्वाथः क्षौद्रयुतो हन्यात् पाण्डुरोगं सकामलं ।'

त्रिफला, गुड़ूची, वासक, कटकीतिता, माहतिता, निम, एषां मिलि २ तोला, जल ४ पल शेष १ पलं पेयं ।

## वातपित्ताधिके

अयोमलन्तु सन्तप्तं भूयो गोमूत्रसेचितम् ।
मधुसर्पिर्युतं चूर्णं सह भक्तेन योजयेत् ॥
दीपनञ्चाग्निजननं शोथपाण्ड्वामयापहं ॥

गोमूत्र, सेचित शुद्ध मण्डूरचूर्ण १२ रति, घृत मधु मिश्रित अन्नेर साथ ।

## नवायसलौहम्

त्रिकटुत्रिफलामुस्तं विड़ङ्गचित्रकाः समाः ।
लौहचूर्णं नवगुणं कृत्वा चूर्णं प्रकल्पयेत् ॥
मासं तक्रेण मूत्रैर्वा लिह्याद्वा मधुसर्पिषा ।
स जयेत् पाण्डुहृद्रोग कुष्ठशोथभगन्दरान् ॥
क्रिमिमर्शांसि जठरं मन्दाग्नित्वमरोचकं ।
इन्द्रियाणां विशुद्धिञ्च बलवर्णप्रसादनम् ॥
मासेन लभते जन्तुरेतल्लौहं नवायसं ॥

त्रिकटु ३ तोला, त्रिफला ३ तोला, मथा १ तोला, विड़ङ्ग १ तोला, चित्रक १ तोला, लोहाजारण ९ तोला, तदभावे मण्डूरके दिव । लौहपात्रे लौहदण्डेन मर्द्दनीयं । पश्चाद् घृतञ्च दत्वा लीढ । तक्राद्यानुपेयं । एक, द्वि, त्रि, चतुः, पञ्चक क्रमेण वृद्धिर्माषकद्वयं यावत ।

## मण्डूरवज्रवटकः

पञ्चकोलं समरिचं देवदारुफलत्रिकं ।
विडङ्गमुस्तयुक्ताश्च भागास्त्रिपलसम्मिताः ॥
यावन्त्येतानि चूर्णानि मण्डूरं द्विगुणं ततः ।
पक्त्वा चाष्टगुणे मूत्रे घनीभूते तदुद्धरेत् ॥
ततोऽक्षमात्रान् वटकान् पिवेत् तक्रेण तक्रभुद् ।
पाण्डुरोगं जयत्येष मन्दाग्नित्वमरोचकम् ॥
अर्शांसि ग्रहणीरोगमूरुस्तम्भमथापि वा ।
क्रिमीं प्लीहानमुदरं गलरोगञ्च नाशयेत् ॥
मण्डूरवज्रनामायं रोगानीकविनाशनः ॥

सप्तधा निर्व्वापित लौहमल ७२ पल, पाकार्थे गोमूत्र ७२ सेर, पाकावसाने पञ्चकोलादि, पिप्पली ३ पल, पिप्पली मूल ३ पल, चैव्य ३ पल, चित्रक ३ पल, शुगठी ३ पल, मरिच ३ पल, उभै ३ पल, त्रिफला ९ पल, विडङ्ग ३ पल, मधा ३ पल, चूर्ण दत्वा पक्ता वटिका कार्य्या। ३२ रतिकै लै तक्रेण गोलयित्वा खादेत्।

**इति पाण्डुगताम्।**

## १२। अथ कामलायां

रेचनं कामलार्त्तस्य स्निग्धश्चादौ प्रयोजयेत्।
ततः प्रशमनीकार्या क्रिया वैद्येन जानता॥
खण्डोत्पलश्च विज्ञेया तत्र स्निग्धविरेचनम्।

पिप्पली २ तोला, तेलीयाधूनाचूर्ण ८ तोला, चेनि ८ तोला एषां मिश्रयित्वा, कर्षद्वयं शीतलजलेन अनुपेयं।

त्रिफलाया गुडूच्या वा दार्व्वा निम्बस्य वा रसः।
प्रातर्माक्षिकसंयुक्तं शीलितः कामलापहम्॥

त्रिफला, गुडूची एषां मिलि २ तोला, जल ४ पल, शेष १ पल पेयं दार्व्वी निम्ब प्रति १ तोलाकै लै, जल ४ पलदि क्वार्थ्यं, शेष १ पल मध प्रक्षिप्य पेयं प्रातः।

अञ्जनं कामलार्त्तानां द्रोणपुष्पीरसं स्मृतः।
निशागैरिकधात्रीणां चूर्णं च संप्रकल्पयेत्॥

द्रोणपुष्पीरस नस्य करिव, हालधि, गेरुमाटि, धात्री एषां चूर्ण अञ्जन लव। मधुना लेह्यो वा मक्षितः।

नस्यं कर्कोटमूलं वा घ्रेयं वा जालिनीफलम्।

वनकर्कटी ( घुमरु ), तस्य मूलस्य रसं नस्यं। नोवा घोषाफल-मूल रसं नस्यं।

सशर्कराकामलिनां त्रिभण्डीहितागवाक्षी सगुडा च शुण्ठी।

तेलीयाचूर्ण, शर्करया सह पेयं। अथवा गोरक्षकर्कटी मूल गुड़सहिता शुगठी वा।

दग्ध्वाक्षकाष्ठैर्मलमायसन्तु गोमूत्रनिर्व्वापितमष्टवारान्।
विचूर्ण्य लीढं मधुनाचिरेण कुम्भाह्वयं पाण्डुगदं निहन्ति॥

ममोरा काछर अमित ८० बछरीया लोहचूर दग्ध करि गोमूत्रत सतवार तियाव, ताके चूर्ण करि मधु दत्वा रक्ति चतुष्टयमाने पेयं। टेकेलिया शोम शोथ, पाण्डुरोग गुचे।

## पुनर्णवामण्डुरम्

पुनर्णवात्रिवृत्शुण्ठीपिप्पलीमरिचानि च ।
विडङ्गं देवकाष्ठञ्च चित्रकं पुष्कराह्वयम् ॥
त्रिफलां द्वे हरिद्रे च दन्तीञ्च चविकन्तथा ।
कुटजस्य फलं तिक्ता पिप्पलीमूलमुस्तकम् ॥
एतानि समभागानि मण्डूरं द्विगुणं ततः ।
गोमूत्रेऽष्टगुणे पक्त्वा स्थापयेत् स्निग्धभाजने ॥
पाण्डुशोथोदरानाह शूलार्शः क्रिमिगुल्मनुत् ॥

पुनर्णवा १ तोला, तेउरो १ तोला, शुण्ठी १ तोला, पिप्पली १ तोला, मरिच १ तोला, विडङ्ग १ तोला, देवदारु १ तोला, चित्रक १ तोला, कुर १ तोला, त्रिफला ३ तोला, हरिद्रा २ तोला, दन्ती १ तोला, चविक १ तोला, कुटजबीज १ तोला, कटकीतिता १ तोला, पिप्पलीमूल १ तोला, मथा १ तोला मिलित चूर्ण २० तोला, सप्तधा गोमूत्र निर्व्वापित मण्डुर ४० तोला, गोमुत्र ८ सेर, पाकावसाने स्निग्ध पात्रत थब ; कोल प्रमाणं पेयं ।

## धात्र्यरिष्टम्

धात्रीफलसहस्रे द्वे पीडयित्वा रसं भिषक् ।
क्षौद्राष्टभागं पिप्पल्याश्चूर्णार्द्धकुडवान्वितम् ॥
शर्करार्द्धतुलोन्मिश्रं पक्वं स्निग्धघटे स्थितम् ।
प्रपिवेत् पाण्डुरोगार्त्तो जीर्णे हितमिताशनः ॥
कामलापाण्डुहृद्रोगवातासृक् विषमान् ज्वरान् ।
कासहिक्कारुचिश्वासां श्चैषोऽरिष्टः प्रणाशयेत् ॥

धात्री फल सहस्रद्वय रसस्य सप्तमाग तत्र प्रक्षेप, पिप्पली चूर्ण २ पल, चिनि ५० पल, लेहपाके अवतार्य्य, शीते मधु दत्त्वा तोलकद्वयं लिहेत । पैत्तिकपाण्ड्वादौ, विशेषाद्धलीमकेऽपि । मृज्जनित पाण्ड रद्दौ ।

## व्योषाद्यघृतम्

व्योषं विल्वं द्विरजनी-त्रिफलाद्विपुनर्णवम् ।
मुस्तान्ययोरजः पाठा विडङ्गं देवदारु च ॥

वृश्चिकाली च भार्गी च सक्षीरैस्तैः शृतं घृतम् ।
सर्व्वान् प्रशमयत्येतद् विकारान् मृत्तिकाकृतान् ॥

घृत ४ सरा, दुग्ध १६ सरा, त्रिकटु, बेलशुठ, हरिद्राद्वय, त्रिफला, पुनर्णवाद्वय, मथा, जारित लौह, आकना दि, विडङ्ग, देवदारु, विछाति, आकर्लाविन्धिमूल एषां मिलि चूर्ण ५ तोला प्रक्षेप ; तोलकद्वय-मुष्णोदकमनुपेयं ।

## द्राक्षाघृतं

पुराण-सर्पिसः प्रस्थो द्राक्षार्द्धप्रस्थसाधितः ।
कामलागुल्मपाण्डर्त्ति-ज्वरमेहोदरापहः ॥

पुरणा घृत ४ सरा, पानी १६ सरा, कल्क द्राक्षा ५ पल पक्तव्यम् ।

## पञ्चाननवटी

शुद्ध-सूतं तथा गन्धं मृतताम्राभ्रगुग्गुलु ।
जैपालवीजं तुल्यञ्च, घृतेन गुटिकाकृतं ॥
भक्षयेद्वदरमात्रन्तु शोथपाण्डुप्रशान्तये ।
पञ्चाननवटीख्याता पाण्डुरोगकुलान्तिका ॥

रस, गन्धक, ताम, अभ्र, गुग्गुलु एषां मिलि ५ तोला, शोधित जयपाल वीज ५ तोला, घृतेनैकप्रहरं विमर्द्य स्निग्ध पात्रे संस्थाप्य ६ रक्तिका प्रमाणेन खादेत । द्रोणपुष्पीरसमनुपेय शोथपाण्ड्वादौ ।

## कामेश्वरोरसः

रसं गन्धं चित्रकञ्च हरितालं पलं पलं ।
त्र्यूषणं पिप्पलीमूलं विषञ्चापि पलं न्यसेत् ।
नागकेशरकर्षैकमेरण्डस्य पलं पलं ।
मुस्तैलापत्रकानाञ्च प्रत्यर्द्ध" "कन्तथा ॥
पुरातन-गुडेनैव तुल्येन सह मिश्रयेत् ।
मर्द्दयेत् कनकद्रावैर्य्यामैकम्वा घृतान्विता ॥
गुटिका वदरान्ताभां कारयेद् भक्षयेन्निशि ।
शोथपाण्डुहरः सोऽयं कफे कामेश्वरोरसः ॥

रस १ पल, गन्धक १ पल, चित्रक १ पल, शुद्धहरिताल १ पल, त्रिकटु ३ पल, पिप्पली मूल १ पल, विष १ पल, मथा, एलाचि, तेजपत्र एषां मिलि चूर्ण ४ तोला, नागकेशर २ तोला, एरण्डबीज ८ तोला, सर्व्व चूर्णानि धुस्तुरपत्ररसेनानुरूपेण मर्द्दयेत्। रौद्रे शोषायित्वा, घृतं किञ्चिद्द दत्वा, स्निग्धभाण्डे संस्थाप्य, प्रातःकाले, व्याधिपरिभवकाले, बदरास्थि-प्रमाणं प्राश्य, द्रोणपुष्पीरसमनुपिबेत्, कफाधिके शोथकामलादौ ॥

पाण्डुरोगक्रियां सर्व्वां योजयेच्चहलीमके।

पाण्डुरोगर औषध, हलीमकत दिब।

॥ इति वैद्यकसारोद्धारे पाण्डु-कामला-

हलीमकरोगचिकित्सोपदेशः ॥

चतुर्थः परिच्छेदः

# कासरोगोचिकित्सोपदेशः

## १३। अथ रक्तपित्ते

तर्पणं सघृनक्षौद्रलाजचूर्णैः प्रदापयेत्।

खैरचूर्ण घृत मधु एरे खाव।

शालिषष्टिकनिवारकोरदूषप्रशान्तिकाः।
श्यामाकश्च प्रियङ्गुश्च भोजनं रक्तपित्तिनां॥
मसूरमूद्गचनकाः समुकुष्ठाढ़कीफलाः।
प्रशस्ताः सूपयूषार्थं कल्पितारक्तपित्तिनां॥

रक्तशालि षष्टिका ( चङ्कली ) उड़िधान्य, कोदोधान्य, विल्ववैजव, मुकुष्ठवुलि वनमुद्ग, कलिधान, आढ़कीवुलि, मिरिमाह, एइ सकल व्यञ्जन करिव, यूष करिव।

शाकं पटोलवेत्राग्र-तण्डुलियादिकं हितं।
मांसं कपोतलावादि शशैणहरिणादिकं॥

इति हितं।

### षड़ङ्गपानीयं

विना शुण्ठीं षड़ङ्गेन सिद्धं तोयञ्च दापयेत्।

मथा, पापड़ा, विरिणामूल, रक्तचन्दन, सुगन्धवाला ( शिलिखा ) एषां मिलि २ तोला, जल ३२ तोला शेष ८ तोला पेयं।

क्षीणमांसबलं बालं वृद्धं शोषानुवन्धिनं।
अवम्य मविरेच्यञ्च स्तम्भनैः समुपाचरेत्॥

एषां रेचनं न कर्त्तव्यं, मलस्तम्भनं कर्त्तव्यं।

वृषपत्राणि निष्पीड्य रसं समधु-शर्करं।
पिवेत्तेन शमं याति रक्तपित्तं सुदारुणम्॥

वासक रस ८ तोला मधुशर्कराभ्यां पेयं।

वासाकषायोत्पलमृत्प्रियङ्गु-लोध्राञ्जनाम्भोरुहकेशराणि ।
पीत्वा सिताक्षौद्रयुतानि हन्यात् पित्तासृजोवेगमुदीर्णमाशु ।।

वासकमूल २ टका, जल ४ पल, शेष १ पल प्रक्षेप, उत्पल फुल, पङ्कपर्पटी, प्रियङ्गु, लोध्र, रसाञ्जन, पद्मकेशर सममागचूर्ण ४२ रति, शीते मधु चिनि दत्त्वा पेयं ।

तालीशचूर्णसहितः पेयः क्षौद्रेण वासकस्वरसः ।
कफपित्ततमकश्वासस्वरभेदशोणितपित्तहरः ।।

वासकरस १ पल, तालीशचूर्ण २० रति दत्त्वा पेयं ।

अटरूषकमृद्वीका पथ्या क्वाथः सशर्करः ।
क्षौद्राढ्यः सकलश्वासरक्तपित्तनिवर्हणः ।।

वासक, गमारीबीज, हरीतकी, एषां सममागं २ तोला क्वाथः क्षौद्रशर्करां दत्त्वा पेयं ।

समाक्षिकः फल्गुफलोद्भवो वा पीतोरसः शोणितमाशु हन्ति ।

वर डिमरूफल रस १ पल, मधु ४० रति पेयं ।

कषाययोगैर्व्विविधैर्दीप्ताग्नौ निर्ज्जिते कफे ।
रक्तपित्तं नचेत् शाम्येत्, तत्र वातोल्वने पयः ।।

क्वाथ औषधेरे रक्तपित्त शाम्य नहले तात कफ प्रधान हर वातक्रिया करिव ।

छागं पयोऽथवा गव्यं शृतं पञ्चगुणे जले ।
अभ्यस्येत् ससिताक्षौद्रं पञ्चमूलीशृतं पयः ।।

क्षीर १ माग, जल ५ माग, सिद्ध क्षीरावशेषः ४ तोला सिताक्षौद्रयुतं खादेत् ।
तथा स्वल्प पञ्चमूली क्वाथः सिताक्षौद्रयुतं पेयं ।

वासकस्य रसे पथ्या सप्तधा परिभाविता ।
कृष्णा वा मधुना लिढ्वा रक्तपित्तं द्रुतं जयेत्[१] ।।

वासकस्य रसेन माविताया हरीतक्याः चूर्णं १ पोवा पिप्पल्याः चूर्णं मधुना कर्षं लेह्यं खादेत ।

## एलादिगुडिका

एलापत्रत्वचोऽर्द्धाक्षाः पिप्पल्यर्द्धपलं तथा ।
सितामधुकखर्ज्जुरमृद्वीकाश्च पलोन्मिताः ।।

१ । मावनायां द्रवोदेयः सम्यगार्द्रत्वकारकः ।। इति चक्रदत्तः ।।

संचूर्ण्य मधुना युक्त्या गुडिकाः कारयेद् भिषक् ।
अक्षमात्रं ततश्चैकां भक्षयेच्च दिने दिने ॥
कासं श्वासं ज्वरं हिक्कां छर्दिं मूर्च्छां मदं भ्रमं ।
रक्तनिष्ठीवनं तृष्णां पार्श्वशूलमरोचकं ॥
शोथं [ शोषं ] प्लीहाढ्य वातांश्च स्वरभेदं क्षतक्षयं ।
गुडिका तर्पणीवृष्या रक्तपित्तञ्च नाशयेत् ॥

एलाचि, तेजपत्र १, दालचिनि १, पिप्पली ८ टका, चिनि १ पल, मधुयष्टि १ पल, खर्ज्जुर फल १ पल, द्राक्षा १ पल मधुना संमिश्रय, तोलक प्रमाणा वटिका कार्य्या । अतो भक्ष्यं ।

त्रिवृतात्रिफलाश्यामापिप्पलीशर्करामधु ।
मोदकः सन्निपातोर्द्ध-रक्तपित्तज्वरापहः ॥

तेलोया ४ टका, त्रिफला १२ टका, टुकरिया मूल ८, पिप्पली ४ टका एषां चूर्णानि, शर्करामधुभ्यां तोलकमाने मोदक उष्णजलमनुपेयं ।

लोहगन्धिनि निश्वासे चोद्गारे रक्तगन्धिनि ।
मृद्वीका२ शानमात्रान्तु खादेद्द्विगुणशर्कराम् ॥

रक्तपित्तत, उद्गारत पोरा लोहारे अथवा तेजर गन्ध आहिले द्राक्षा, तदभावे गमारीगुटीचूर्ण १ माग, चिनि २ माग मिश्रयित्वा वासारसमनुपेयं ।

नासाप्रवृत्तरुधिरं घृतभृष्टं श्लक्ष्णपिष्टमामलकं ।
सेतुरिव तोयवेग रुणद्धि, मूर्ध्नि प्रलेपेन ।

घृतभृष्टामलक्या काञ्जिकपिष्टया शिरसि लेपः ।

नस्यं दाडिमपुष्पोत्थो रसो दुर्व्वाभवोऽथवा ।
आम्रास्थिजः पलाण्डोर्व्वा नासिकाश्रुतरक्तजित् ।

दाड़िमफुलर रस नस्य करिव । अथवा दुर्व्वारस, आम्रबीज, पलाण्डु इयारे नस्य करिव ।

## नाके तेज अहार औषध३

गमारी गुटी, डालिमर गुटी, शिलिखा, आमलखी, दुर्व्वा, कुर इयार काथ उजाले खाले नाके तेज अहा गुचे ।

२ । मृद्विकामित्यत्र पृथ्विका इति पाठः चक्रदत्ते । पृथ्विका कृष्णजीरकं ।

३ । घ्राणप्रवृत्ते जलमाशुदेयं, सशर्करं नासिकया पयो वा ।
द्राक्षारसं क्षीरघृतं पिबेद्वा सशर्करञ्चेक्षुरसं हितं वा ॥ इति चक्रदत्तः ।

मेढ्रगेऽति प्रवृत्ते तु वस्तिरुत्तर-संज्ञितः ।

लिङ्ग मलद्वारे रक्तस्राव हले ।

शृतं क्षीरं पिवेद्वापि, पञ्चमूल्या तृणाह्वया ॥

## पञ्चतृणम्

खागरिमूल, विरिणामूल, कुशमूल, कहुवामूल तुलि, कुहियारर मूल एषां मिलि २ तोला, क्षीर ८ तोला, जल ४ पल शेष क्षीर १ पल पेयं ।

## दुर्व्वादिघृतम्

दुर्व्वासोत्पलकिञ्जल्का मञ्जिष्ठासैलबालुका ।
सिताशीतमुशीरञ्च मुस्तं चन्दनपद्मकम् ॥
विपचेत् कार्षिकैरेतैः सर्पिराजं४ मुखाग्निना ।
तण्डुलाम्बुत्वजाक्षीरं दत्त्वा चैव चतुर्गुणम् ॥
तत्पानं वमतो रक्तं नावनं नासिकागते ।
कर्णाभ्यां यस्य गच्छेत्तु तस्य कर्णौ प्रपूरयेत् ॥
चक्षुःस्राविणि रक्ते तु पूरयेत्तेन चक्षुषी ।
मेढ्रपायुप्रवृत्ते तु वस्तिकर्म्मसु तद्धितम् ॥
रोमकूपप्रवृत्ते तु तदभ्यङ्गे प्रयोजयेत् ।

छागघृत ३ सेर १६ टका, तण्डुलोदक ६ सेर ४० टका, छागीक्षीर ६ सेर ४० टका, कल्क दुर्व्वामूल २ तोला, पद्मकेशर २ तोला, मञ्जिष्ठा २ तोला, एलवालुका २ तोला, वगाचिनि २ तोला, विरिणामूल २ तोला, रक्तचन्दन २ तोला, पद्मकाष्ठ २ तोला, मथा २ तोला, एषां पिष्टं दत्त्वा पक्तव्यं ।

केऽप्यष्टगुणतोयेन प्राहुस्तण्डुलभावना ।

रक्तशाल्यादि तण्डुल ८ पल, जल ८ पल, विमर्द्य पटपुटं कार्य्यं दुर्व्वाघृते ।

## वासाघृतं

वासां सशाखां सफलां समूलां कृत्वा कषायं कुसुमानि तस्याः ।
प्रदाय कल्कं विपचेद् घृतं तत् सक्षौद्रमाश्वेव निहन्ति रक्तम् ॥

पुरातन घृत ३ सेर १६ टका, छालमूलपत्र सहित आद्र वासक १२॥० सेर, जल ६४ सेर, शेष १२ सेर कल्क वासक पुष्प ८ पल दत्त्वा सिद्धं, शीते मधु ८ पल ।

४। सर्पिराजं छागीघृतमित्यर्थः ।

## वासाखण्डः

तुलामादाय वासायाः पचेदष्टगुणे जले ।
तेन पादावशेषेण पाचयेदाढकं भिषक् ॥
चूर्णानामभयानाश्च खण्डाच्छुद्धाच्छतं तथा ।
द्वे पले पिप्पलीचूर्णात् सिद्धशीते च माक्षिकात् ॥
कुडवं पलमात्रन्तु चातुर्जातं सुचूर्णितम् ।
क्षिप्त्वा विलोड़ितं खादेद्रक्तपित्ती-क्षतक्षयी ॥
श्वासकासपरीतश्च यक्ष्मणा च प्रपीड़ितः ॥

वासक मूल १०० पल, जल ६४ सेर, शेष १६ सेर, हरीतकीचूर्ण २४ पल, शुद्धखण्ड १०० पल, सिद्धे प्रक्षेप पिप्पलीचूर्ण २ पल, नागेश्वर, त्रिसुगन्धि प्रति १ पल, शीते मधु ४ पल ।

## वासाकुष्माण्डखण्डः

पञ्चाशच्च पलं स्विन्नं कुष्माण्डात् प्रस्थमाज्यतः ।
प्राह्यं पलशतं खण्डं वासाक्काथाढ़के पचेत् ॥
मुस्तधात्रीशुभाभार्गी त्रिसुगन्धैश्च कार्षिकैः ।
ऐलेय-विश्वधान्याक-मरिचैश्च पलांशिकैः ॥
पिप्पलीकुड़वञ्चैव मधुमानी५ प्रदापयेत ।६
कासं श्वासं क्षयं हिक्का रक्तपित्तं हलीमकम् ।
हृद्‌रोगमम्लपित्तञ्च पीनसञ्च व्यपोहति ॥

पूर्व्ववत् स्विन्न निष्पीड़ित पुराण कुष्माण्ड ५० पल, घृत ३२ पल, खण्ड १०० पल, क्वाथार्थ वासक ६४ पल, जल ६४ सरा, शेष १६ सरा, एकीकृत सिद्धे, मथा १ पल, आमलकी १ पल, वंशलोचन १ पल, अकलबिर १ पल, दालचिनि १ पल, तेजपत्र १ पल, नालुक २ टका, मरिच २ टका, पिप्पली ४ पल, एषां चूर्णानि दत्त्वा शीते प्रक्षेप मधु ८ पल ।

५ । मधुमानीति, मधुनोऽष्टौपलानि । —इति चक्रदत्त-टीकायां शिवदासः

६ । एतच्चूर्णीकृतं तत्र, दर्व्या संघट्टयेत् पुनः
तद् यथाग्निबलं खादेद्रक्तपित्ती-क्षतक्षयी ।
वृष्यं पुनर्णवकरं बलवर्णकरञ्च तत् ॥ —चक्रदत्तात् ।

## सुधानिधिरसः

शुद्धं[७] गन्धं माक्षिकं लौहचूर्णं सर्व्वं घृष्टं त्रैफलेनोदकेन ।
मूषामध्ये भूधरे तत् पुटित्वा दद्याद् गुञ्जां त्रैफलेनोदकेन ॥

लौहपात्रे गोपयः पाययित्वा, रात्रौ दद्याद् रक्तपित्त-प्रशान्त्यै ॥

शुद्धगन्धक ४ टका, स्वर्णमाक्षिक ४ टका, जारित लौह ४ टका, त्रिफला क्वाथेन सर्व्वंचूर्णं मर्द्दयित्वा, मूषायां धृत्वा गजपुटे दद्यात् उद्धृत्य गुञ्जात्रयं त्रिफलाक्वाथमनुपेयं ।

## रक्तपित्तान्तकः

मृताभ्रं मुण्डतीक्ष्णञ्च माक्षिकं रसतालकं ।
गन्धकञ्चभवेत्तुल्यं यष्टिद्राक्षामृताद्रवैः ॥
दिनैकं मर्द्दयेत् खल्ले सितक्षौद्र-समन्वितम् ।
( निष्क ) माषमात्रं निहन्त्याशु रक्तपित्तं सुदारुणम् ॥
ज्वरं दाहं क्षतक्षीणं तृष्णाशोषमरोचकम् ।

## अपररक्तपित्तान्तकवटिका

रस १, गन्धक १, लोहा २, सैन्धव १, त्रिकटु ३, त्रिफला ३, जीरा १, धनीया १, सुवगा २, मधा १ ।

वाहक, अकलविर, कयटकारी, वरियाल, आमैलता एकत्र क्वाथ करि मर्द्दन, वटिका त्रिरक्तिका ।

## उशीराद्यं चूर्णम्

उशीरं तगरं शुण्ठी-ककोल-चन्दनद्वयं ।
लवङ्ग-पिप्पलीमूलं कृष्णैला-नागकेशरं ॥
मुस्तागुडत्वक् कर्पूरं तुगाक्षीरिञ्च पत्रकं ।
कृष्णागुरुसमं चूर्णं सिता चाष्टगुणन्तथा ।
रक्तवान्तिञ्च तापञ्च नाशयेन्नात्र संशयः ।

विरिणामूल १, तगर १, शुगठी १, बादाम १, ( अथवा काकोली १ ) दुइ चन्दन २, लवङ्ग १, पिप्पलीमूल १, पिप्पली १, एलाचि १, नागकेशर १, मथा १, दालचिनि १, काफूर १, बंशलोचन १, तेजपत्र १, कृष्णा ( कलिया ) १, आगर १, एषां चूर्णानि १६ टका, चिनि ८ टका उडुम्बरफल रस १ पलमनुपेयं ।

---

७ । शुद्धमित्यत्र सूतमिति चक्रदत्ते पाठः ।

## समशर्करलौहम्

लौहाच्चतुर्गुणं क्षीरं माज्य द्विगुणमुत्तमम् ।
चूर्णं पादन्तु वैडङ्गं दद्यन्मधुसिते समे ॥
ताम्रपात्रे दृढे पत्त्वा स्थापयेद्घृतभजने ।
माषकादि क्रमेणैव भक्षयेद्विधिपूर्वकम् ॥
अनुपान प्रयुञ्जीत नारिकेलोदकादिकम् ॥
रक्तपित्तं जयेत्तीव्रमम्लपित्त-क्षतक्षयं ।
पुष्टिदं कान्तिजननमायुष्यं वृष्यमुत्तमम् ॥

लौह ४ तोला, छागी क्षीर १६ तोला, घृत २ तोला, विडङ्ग चूर्ण १ तोला, चिनि ४ तोला पाकः ार्य्यः, शीते मधु ४ तोला, अनुपानं उडुम्बर फलरस १ पल, ८ रक्तिका प्रमाणेन भक्ष्यं ।

आमला पिप्पलीचूर्णं तुल्यया सितया सह ।
रक्तपित्तहरोलेहः अम्लपित्तविनाशनः ॥

धात्रीचूर्णं १ टका, पिप्पलीचूर्णं १ टका, लौह २ टका, चिनि ४ टका, उडुम्बर फलरसमनुपेयं ।

॥ इति वैद्यकसारोद्धारे रक्तपित्ताधिकारः ॥

## १४ । अथ यक्ष्मणि

शालिर्षष्टिकगोधूमयवमुद्गादयः शुभाः ।
मद्यानि जाङ्गलाः पक्षि-मृगाः शस्ता विशुष्यताम् ॥

रक्तशाल्यन्न, षष्टिक, चेङ्गुली, गोमधान, यवधान्य, इत्यादिर अन्न, आटा, मुद्ग, मसूर, चनक, ारहर, वनमुद्ग इसवर व्यञ्जन ; मद्य, मदाकार द्रव्य वटा, कैर, तित्तिर, इसव पक्षी, हरिण, कृष्णषार, शशा, ायटला इसव मांस प्रशस्त ।

शुक्रायत्तं बल पुंसां मलायत्तं हि जीवितम् ।
तस्माद् यत्नेन सरक्षेद् यक्ष्मिणो मलरेतसी ॥

शुक्रायत्त बल आर मलायत्त जीवन, अतएव यक्ष्मा व्याधित वलवीर्य्य रक्षा करिव ।

### षडङ्गोयूषः

सपिप्पलीकं सयवं सकुलत्थं सनागरं ।
दाडिमामलकोपेतं स्निग्धमाजरसं पिबेत् ॥

छाग मांस १६ तोला, जल १२ पोवा, शेष ३ पोवा, ताके प्रक्षेप पिप्पलीचूर्ण १६ रति, यव १६ रति, कुलत्थ १६ रति, शुगठी १६ रति, दाडिम १६ रति, आमलकी १६ रति, घृत १ तोला दत्वा पेयं। एवं सर्व्वत्र बोध्यं।

तेन षड् विनिवर्त्तन्ते विकाराः पीनसादयः।

## त्रयोदशाङ्कः

धान्याकपिप्पलीविश्वदशमूलशृतं पिबेत्।
पार्श्वशूलज्वरश्वासपिनसादि निवृत्तये॥

धनीया, पिप्पली, शुगठी, दशमूल, एषां मिलि २ तोला क्काथ करिब।

## सितोपलादिलेहः

सितोपलातुगाक्षीरी-पिप्पलीबहुला(एला)त्वचः।
अन्त्यादूर्द्ध्वं द्विगुणितं८ लेहयेत् क्षौद्रसर्पिषा॥
चूर्णितं प्राशयेदेतत् श्वासकासक्षयापहम्।
सुप्तजिह्वारोचनिकमल्पाग्निं पार्श्वशूलिनम्।
हस्तपादांसदाहेषु ज्वरे रक्ते तथोर्द्धगे॥

चिनि १६ टका, वंशलोचन ८ टका, पिप्पली ४ टका, एलाचि २ टका, दालचिनि १ टका, सबाके चूर्ण करि घृत मधु दि लेह करिब। १ तोलाके खाव।

## लवङ्गाद्यं चूर्णम्

लवङ्गकक्कोलमुशीरचन्दनं नतं सनीलोत्पलजीरकं समम्।
त्रुटिः सकृष्णागुरुभृङ्गकेशरं कणा-सविश्वानलदं सहाम्बुदम्॥
अहीन्द्रजातीफलवंशलोचनाः सिताष्टभागं समसूक्ष्मचूर्णितम्।
सुरोचनं तर्पणमग्निदीपनं बलप्रदं वृष्यतमं त्रिदोषजित्॥
उरोव्विबद्धं तमकं गलग्रहं सकासहिक्कारुचियक्ष्मपीनसम्।
ग्रहण्यतिसारभगन्दरार्व्वुदं प्रमेहगुल्मांश्च निहन्ति सज्वरान्॥

८। अन्त्यादूर्द्ध्वं द्विगुणितमिति

अन्त्यायास्त्वचः एकोभागः, एलाया द्वौ पिप्पल्याश्चत्वारः तुगाक्षीर्य्या अष्टौ, सितोपलायाः षोडशेत्यर्थः। —चक्रदत्तटीकायां शिवदासः।

लवङ्ग १ टका, कर्केकाल १, विरिणा मूल १, रक्तचन्दन १, तगर १, नीलभेट १, जीराद्वय २, एलाचि १, कलिया आगर १, भृङ्गराज १, नागकेशर १ पिप्पली १, शुण्ठी १, जटामांसी १ मथा १, अनन्तमूल १, जातीफल १, वंशलोचन १ टका, चिनि ८ टका संमिश्रय उष्णोदकमनुपेयं ।

## तालीशाद्यचूर्णम्

तालीशपत्रं मरिचं नागरं पिप्पली शुभा ।
यथोत्तरं भागवृद्धया त्वगेले चार्द्धभागिके ॥
पिप्पल्यष्टगुणाचात्र प्रदेया सितशर्करा ।
श्वासकासारुचिहरं तच्चूर्णं दीपनं परम् ॥
हृतपाण्डुग्रहणीरोग-प्लीहशोषज्वरापहम् ।
छर्द्दर्यातिसारशूलघ्नं मूढ़वातानुलोमनम् ।
कल्पयेद्गुडिकाञ्चैतच्चूर्णं पक्त्वा सितोपलाम् ॥
गुडिकाह्यग्निसंयोगाच्चूर्णाल्लघुतराः स्मृताः ।
पैत्तिके ग्राहयन्त्येके शुभया वंशलोचनाम् ॥

तालीश १ टका, मरिच २ टका, शुण्ठी ३, पिप्पली ४, वंशलोचन ५, दालचिनि ॥० तोला, महा ) एलाचि ॥० तोला, चिनि ४ पल मिश्रयित्वा खादेत् ।

## विन्ध्यवासियोगः

व्योषं शतावरी त्रीणि फलानि द्वे बले तथा ।
सर्व्वामयहरोयोगः सोऽयं लौहरजोऽन्वितः ॥
एष वक्षःक्षतं हन्ति कण्ठजाश्च गदा स्तथा ।
राजयक्ष्माणमत्युग्रं बाहुस्तम्भमथार्द्दितम् ॥

त्रिकटु ३ टका, शतमूल १, त्रिफला ३, बला १, अतिबला १, जारित लौह ९ टका, घृतमधुभ्यां लेह्यं मात्रार्द्धं तोला ।

## अजापञ्चकं घृतम्

छागशकृद्रस-मूत्रक्षीरैर्दध्ना च साधितं सर्पिः ।
सक्षारं यक्ष्महरं कासश्वासोपशान्तये परमम् ॥

छागर विष्ठा काथ करि रस लव ३ सेर, छागमूत्र ३ सेर, छागदुग्ध ३ सेर, छागदधि रस ३ सेर,

छागघृत ३ सेर आर्सा सर्पिः सिद्ध, सिद्ध करिब। पाचे यवक्षार ८ टका वि २ टका प्रमाणे खाब; अनुपान उष्ण जल।

छागमांसं परश्छागं सर्पिः क्षीरं सशर्करां।
छागोपसेवा कर्त्तव्या छागमध्ये तु यक्ष्मनुत्॥

छाग मांस रस, घृत, छागी क्षीर, छागसेवा, छागमध्यत शयन आचरिब।

## वासावलेहः

वासकस्य रसे प्रस्थे मानिकां सितशर्करां।
पिप्पलीद्विपलं दत्त्वा सर्पिषश्च पचेत् शनैः॥
लेहीभूते ततः पश्चात् शीते क्षौद्र-पलाष्टकं।
दत्त्वावतारयेत् सेव्यं मात्रया लेहमुत्तमम्॥
निहन्ति राजयक्ष्माणं कासश्वासं सुदारुणम्।
पार्श्वशूलञ्च हृच्छूलं, रक्तपित्तं ज्वरन्तथा॥

वासक रस ३ सेर, शर्करा ३ पोवा, ४ टका, सिद्धे घृत १६ तोला, पिप्पलीचूर्ण १६ तोला शीते मधु ३ तोला।

## बृहद्वासावलेहः

"पञ्चविंशत् पलं ग्राह्यं वृहत्योर्व्वासकस्य (वृहती कण्टकारी) च।
भार्ग्यास्तु पञ्चविंशाच्च जलद्रोणे पृथक् पृथक्॥
... ... ... ... पादशेषे रसे भवन्तथा।
कणा-पलानि चत्वारि जारिताभ्रपलन्तथा॥
कुष्ठं तालीशपत्रञ्च मरिचं तेजपत्रकं।
मुरामांसी मूशीरञ्च लवङ्गं नागरन्तथा॥
सहभूते ततः पश्चात् श्लक्ष्णचूर्णानि निःक्षिपेत्।
हन्ति यक्ष्माणमत्युग्रं कासं पञ्चविधन्तथा।
रक्तपित्तं क्षयं श्वासं ज्वरं प्लीहानमेवच॥
बालानामपि वृद्धानां यूनाञ्चैव विशेषतः।
पार्श्वशूलञ्च हृत्शूलमम्लपित्तं वमिन्तथा॥
बृहद्वासादि नामाय महादेवेन निर्म्मितः॥

भेकुरि २५ पल, कण्टकारी २५ पल, अकलविर मूल २५ पल, बासकमूल २५ पल, सबाके शुखाई कुटि खुन्दिले एक द्रोण जलत २५ सेर ४८ तोला दि थालीत सिद्ध करिव। पाद शेष थुलि ६ सेर ३२ तोला राखि नमाइ छद वस्त्रेरे चाकिले १॥० सेर ८ टका खगड गुड़ दि चिकोण घिउ ३२ तोला, कणा ३२ तोला, कुड़तालीशपत्र, मरिच, तेजपत्र, मुरामांसी, विरिणामूल, लवङ्ग, शुगठी, दालचिनि, मार्गीमूल, सुगन्धवाला, मथा, एषां प्रत्येक तोलक द्वयं गृहीत्वा, श्लक्ष्ण चूर्णं कृत्वा, जारिताभ्र पलं सर्व्वं च एकं मिश्रण करि, पाकावसान हले नमाइ दिव। शीतल हले मधु ६४ तोला दिव। २ तोलाके खाव।

## ( रसार्णवे ) रसेन्द्रगुड़िका

कर्षं शुद्धरसेन्द्रस्य स्वरसेन जयाद्वयोः।
शिलायां खल्लयेत्तावद्यावत् पित्तं घनं ततः॥
जलकर्णाकाकमाची-रसाभ्यां भावयेत् पुनः।
सौगन्धिकपलं भृङ्गस्वरसेन विभावितम्॥
चूर्णितं रससंयुक्तमजाक्षीरपलद्वये।
खल्लितं घनपिण्डन्तु गुड़ीं स्विन्नकलायवत्।
कृत्वादौ शिवमभ्यर्च्च्य द्विजातीन् परितोष्य च।
जीर्णान्ने भक्षयेदेकां क्षीरमांसरसाशनः॥
सर्व्वरूपं क्षयं श्वासं रक्तपित्तमरोचकम्।
अपि वैद्यशतैस्त्यक्तमम्लपित्तं नियच्छति॥

शुद्ध रस २ तोला चिकोण शीला पात्रत जयन्ती पत्र रसे १ प्रहर मर्द्दिव। आदार रसेरे १ प्रहर। पाचे घन हने जलकर्णि काकमाची दुइर रसेरे मर्द्दिव। शुद्ध गन्धक १ पल लै भृङ्गराजर रसेरे मर्द्दि मिश्र करिव। चूर्णित हले छागी क्षीरेरे मर्द्दिव। पिण्डवत् हले भिजोवा कलामाह प्रमाणे वरिक—शिवार्च्चन कराइ, द्विजवैधक सन्तोष कराइ अन्न जीर्ण हले एक बरि छागी दुग्धेरे, छागी मूत्रेरे वा खाव। क्षीर मांस रस खाव।

## बृहद्रसेन्द्रगुड़िका

कुमार्य्या-त्रिफलामृङ्क्तैश्चित्रकस्य रसैः क्रमात्।
शोधयित्वाम्बुनाराजिगृहधूमहरिद्रया॥
पञ्चेष्टका रजोभिर्व्वा राजापत्र-रसेन वा।
शृङ्गवेररसेनापि शोधयित्वा पुनः पुनः॥
प्रक्षालयेत्ततः पश्चाक्षालयेद् वसने घने।

कर्षद्वयं रसेन्द्रस्य भावयेद्विजयारसे ।
शीलायां खल्लयेत्तावद्यावच्छूर्णत्वमागतं ॥
जलकर्णाकाकमाचीरसाभ्यां भावयेत् पुनः ।
सौगन्धिकपलं शुद्धं अर्द्धं मरिचटङ्कनं ॥
माक्षिकञ्च शिखिग्रीवं तालकञ्चाभ्रकन्तथा ।
एतांस्तु मिलितान् कृत्वा भावयेदार्द्रकद्रवैः ॥
रक्तिद्वयप्रमाणेन गुटिकां कारयेद्भिषक् ।
जीर्णान्ने भक्षयेदेकां क्षीरमांसरसाशनः ॥
हन्ति कासान् क्षयं श्वासं रक्तपित्तमरोचकम् ।
पाण्डुक्रिमिज्वरहरं कृशानां पुष्टिवर्द्धनं ॥
वाजीकरणमुद्दिष्टमम्लपित्तहराङ्गकं ॥

रस ४ तोला, त्रिकोण शीला पात्रत लै कुमारी, त्रिफला, भृङ्गराज, चिता एइ सकलर रसेरे मर्द्दन करिव क्रमे । जलेरे क्षालन करि पाचे लाइगुटी, आलान्धु, हालधि, इटा, इसव चूर्णेरे मर्द्दन करिव, क्रमे रास्ना पत्रर रसेरे शोधन करि क्षालन करिव । पाचे वस्त्रेरे चाकि लै मेइ रसक पुनर्वार भाङ्ग पत्रर रसेरे मर्द्दिव, चूर्ण हले जलकर्णा, काकमाची एइ दुइर रसेरे पुनर्वार भावना दिव । पाचे शुद्ध गन्धक एक पल दि, रस कज्जली करि जालुक, सुवगा ४ तोला, स्वर्ण माक्षिक, हरिताल, तुतिया, अभ्र प्रत्येके ४ तोलाकै दिव । सवाके मिश्रित करि आदार रसेरे भावना दिव ७ वार, पाचे २ रति प्रमाणे वरि करिव, पूर्ववत् भक्षयेत् ।

इति वैद्यकसारोद्धारे यक्ष्माधिकारः ।

## १५ । अथ कासचिकित्सा

स्वेदश्छर्दिर्धूमपानं मांसानि विविधानि च ।
सुरापुरातनं सर्पिः शस्य ते कासरोगिणां ॥
वस्तिमोक्षमसृक्कर्म्मव्यायामं दन्तघर्षणं ।
वेगरोधं तथा मत्स्यं कुन्दं सर्षपमेव च ॥
वर्ज्जयेत् कासरोगार्त्तः शरीरहितमाचरेत् ।
पञ्चमूली-कृतः क्वाथः पिप्पलीचूर्णसंयुतः ।
रसान्नमश्नतो नित्यं वातकासमनुदस्यति ॥

स्वल्प पञ्चमूलो मिलित २ तोला, जल ४ पल, शेष १ पल, शाल्यन्न, आरण्यक पक्षिर मांस रस पथ्य करिव ।

## अपराजिता लेहः

शटीशृङ्गीकणाभार्गीगुडूच्यारिदयासकैः ।
सतैलैर्व्वातकासघ्नः लेहोयमपराजितः ॥

शटी १० तोला, काकड़ा शृङ्गी १ तोला, पिप्पली १ तोला, अकलविर १ तोला, मथा १ तोला, कुण्ठैलता १, पुराण गुड़, तिल तैलेन लेहः कार्य्य ।

## पित्तकासचिकित्सा

पित्तकासे तनुकफे त्रिवृतां मधुरैर्य्युताम् ।
[ दद्याद् घनकफे तिक्तैर्विरेकार्थं युतां भिषक् ]॥

तेलीया चूर्ण २ तोला, मधु २ तोला खाद्यम्। तेलीया चूर्ण २ तोला, कटुकी चूर्ण २ तोला मधुना लेह्यं ।

बला द्वि वृहती वासा-द्राक्षाभिः क्वथितं जलम् ।
पित्तकासापहं पेयं शर्करामधुयोजितम् ॥

वास्याल, कन्टकारी, भेकुरि, वाहक, गमारीगुटी, एषां प्रति ( मिलित ) २ तोला, जल ४ पल, शेष १ पल, मधुशर्करा प्रक्षिप्य पेयं ।

मधुना पद्मवीजानां चूर्णं पैत्तिककासनुत् ।

पद्मवीजचूर्ण मधुना मिश्र खाद्यम ।

## कफकासचिकित्सा

वलिनं वमनेनादौ शोधितं कफकासिनम् ।

कफ कासत वलवन्त पुरुषक वान्ति कराइ शुद्ध करिव ।

यवान्नैः कटुरुक्षोष्णैः कफघ्नैश्चाप्युपाचरेत् ॥
पिप्पलीक्षारकैर्यूषैः कौलत्थैर्मूलकस्य च ।
लघून्यन्नानि भुञ्जीत रसैर्व्वा कटुकान्वितैः१

१ । लवाङ्गयूषः—

मुद्गामलाभ्यां यवडाडिमाभ्यां कर्कन्धुनामूलक-शुण्ठकेन ।
शुण्ठी-कलाभ्याञ्च कुलत्थकेन यूषोलवाङ्गः कफरोगहन्ता ॥

—इति चक्रदत्ते अधिको पाठः ।

यवाज, रक्तशाल्यन्न, कटु, शुष्क द्रव्य, उष्ण, मरिचराजिकादिः। पिप्पली, क्षार, मुद्‌ग, माष, कुलत्थमाष, मूलक, एइ सकल द्रव्य व्यञ्जन करि लघुभोजन अल्पाहार करि कफ नष्ट करिब। कटु द्रव्येरे मांसरस खाब।

पौष्करं कट्‌फलं भार्गीविश्वपिप्पलीसाधितम्।
पिवेत् क्वाथं कफोद्रेके कासे श्वासे च हृद्‌ग्रहे॥

कूर, काइफल, अकलविर, आदा, पिप्पली एषां प्रति ( मिलित ) २ तोला, जल ४ पल, शेष १ पल, मधु दत्वा पेयं।

स्वरसं शृङ्गवेरस्य माक्षिकेण समन्वितम्।
पाययेच्छ्‌वासकासघ्नं प्रतिश्यायकफापहम्॥

शृङ्गवेर रस ४ तोला, मधु १ तोला आलोड्य पेयम्।

पार्श्वशूले ज्वरे कासे श्वासे श्लेष्ममसुद्भवे।
पिप्पलीचूर्णसंयुक्तं दशमूलीजलं पिवेत्॥

दशमूलानां मिलि २ तोला, जल ४ पल, शेष १ पल, पिप्पलीचूर्ण मधु दत्वा पेयं।

## कट्‌फलादिः

कट्‌फलं कत्तृणं भार्गी-मुस्तं धान्यं वचाभया।
शृङ्गी-पर्पटकं शुण्ठीसुराह्वा च जलेश्वृतम्॥
मधुहिङ्गुयुतं पेयं कासे वातकफात्मके।
कण्ठरोगे क्षये शूले श्वासहिक्काज्वरेषु च॥

काइफल, गन्धविरिणा, अकलविर, मथा, धान्यक, वच, हरीतकी, काकटाश्रृङ्गी, क्षेत्‌कपरा, आद्रक, देवदारु एषां मिलि २ तोला, जल ४ पल, शेष १ पल, मधु २ तोला, हिङ्गु २ रति प्रक्षिप्य पेयं।

वातश्लेष्मकृते कासे तालीशाद्यं प्रयोजयेत्।

वात, कफ दुइ दोष कासत, तालीशादि प्रयोजयेत्॥

यक्ष्माधिकारोक्तं॥ कण्टकारि-कृतः क्वाथः सकृष्णः सर्व्वकासहा।

कण्टकारी २ तोला, जल ४ पल, शेष १ पल, पिप्पलीचूर्णान्दत्वा पेयं।

वासकस्वरसः पेयो मधुयुक्तो हितैषिणा [ हिताशिना ]
पित्तश्लेष्मकृते कासे रक्तपित्ते विशेषतः ॥

वासा पत्ररस ८ तोला मधु दत्वा पेयं ।

## मरिचाद्यं चूर्णम्१०

मरिचस्य पिप्पलीनां दाड़िमगुड़यावशूकानाम् ।
सर्व्वौषधैरसाध्या ये कासाः सर्व्ववैद्य-विवर्जिताः ॥
अपि पूयं छर्द्दयतां तेषामिदमौषधं पथ्यम् ॥

मरिच १ तोला, पिप्पली १ तोला, दाड़िम १ तोला, यवक्षार १ तोला, पुराण गुड़ १ तोला सर्व्वचूर्णं गुडेन सम्मर्द्य भक्ष्यं ।

## समशर्करं चूर्णम्

लवङ्गजातीफलपिप्पलीनां भागान् प्रकल्प्याक्षयुतानमीषां११ ।
पलार्द्धमेकं मरिचस्य दद्यात् पलानि चत्वारि महौषधस्य ॥
सितासमं चूर्णमिदं प्रमह्य रोगाणिमानाशु बलान् निहन्यात् ।
कासज्वरारोचकमेहगुल्मश्वासाग्निमान्द्यग्रहणीप्रदोषान् ॥

लवङ्ग १ तोला, जाइफल १ तोला, पिप्पली १ तोला, मरिच ४ तोला, शुण्ठी ४ पल सर्व्वचूर्ण समान सित शर्करा ।

## [ मरिच ] धूमः

मनःशिलालमधक१२ मांसी मुस्तेङ्गुदैः पिवेत्१३ ।
एष कासान् पृथग्द्वन्द्व-सर्व्वदोषसमुद्भवान् ॥

१० । कर्षः कर्षार्द्धमथोपलं पलद्वयमथार्द्धकर्षश्च ।
मरिचाद्यचूर्णे इति पाठः चक्रदत्ते ।
मरिच १ कर्ष, पिप्पली १ तोलक, अम्लदाड़िमवीज १ पल, गुड़ २ पल, यवक्षार १ तोला ।
—चक्रदत्तटीकायां शिवदासः ।

११ । समानमीषां इति मूले ।

१२ । मरिचमित्यत्र मधुकमिति पाठः चक्रदत्ते ।

१३ । धूमं व्यहश्च तस्यानु, सगुड़ञ्च पय. पिबेत् । —इत्यधिकः चक्रदत्ते ।

मनःशिला, हरिताल, मरिच, जटामांसी मथा, पुत्रजीवी वल्कल एषां समभाग चूर्णात् किञ्चिद् बदराङ्गार सरावे दत्वा, तदुपरि सच्छिद्रमपरं दत्वा नलिकया तं धूमं पिवेत्। ततः सगुडदुग्धं कोष्णं पिवेत्।

मनःशिला-लिप्तदलं वदर्य्यातपशोषितम्।
सक्षीरं धूमपानञ्च सर्व्वकासनिवारणम्॥

शोधित मनःशिलया वदरी पत्रं लिप्त्वा आतपे संशोष्य तथैवाङ्गार सरावे दत्वा धूमं पीत्वा, क्षीरं पेयं।

अर्कचूर्णशिले१४ तुल्ये तदर्द्धेन कटुत्रयं।
चूर्णित वह्निनिःक्षिप्तं पिवेद्धूमन्तु योगवित्॥
भक्षयेदथ ताम्बुल पिवेद् दुग्धमथाम्बु वा।
कासाः पञ्चविधा यान्ति शान्तिमाशु न संशयः॥

अर्कमूल चूर्ण १॥ तोला, त्रिकटुचूर्ण अर्द्धतोला, मनःशिला अर्द्धतोला मिलित्वा पूर्व्ववद् धूमं पिवेत्। धूमपानान्तरं ताम्बुलं भक्ष्य, तदनन्तरं तप्तदुग्ध पेयं।

## दशमूलघृतम्

दशमूलाढ़के प्रस्थं घृतस्याक्षसमैः पचेत्।
पुष्कराह्वशटीविल्वसुरसव्योषहिङ्गुभिः॥
पयोऽनुपानं१५ तत् पेयं कासे वातकफात्मके।
श्वासरोगेषु सर्व्वेषु कफवातात्मकेषु च॥

घृत ३ सेर, दशमूल ५० टका, जलक्वाथार्थं ५० सेर, शेष १२ सेर, कल्क कुड़ २ तोला, केतुरी २ तोला विल्वमूल २ तोला, पलाशमूल २ तोला, त्रिकटु ६ तोला, हिङ्गु २ तोला, तप्तजलमनुपेयं।

## अगस्त्यहरीतकी

दशमूली स्वयं गुप्तां शङ्खपुष्पीं शटीं बलां।
हस्तिपिप्पल्यपामार्गपिप्पलीमूलचित्रकान्॥

१४। अर्कचूर्णशिले "इत्यत्र अर्कच्छल्लशिले" इति चक्रदत्ते पाठः।
अर्कच्छल्लम्, अर्कमूलत्वक् इति शिवदासः।
१५। पयोऽनुपानमित्यत्र, पेयानुपानमिति चक्रदत्ते पाठः।

भार्गीपुष्करमूलञ्च द्विपलांशं यवाढ़कम् ।
हरीतकीं शतञ्चैकं जले पञ्चाढ़के पचेत् ॥
यवैः स्विन्नैः कषायं तं पूतं तच्चाभयाशतम् ।
पचेद्गुडतुलां दत्त्वा कुडवञ्च पृथग् घृतात् ॥
तैलात् सपिप्पलीचूर्णात् सिद्ध-शीते च माक्षिकात् ।
लिह्याद्द्वे चाभये नित्यमतः खादेद् रसायनात् ॥
तद्वलीपलितं हन्याद् वर्णायुर्बलबर्द्धनम् ।
पञ्चकासान् क्षय श्वासं हिक्कां सविषमज्वरान् ॥
हन्यात्तथा ग्रहण्यर्शो हृद्रोगरुचिपीनसान् ।
अगस्त्यविहितं धन्यमिदं श्रेष्ठं रसायनम् ॥

क्काथार्थ दशमूल मिलि २० पल, कपिकच्छू २ पल, शङ्खकुन्द २ पल, केतुरी २ पल, वरियाल २ पल, हस्ति पिप्पली २ पल, अपामार्ग २ पल, पिप्पली मूल २ पल, चितामूल २ पल, अकलविर मूल २ पल, कूर २ पल, [illegible] ३ सेर, हरीतकी १०० टा, क्काथजल ४५ सेर, शेष १५ सेर, एइ क्काथ रसत, पुराण गुड ५ सेर, सर्व्वमेकीकृत्य, वस्त्रे गालयित्वा लौहशलाकयाकृत-छिद्र हरीतकीं तिलतैलेन भर्ज्जित्वा सर्व्वं पात्रे सिद्धं, घृत ३२ तोला, पिप्पली चूर्ण ३२ तोला शीते मधु ६४ तोला दिव । हरीतकी एका खाद्या ।

## वातकासे पञ्चामृतरसः

शुद्धसूतस्य भागैकं द्वौभागौ गन्धकस्य च ।
भागत्रयं मृतं ताम्रं मरिचं दशभागिकं ॥
मृताभ्रस्य चातुर्भागं भागमेकं विषं क्षिपेत् ।
अम्लेन मर्द्दयेत् सर्व्वं माषैकं वातकासनुत् ॥
अनुपानं लिहेत् क्षौद्रैर्विभीतकफलत्त्वचं ।

शुद्ध रस १ तोला, शुद्ध गन्धक २ तोला, मृतताम्र ३ तोला, मरिच १० तोला, मारिताभ्र ४ तोला, विष १ तोला जम्बीर रसेन दिनं विमर्द्य अतो मद्यं । भमरागुटीर छाल मधुना लेह्यं मात्रा ६ रति ।

## विजयभैरवोरसः

सूतकं गन्धकं लौहं विषमभ्रञ्च ताम्रकं १६ ।
विडङ्गं रेणुकं मुस्तं एलाग्रन्थिकफेशरं ॥

१६ । "सूतकं गन्धकं लौहं विषं वत्सकमेव च" इति चक्रदत्ते पाठः ।

त्रिकटुत्रिफलाचित्रं शुद्धं जैपालवीजकम् ।
एतानि समभागानि गुडं द्विगुणमुच्यते ॥
तिन्तिडी वीजमात्रेण प्रातःकाले च भक्षयेत् ।
श्वासं कासं क्षयं गुल्मं प्रमेहं विषमज्वरम् ।
अजीर्णं ग्रहणीदोषं शूलं पाण्ड्वामयन्तथा ॥
आध्माने हृदये शूले वातरोगे गलग्रहे ।
यक्ष्मणि निर्म्मितो ह्येष ब्रह्मादि त्रिदिवेश्वरैः ॥

रस १ तोला, गन्धक १ तोला, लौहा १ तोला, विष १ तोला, अभ्र १ तोला, ताम्र १ तोला, विडङ्ग १ तोला, रेणुक १ तोला, मथा १ तोला, एलाचि १ तोला, गाठियन १ तोला, नागकेशर १ तोला, त्रिकटु ३ तोला, त्रिफला ३ तोला, चित्रक १ तोला, शुद्ध जैपाल वीज १ तोला, गुड ४० तोला मिश्रयित्वा तिन्तिडी वीज मात्रं भक्ष्यं ।

## बृहद्रसेन्द्रगुटिका

कर्षं शुद्धरसेन्द्रस्य गन्धकस्याभ्रकस्य च ।
लोहचर्णस्य ताम्रस्य तालकस्य विषस्य च ॥
मनःशिलायाः क्षाराणां वीजस्य धुस्तूरस्य च ।
मरिचस्यापि सर्व्वेषां समं चूर्णं प्रकल्पयेत् ॥
जयन्ती-चित्रकं मानं घण्टकर्णोऽथ १७ मण्डूकी
शङ्काशनं केशराज-भृङ्गराजार्द्रकं तथा ॥
सिन्धुवारस्य च रसैः कषमात्रैस्तु मर्द्दयेत् ।
कलायपरिमाणान्तु गुटिकां कारयेद्भिषक् ॥
हन्ति पञ्चविधं कासं श्वासञ्चैव सुदारुणम् ।
कफवात-भयान् रोगान् आनाहं विड्विवद्धतां ॥
अग्निमान्द्यारुचिञ्चैव उदरं पाण्डुकामलां ।
रसायनी च वृष्या च बलवर्णप्रसादनी ॥
मधुरं वृंहणं स्निग्धं मत्स्यं मांसञ्च जाङ्गलम् ।
घृतपक्वं सदा भक्ष्यं रुक्षं तीक्ष्णञ्च वर्जयेत् ॥

१७ । घण्टकर्णोऽथ ।—घारकोल इति ख्यातः, मण्डुकपर्णी थानकुनी । जयन्त्यादीनां स्वरसः पृथक् कर्षपरिमितः । —रसेन्द्र-टीकायां गोपालः ।

रस २ तोला, गन्धक २ तोला, अभ्र २ तोला, लोहा २ तोला, ताम्र २ तोला, हरिताल २ तोला, विष २ तोला, मन.शिला २ तोला, यवक्षार २ तोला, स्वर्जिकाक्षार २ तोला, सुवगा २ तोला, धुस्तूरबीज २ तोला, मरिच २ तोला, कज्जली पूर्व्वकं सर्व्वमेकीकृत्य जयन्ती २ त ला, चिता २ तोला, मानकचु २ तोला, घण्टाकर्ण २ तोला, [ खारकोण ] थानकुनी २ तोला, [ पुनर्णवा २ ] माङ्ग २ तोला, केशराज २ तोला, भृङ्गराज २ तोला, आद्रक २ तोला, पचतोया २ तोला सर्व्वेषां रसेन विमर्द्य, गुटिका कार्य्या कलाय प्रमाणा, एकामाद्रकरसेन पेयं ।

## चन्द्रशेखर रसः

रसगन्धकलोहाभ्रं कृष्णातालीशटङ्कनं ।
शुभामरिचभार्गी च प्रत्येकं तोलकं शुभं ॥
वासाभार्गीकाकमाचीभृङ्गीव्याघ्रीगुडूचिका ।
भेकपर्णी-पटोलञ्च स्वरसैर्भावयेत्ततः ॥
पित्ताश्रितं वातभवं कासं हन्यात् सुदुस्तरं ।
अङ्गतापं स्वरगद गरदोषनिसूदनम् ॥
चन्द्रशेखर-नामायं पञ्चकास निवारयेत् ॥

रस १ तोला, गन्धक १ तोला, लोहा १ तोला, अभ्र १ तोला, पिप्पली १ तोला, तालीश १ तोला, टङ्कन १ तोला, वंशलोचन १ तोला, मरिच १ तोला, अकलविर १ तोला, एषां प्रति १ तोला के चूर्ण लै प्रथमे वासक रसेरे भावना दिव । पाचे अकलविर, काकमाची, भृङ्गराज, कण्टकारी, गुडूची पुनर्णवा पटोल एषां रसैर्भावयित्वा, द्विगुञ्जामाना वटिका कार्य्या । उर क्षतकासे खण्डक-कष्माण्डकः प्रशस्तः ।

पिप्पली-पद्मकं द्राक्षा, सुपक्वं बृहतीफल ।
घृतक्षौद्रयुतोलेहः क्षतकासनिकृन्तनः ॥

पिप्पलीचूर्ण २ तोला, पद्मकाष्ठ २ तोला, गमारीगुटी २ तोला, पक्व बृहतीफल २ तोला, एषां चूर्णानि घृत मधुभ्यां लेह्यं ।

## रास्नादि लौहः

रास्नातालीशकर्पूर-भेकपर्णी-शिलाह्वयैः ।
त्रिक त्रय समयुतो लौहो यक्ष्मान्तकोमतः ॥
सर्व्वोपद्रवसंयुक्तमपि वैद्य-विवर्जितम् ।
हन्ति कासं स्वराघातं क्षयकासं क्षतक्षयं ॥

रास्ना १ तोला, तालीश १ तोला, काफुर १ तोला, मानिमुनि १ तोला, शिलाजतु १ तोला, त्रिकटु ३ तोला, त्रिफला ३ तोला, बिडङ्ग १ तोला, चिता १ तोला, मथा १ तोला, सर्व्वसमलोहा १४ तोला पूर्व्वलौहवत् कार्य्यं, घृतमधुभ्यां रक्तिद्वयं लेह्यम्।

सम्पूर्णरूपं क्षयजं दुर्व्वलं परिवर्ज्जयेत्।
नवोत्थितं वलवतः प्रत्याख्याय चरेत् क्रियाम्॥

कासव्याधि सान्निपातिक हले औषध निदिव। व्याधि नवीन हले औषध दिव।

॥ इति वैद्यकसारोद्धारे कासचिकित्सोपदेशः ॥

## १६। अथ श्वासहिक्कयोः

हिक्काश्वासातुरे पूर्व्वं तैलाक्ते स्वेद इष्यते।
प्रस्वापयेद् दिवा यत्नात् नवहिक्कातुरं भिषक्॥

हिक्कातुरे पूर्व्वे तैल घसि सेक लव। दिवसत सुव।

कृष्णाधात्री-सिताशुण्ठी-काशीशं[१८] दधिनाम च।
पाटल्याः सफलं पुष्पं कृष्णाखर्ज्जूरमस्तकम्।
षडेते पादिका लेह्या हिक्काघ्ना मधुसंयुताः॥

बदरी गुटीर मज्जा, सौवीराञ्जन आखे, एषां मधुना लेह्यं। एवं कटुकी, नागेश्वर, गेरुमाटी, मधुना लेह्यं। पिप्पली, आमलकी शर्करायुक्तं लेह्यं। शुण्ठी काशीशं दधिना लेह्यं। पाटलीफलपुष्पं मधुना लेह्यं, पिप्पली, खर्जुर, मथा मधुना लेह्यं।

नागरं गुड़संयुक्तं हिक्काघ्नं परमौषधं॥

आद्रक रस ४ तोला, गुड़ २ तोला, भक्ष्यं।

तैलेन मक्षिकाविष्ठा-नस्यम्वालक्तकाम्वुना।
स्त्रीदुग्धे मक्षिकाविष्ठा-नस्यम्वालक्तकाम्वुना॥
योज्यं हिक्काभिभूताय स्तन्यं वा चन्दनान्वितम्।

रक्तचन्दन स्त्रीदुग्धेन नस्यं।

१८। काशीशं, धातुकाशीशं; दधिनाम, कपित्थफलं।
—चक्रदत्तटीकायां शिवदासः।

कृष्णामलकशुण्ठीनां चूर्णं मधुसितायुतम् ।
मुहुर्मुहुः प्रयोक्तव्यं हिक्काश्वासनिवर्हणम् ॥

पिप्पली चूर्ण १ तोला, आमलकी १ तोला, शुण्ठी १ तोला, एतानि चूर्णानि शर्करा-मधुभ्यां लेह्यं वारम्वारं ।

मधुसौवर्च्चलोपेतं मातुलुङ्गरसं पिवेत् ।

तोलङ्ग रस २ तोला, सौवर्च्चल १६ रति मधुना पेयं ।

हिक्कार्त्तस्य पयश्छागं हितं नागरसाधितम् ।

शुण्ठी २ तोला, छागदुग्ध १ पल, पानी ४ पल, दुग्धावशेषः कर्त्तव्यः ।

निर्धमाङ्गारनिःक्षिप्त-क्षुण्णमाषभवं रजः ।
हिक्कापञ्चापि शमयेत् धूमः पीतो न संशयः ॥

माषचूर्ण मङ्गारे नि:क्षिप्य, नलिकया धूमं पिवेत् ।

अन्नजा यमला क्षुद्रा गम्भीरा महती तथा ।

एइ पञ्चहिक्का, वायु, कफ लग हुयि करे । वायु, कफ उपशमन क्रिया करिव ।

ससैन्धवं फलरसं कोष्णं दद्याद् विरेचने ।

त्रिफला क्वाथ रसं कोष्णं, सैन्धव प्रक्षेपेन पिवेत् ।

## मेघडम्बरो रसः

तण्डुलीयरसैः पिष्टं सूततुल्यञ्च गन्धकं ।
बज्रमुषाधृतः पश्चाद् भूधरे भष्मतां व्रजेत् ॥
दशमूलकषायेण भावयेद् दिवसत्रयं ।
गुञ्जाद्वयं हरत्याशु पञ्च हिक्काः सुदारुणाः ॥
अनुपानेन दातव्यो रसोऽयं मेघडम्बरः ।

रस १ तोला, खुलरा रसत शोधित गन्धक १ तोला, कज्जलीकृत्य मूषायां धृत्वा, भूधरे पुटेत्, तत उद्धृत्य दशमूल क्वाथेन दिनत्रयं भावयेत् । अतो गुञ्जाद्वयं अनुपानेन भक्ष्य ।

## शर्कराष्टकचूर्णम्

हरीतकीकणा-भार्गी पुष्करं कर्कटी शटीं ।
शर्कराष्टगुणं चूर्णं अनुपानं प्रकल्पयेत् ॥

हरीतकी, पिप्पली, अकलविर, कुर, काकराश्रृङ्गी, केतुरि, एषां समभाग चर्ण, चिनि सर्व्वचूर्ण र ८ गुण ; तस्यानुपानं ।

## १७ । अथ श्वासे

दशमूलीकषायस्तु पुष्करेणावचूर्णितः ।
कासश्वासप्रशमनं पार्श्वहृच्छूलनाशनः ॥

दशमूल काथ कुष्ठचूर्णेन पेयं ।

अभयानागरकल्कं पौष्करयवशूकमरिचकल्कं वा ।
तोयेनोष्णेन पिवेत् श्वासी हिक्की च तच्छान्त्यै ॥

शिलिखा, शुगठी, वटि खाव । कुर, यवक्षार, मरिच वटि खाव ।

कुलत्थनागरव्याघ्री-वासाभिः कथितं जलम् ।
पीतं पुष्करसंयुक्तं हिक्काश्वासनिवर्हणम् ॥

कुलत्थ, शुगठी, कगटकारी, वाहक, ए-१ ( मिलित ) २ तोला, जल ४ पल, शेष १ पल, कुष्ठ चूर्णेन पेयम् ।

गुडं कटुकतैलेन मिश्रयित्वा समं लिहेत् ।
त्रिसप्ताह प्रयोगेन श्वासं निर्म्मूलतो जयेत् ॥

गुड १ तोला, कटु तैल १ तोला तयोर्लेहम् ।

### भृङ्ग्यादिचूर्णम्

भृङ्गीकटुत्रिकफलत्रय कण्टकारीभार्गी-सपुष्करजटालवणानि पञ्च ।
चूर्णं पिवेदशिशिरेण जलेन हिक्काश्वासोर्द्ध्ववातकसनारुचिपीनसेषु ॥

काकटाश्रृङ्गी १ तोला, त्रिकटु ३ तोला, त्रिफला, कगटकारी १ तोला, अकलचिर १ तोला, कुर १ तोला, पञ्चलोण ५ तोला, एषां चूर्णानि मिश्रयित्वा, उष्ण जलेन पेयम् ।

### भार्गीगुडः

शतं संगृह्य भार्ग्यास्तु दशमूल्यास्तथापरम् ।
शतं हरीतकीनाञ्च पचेत् तोयचतुर्गुणे ॥
पादावशेषे तस्मिंस्तु रसे वस्त्रपरिस्रुते ।
आलोड्य च तुलां पूतां गुडस्य त्वभया ततः ॥

पुनः पचेत्तु मृद्वग्नौ यावल्लेहत्वमागतम् ।
शीते च मधु चात्र षट्पलानि प्रदापयेत् ॥
त्रिकटुस्त्रिसुगन्धञ्च पलिकानि पृथक् पृथक् ।
कर्षद्वयं यवक्षारं संचूर्ण्य प्रक्षिपेत्ततः ।
भक्षयेदभयामेकां लेहस्यार्द्धपलं लिहेत् ॥
श्वासं सुदारुणं हन्ति कासं पञ्चविधं तथा ।
स्वरवर्णप्रदो ह्येष जठराग्नेश्च दीपनः ॥
पलोक्ते ह्यागते माने न द्वैगुण्यमिहेष्यते ।
हरीतकी शतस्यात्र, प्रस्थत्वादाढ़कं जलम् ॥

अकलबिर मूल ५ सेर, हरीतकी १०० टा, दशमूल ५ सेर, पाकार्थ जल ८८ सेर, शेष २२ सेर, चेकि पुनर्व्वार बहाव। पूर्व्व हरीतकी १०० दिव, गुड़ ५ सेर दि पाक करि॰; सिद्धहले प्रक्षेप त्रिकटु १ पल, त्रिसुगन्धि १ पल, यवक्षार ४ तोला, शीते मधु ६ पल प्रक्षेप। एक हरीतकी सहिते ४ तोला तप्तजलेन सेवेत्।

## श्वासकुठारो रसः

रसं गन्धं विषञ्चैव टङ्कनं स मनःशीला ।
एतानि समभागानि, मरिच चाष्टमेवच ॥
त्रिकटु-टङ्कषट् कञ्च खल्ले कृत्वा विमर्द्दयेत् ।
एकैकं मरिचं दत्वा मर्द्दयेच्च विषं पृथक् ।
ततः समस्त सविषं श्लक्ष्ण चूर्णानि कारयेत् ॥
रसःश्वासकुठारोऽयं द्विगुञ्जः श्वासकासजित् ।
प्रतिश्यायं तथा यक्ष्म चैकादशविधं क्षयं ॥
हृद्रोगं पार्श्वशूलञ्च स्वरभेदं सुदारुणम् ।
सन्निपातं महाघोरं तन्द्रामोहान्वितं जयेत् ॥
गता संज्ञा यदा पुंसां, तदानस्यं प्रदापयेत् ।
घ्रापयेन्नासिकारन्ध्रे संज्ञाकरणमुत्तमम् ॥
सूर्य्यावर्त्तार्द्धभेदे च दुःसहा... शिरोव्यथां ।
पीनसं चातिदुर्गन्धं नस्यञ्च नाशयेत् क्षणात् ॥
अनुपानं पर्णरसं, चाद्रकस्वरसन्तथा ॥

रस १ तोला, गन्धक १ तोला, विष १ तोला, शुद्ध सुवगा १ तोला, मनःशिला १ तोला, मरिच ८ तोला, त्रिकटु ६ तोला मरिच दि विष मर्द्दित करिव, जलेन द्विगुञ्जा प्रमाण वटिका कार्य्या।

**अपर श्वासकुठारः**

कर्षं शुद्धरसेन्द्रस्य गन्धकस्याभ्रकस्य च ।
लौहचूर्णस्य ताम्रस्य टङ्कनस्य विषस्य च ।
मनःशिला क्षारयुगे हरितालं विचूर्णितम् ।
त्रिकटु चूर्णितं पश्चात् मरिचञ्चाष्टभागिकम् ॥
आर्द्रकस्य रसेनैव वटीं चिन्नकलायवत् ।
रसः श्वासकुठारोऽयं सर्व्वश्वासविकारनुत् ॥

**इति वैद्यकसारोद्धारे हिक्काश्वासाधिकारः ॥**

## १८ । अथ स्वरभेदे

वाते सलवणं तैलं पित्ते सर्पिः समाक्षिकम् ।
कफे सक्षारकटुकं क्षौद्रं कवड इष्यते ॥
गले तालुनि जिह्वायां दन्तमूलेषु चाश्रितः ।१६

तिल तैलं किञ्चिदुष्णीकृत्य सैन्धवचूर्णं प्रक्षिप्य कवडः वाते । घृतमधुभ्यां कवडः पित्ते । त्रिकटु यवक्षार मधुना कफे ।

आद्ये कोष्णं जलं पेयं जग्ध्वाघृतगुड़ौदनम् ।

तण्डुल घृतमर्ज्जिचूर्ण गुड़ मिश्रं खादेत् ।

क्षीरान्न पानं पित्तोत्थे पिबेत् सर्पिरतन्द्रितः ।

क्षीरान्नं घृतेन पातव्यम् ।

पिप्पलीं पिप्पलीमूलं मरिचं विश्वभेषजम् ।
पिबेन्मूत्रेण मतिमान् कफजे स्वरसक्षये ॥

पिप्पलीचूर्ण ६ रति, पिप्पली मूल ६ रति, मरिच ६ रति, शुण्ठी ६ रति चूर्ण करि गोमूत्र ४ तोला दि खाव ।

**चव्यादिचूर्णं**

चव्याम्लवेतसकटुत्रिकतिन्तिडीक,
तालीशजीरकतुगादहनैः समांशैः ।

---

१६ । तेन निष्कास्यते श्लेष्मा स्वरश्चास्य प्रसीदति ॥ —इति चक्रदत्ते अधिको पाठः

चूर्णं गुडप्रमुदितं त्रिसुगन्धियुक्तम् ।
वैस्वर्य्यपीनसकफारुचिषु प्रशस्तम् ॥

चै १ तोला, तालीश १, थैकरा १, त्रिकटु ३, तेतेली १, मोगजीरा १, वंशलोचन १, चिता १, तेजपत्र १, एलाचि १, दालचिनि १ सबारे चूर्णर तुल्य पुराण गुड दि मिश्र करि १ तोला के खाव तप्त जलेरे ।

तैलाक्तं स्वरभेदे वा खदिरं धारयेन्मुखे ।

खदिरचूर्ण तिल तैल दि मुखत लव । खैरचूर्ण तिल तैल दि मुखत लव । शिलिका पिप्पलीचूर्ण समाने मुखत लव ।

## भृङ्गराजाद्यंघृतम्

भृङ्गराजामृतावल्ली वासकदशमूलकासमर्द्दरसैः
सर्पिः सपिप्पलीकं सिद्धं स्वरभेदकासजिन्मधुना ॥

भृङ्गराज ४ तोला, गुल्ची ४ तोला, वासक ४ तोला, दशमूल ४० तोला, अकलबिर ४ तोला, जल ४४ सेर, शेष १९ सेर, घृत ३ सेर सिद्ध करि, पिप्पलीचूर्ण ८ तोला दिव ।

इति वैद्यकसारोद्धारे स्वरभेदाधिकारः ॥

## १६ । अथारोचके

वमिं समीरणे पित्ते विरेकं वमनं कफे ।
कुर्य्याद् हृद्यानुकूलानि हर्षणञ्च मनोघ्नजे ॥

वातदोष अरुचित वान्ति कराव, पित्तदोष अरुचित रेचन कराव । कफदोष अरुचित वान्ति कराव । असन्तोष अरुचित मनत हर्ष जन्माव गीतादि गानेरे ।

## कृष्णादिचूर्णम्

वान्ते वचाम्बिरनिले विधिवत् पिबेत्तु,
स्नेहोष्णतोयमदिरान्यतमेन चूर्णम् ।
कृष्णाविडङ्गयवभस्महरेणुभार्गी ।
रास्नैलहिङ्गुलवणोत्तमनागराणाम् ॥

बच २ तोला, जल ३ सेर, शेष १६ तोला, अनुक्त मदनफल १ तोला, मधु १ तोला, सैन्धव १६ रति, पीत्वा वान्तिं कृत्वा पिप्पली, विडङ्ग, रेणुका, यवक्षार, हरेणु, अकलबिर, रास्ना, एलाचि, हिङ्गु, सैन्धव, शुण्ठी, एषां समभाग चूर्णात् १ तोला घृत-मधुभ्यां लिहेत् ।

पित्ते गुडाम्बुमधुके [ मधुरे ] र्व्वमनं प्रशस्तं ।
लेहः ससैन्धवसितामधुसर्पिरिष्टः ॥

यष्टिमधु १ तोला, मदनफल १ तोला, गुडमिश्र जल १ सेर सर्व्वान् आलोड्य पेयं वान्तिं कृत्वा। तदनन्तरं सैन्धव १ महा, शर्करा ॥० महा. घृत-मधुभ्यां पेयं ।

पित्ते— निम्बाम्बुच्छर्दितवतः कफजेऽनु[तु]पानं,
राजद्रुमाम्बुमधुना सहदीप्यकाढ्यम् ।
चूर्णं यदुक्तमथवाऽनिलजे तदेव ।
सर्व्वैश्च सर्व्वकृतमेवमुपक्रमेच्च ॥

निम्बछाल २ तोला, जल ४ पल शेष १ पल, मधु ॥० महा, मदनफल १ तोला, सैन्धव ॥० महा पीत्वा वमेत् । सोणालुफल मज्जा २ तोला, जल ४ पल, शेष १ पल, मधु ॥० महा,.यवानीचूर्ण ॥० महा दत्वा पिवेत् ।

कफे — कुष्ठसौवर्च्चलाजाजी-शर्करामरिचं विड़म् ।
धात्र्येलापद्मकोशीरपिप्पलीचन्दनोत्पलम् ॥
लोध्रं तेजोवती पथ्या त्र्यूषणं सयवाग्रजम् ।
आर्द्रदाड़िमनिर्य्यासश्चाजाजी-शर्करायुतः ।
सतैल-माक्षिकाश्चैते चत्वारः कवड़ग्रहाः ।
चतुरोऽरोचकान् हन्युर्वाताद्येकज सर्व्वजान् ॥

कुर, सौवर्च्चल, मोगजीरा, चिनि, मरिच, बिट् एषां सममावचूर्णं मधु २ तोला, तिल तैल २ तोला सर्व्वमालोड्य कवड़ः कार्य्यः वाते । आमलकी, एलाचि, पद्मकाष्ठ, बिरिणा मूल, पिप्पली, रक्तचन्दन, नीलभेद एषां सममागचूर्णं १ तोला, मधु १ तोला, तिल तैल १ तोला कवड़ः कार्य्यः पित्ते ।

लोध्र, तेजमुर, शिलिखा, त्रिकटु, यवक्षार, एषां सममागचूर्णंत १ तोला, मधु १ तोला, तिल तैल १ तोला, कवड़ः कार्य्यः कफे । दाड़िम रस ॥० महा, जीरा २ तोला, चिनि २ तोला, तिल तैल १ तोला, मधु १ तोला कवड़ः कार्य्यः सन्निपाते ।

त्वङ्मुस्तमेलाधान्यानि मुस्तमामलकानि च ।
त्वक् च दार्व्वी यमान्यश्च पिप्पल्यस्तेजोवत्यपि ॥
यमानी तिन्तिड़ीकञ्च पञ्चैते मुखशोधनाः [काः] ।
श्लोकपादैरभिहिताः सर्व्वारोचकनाशनाः ॥

दारुचिनि, मथा, एलाचि, धनीया, एषां चूर्णं मुखे धार्य्यम् एवं आमलकी, मथा, दारुचिनि चूर्णं मुखे धार्य्यम् एवं दारुचिनि, आनुकाठ, यवानी चूर्णं मुखे धार्य्यं एवं पिप्पली, चविक चूर्णं मुखे धार्य्यं । एवं यवानी, तिन्तिड़ी चूर्णं मुखे धार्य्यं ।

अम्लीकागुड़तोयञ्च त्वगेलामरिचान्विनम् ।
अभक्तच्छन्दरोगेषु शस्तं कवड़धारणम् ॥

तिन्तिड़ी बीज २ तोला, जल २ तोला, वस्त्रेण गालयित्वा, दालचिनि, एलाचि, मरिचचूर्ण दत्वा कवड़ः कार्य्यः ।

विट्चूर्णमधुसंयुक्तो रसो दाड़िमसम्भवः ।
असाध्यमपि संहन्यादरुचिं वक्त्रधारितः ॥

पक्क दाड़िम सवल्कले पिड़यित्वा रसः ४ तोला विट् लवण चूर्ण मधु दत्वा मुखे धार्य्यं ।

इति वैद्यकसारोद्धारे अरोचकाधिकारः ॥

## २० । अथ छर्द्दि(वान्ति)चिकित्सा

आमाशयोत्क्लेशभवा हि सर्व्वाश्छर्द्यो मतालङ्घनमेव तस्मात् ।
प्राक् कारयेन्मारुतजां विमृष्य [विमुच्य] सशोधनं वा कफपित्तहारि ॥

नाभिर तलमागत दोष जन्मि अग्निमन्द करि, वात पित्त कफ प्रकोपित हइ सकलो प्रकारे वान्ति, विकृतान्न, दुर्गन्ध इसब दर्शनरोपरा वान्ति है । अतएव पूर्वे लङ्घन कराव । वात पित्त कफ उपशमन हइ ।

हन्यात् क्षीरोदकं पीतं छर्द्दिं पवनसम्भवाम् ।

क्षीर ८ तोला, जल ३२ तोला, क्षीरावशेष कर्त्तव्यः पेयः ।

ससैन्धवं पिबेत् सर्पिर्व्वातच्छर्द्दिनिवारणम ।

पुरातन घृत २ तोला, सैन्धवचूर्ण ।।० सहा प्रक्षिप्य पेयं ।

पित्ते२० कफाशयस्थन्त्वतिमात्रवृद्धं पित्त जयेत् स्वादुभिरुर्द्धमेव ।
शुद्धस्य काले मधुशर्कराभ्यां, लाजैश्चमण्डं [मन्थ] यदिवापि पेयां ।
प्रक्षापयेन्मुद्गरसेन वापि, शाल्योदनं जाङ्गलजै रसैर्वा ॥

लाखै १ भाग, जल १४ भाग, सिद्धं मण्डं कृत्वा मधुशर्कराभ्यां खादेत । अथवा लाज मण्ड सिठा सहिते रहिले ताको पेया बोले । शर्करा-मधुभ्यां खाद अथवा शाल्योदन-मुद्गरसेन भक्ष्यं । आरण्यक पक्षि कैर बढा मांसरसैर्वा रक्तशाल्योदनं भक्ष्यं ।

२० । पित्तातिमकायान्स्वनुलोमनार्थं ।
द्राक्षाविदारीक्षुरसैस्त्रिवृत् स्यात् ॥ —इत्यधिकः चक्रदत्ते पाठः ।

चन्दनेनाक्षमात्रेण संयोज्यामलकीरसम् ।
पिबेन्माक्षिकसंयुक्तं छर्दिस्तेन निवर्त्तते ॥

आमलकीरस १ पल, रक्तचन्दन १ तोला, मधु दत्वा पेयं

चन्दनञ्च मृणालञ्च बालकं नागरं वृषम् ।
सतण्डुलोदकक्षौद्रः पीतकल्को वमिं जयेत् ॥

रक्तचन्दन, मृणाल, बालक, आदा, वासक, एषां २ तोला वाटि कल्क, तण्डुल जल ८ तोला आलोड्य मधु दत्वा पेयं ।

क्वाथः पर्पटजः पीतः सक्षौद्रश्छर्दिनाशनः ।

क्षेतपपरा २ तोला, जल ४ पल, शेष १ पल मधु दत्वा पेयं ।

कषायोमृष्टमुद्गस्य सलाजमधुशर्करः ।
छर्द्यतीसारतृड्दाहज्वरघ्नः संप्रकाशितः ॥

भर्ज्जित मुद्ग ८ तोला, जल ३ पोवा, शेष ३२ तोला, लाजाचूर्ण १६ तोला, मधु १ तोला मिश्रयित्वा पेयम् ।

हरीतकीनां चूर्णन्तु लिह्यान्माक्षिकसंयुतम् ।
अधोभागीकृते दोषे छर्दिः क्षिप्रं निवर्त्तते [ स्तेन प्रशाम्यति ] ॥

हरीतकी चूर्ण १ तोला, मधु १ तोला, मिश्रयित्वा लेह्यम् ।

गुडूचीत्रिफलारिष्टपटोलैः क्वथितं पिबेत् ।
क्षौद्रयुक्तं निहन्त्याशु छर्दिं पित्तासृसम्भवाम् ॥

गुडूची, त्रिफला, निम्ब, पटोल पत्र एषां मिलित्वा २ तोला, जल ४ पल, शेष १ पल मधुना पेयं ।

## एलादिचूर्णम्

एलालवङ्गगजकेशरकोलमज्जलाजाप्रियङ्गुघनचन्दनपिप्पलीनां ।
चूर्णानि माक्षिकसितासहितानि लीढ्वा, च्छर्दिं निहन्ति कफमारुतपित्तजाञ्च ॥

एलाचि १ तोला, लवङ्ग १ तोला, नागकेशर १ तोला, बदरीफल मज्जा १ तोला, आखै १ तोला, कमलाला १ तोला, मथा १ तोला, रक्तचन्दन १ तोला, पिप्पली १ तोला, मधु चिनि दत्वा लेह्यम् ।

इति वैद्यकसारोद्धारे वाम्यधिकारः ॥

## २१। अथ तृष्णा-चिकित्सा

तृष्णायां पवनोत्थायां सगुड़ं दधि शस्यते।
रसाश्च बृंहणाः शीता-गुडूच्या रस एव च ॥

वात दूषित हले दधि १६ तोला, गुड़ ४ तोला, दि खाव। जाङ्गल देशर पक्षि मांस ८ तोला, जल ३२ तोला, शेष ८ तोला खाव, शीतलक्रिया आचरिव। गुडूची ४ तोला, जल ४ पल, शेष १ पल, मधु १ तोला दि खाव।

### शीतकषायः

काश्मर्य्यशर्करायुक्तं चन्दनोशीरपद्मकम्।
द्राक्षामधुकसंयुक्तं पित्ततर्षे जलं पिबेत् ॥

गमारी फल २ तोला, खुन्दि, उष्ण जलत तियाइ थै चेइ ( चेकि ) २ तोला चिनि दि खाव।

रक्तचन्दन, बिरिणामूल, पद्मकाष्ठ, द्राक्षा, यष्टिमधु सबारो मिलि २ तोला, उष्णजल १६ तोला दि तियाव पाचे चेइ ( चेकि ) मधु दि खाव।

बिल्वाढ़की-धातकी-पञ्चकोल-दर्भेषु सिद्धं [ गणेषु सिद्धं ] कफजां निहन्ति।

बेलशुयठी, मिरिमाह, धाइफुल, पिप्पली, पिप्पलीमूल, चै, चिता, आदा प्रत्येके ३ तोला कै लै जल ३ सेर, शेष १ सेर मधु दि खाव १६ तोला कै।

हितं भवेच्छर्द्दनमेव चात्र तप्तेन निम्बप्रसवोदकेन।

निम्बछाल २ तोला काथ करि खाले वान्ति आहे।

क्षयोत्थितं क्षीरजलं निहन्यान्मांसोदक वाथ मधूदकं वा।

गोक्षीर ८ तोला, तप्त शीतजल ८ तोला मिश्रयित्वा पेयं। मांस सिद्ध जलपानं। सौवीर काञ्जि भेद पानं। तप्त शीतल जल १६ तोला, मधु ४ तोला, मिश्रयित्वा पेयं। क्षयोत्थितां तृष्णां हन्ति।

आम्रजम्बूकषायम्वा पिबेन्माक्षिकसंयुतम्।
वान्तिं सर्व्वां प्रनुदति तृष्णाञ्चैवापकर्षति ॥

आमछाल १ तोला, जामुछाल १ तोला, जल ४ पल, शेष १ पल खावेर।

ताळुशोषे क्षीरेक्षुरसमाध्वीकैः क्षौद्रसीधुगुड़ोदकैः।
वृक्षाम्लाम्लैश्च गण्डूषास्ताळुशोषनिवारणाः ॥

क्षीर ८ तोला, इक्षुरस ८ तोला, मधु १ तोला दि गण्डूष करिव। गुड़ मिश्रित जल मुखत लव। तेतेली फलर रस ४ तोला, काञ्जि ४ तोला मधु १ तोला दि मुखत धरिव।

मूर्च्छाच्छर्दितृषा-दाह-स्त्रीमद्यभृशकर्शिताः।
पिबेयुः शीतलं वारि रक्तपित्ते मदात्यये॥

मूर्च्छा, वान्ति, आनाह, मैथुनाशक्त, मद्यपान, रक्तपित्त, मदात्यय एइ सकलरपरा तृषा जन्मिले, उष्णजल शीतल करि सुगन्ध करि पेयं मधु दत्वा शर्करां वा। अतएव काञ्जि मधु दत्वा पेयं लवणेन वा। दाह-तृष्णाप्रशमनं, मधु गण्डूषधारणम्।

ओदनं रक्तशालीनां शीतं माक्षिकसंयुतम्॥
भोजयेत्तेन शाम्येत्तु छर्दिस्तृष्णाचिरोत्थिता।

रक्तशाल्यान्न शीतीकृत्य मधु मिश्रयित्वा भोजयेत्।

तृषितो मोहमायाति मोहात् प्राणान् विमुञ्चति।
तस्मात् सर्व्वास्ववस्थासु न क्वचिद्वारि वार्य्यते॥

पिपासारपरा मोहव्याकुल हय, अतएव तृषा मृत्यु कराइ। अतः सर्व्वासु तृष्णासु कदाचिदपि जलं न वार्य्यते।

इति तृष्णाधिकारः॥

पञ्चमः परिच्छेदः

# मूर्च्छादिरोगोचिकित्सोपदेशः

## २२। अथ मूर्च्छा-चिकित्सा

सेकावगाहौ मलयः सहाराः शीताः प्रदेहाव्यजनानिलश्च।
शीतानि पानानि च गन्धवन्ति सर्व्वासु मूर्च्छास्वनिवारितानि ॥
सिद्धानिवर्गे मधुरे पयांसि सदाड़िमा-जाङ्गलजारसाश्च ॥ १

सेक स्वेद करिव। मलयचन्दन घसिव। रक्तशाल्यन्न शीत करि चिनि मिशाइ खुवाव। व्यजनत बात करि शरीर शीतल करिव, सकलो शीत वस्तु खाव।

कोलमज्जोषणोशीर-केशरं शीतवारिणा।
पीतं मूर्च्छां जयेल्लीढ़ा कृष्णां वा मधुसंयुताम् ॥

बदरीफलर मज्जा १६ रति, पिप्पली १६ रति, विरिणा मूल, नागकेशर ३२ रति एषां चूर्णानि शीत वारिणा लिहेत् मधु दत्वा।

महौषधामृताक्षुद्रा-पौष्करग्रन्थिकोद्भवम्।
पिबेत कणायुतं क्वाथं मूर्च्छाजेषु गदेषु च ॥

शुयठी, गुड़ूची, बृहती, कूर, पिप्पलीमूल एषां प्रति ( मिलित ) २ तोला, जल ४ पल, शेष १ पल पिप्पली चूर्णं दत्वा पेयं।

इति मूर्च्छाधिकारः ॥

## २३। अथ भ्रमे

पिबेद् दुरालभाक्वाथं सघृतं भ्रमशान्तये।

कुंन्हे लतार मूल २, जल ४ पल, शेष १ पल, घृत १ तोला दि खाव।

१। अञ्जनान्यवपीड़ाश्च धूमाः प्रधमनानि च।
सूचीभिस्तोदनं शस्तं दाहः पीड़ा नखान्तरे ॥
लुञ्चनं केशरोम्णाञ्च, दन्तैर्दशनमेव च।
आत्मगुप्तावघर्षश्च, हितास्तस्यावबोधने ॥ —इत्यधिकः चक्रदत्ते।

त्रिफलायाः प्रयोगो वा प्रयोगः पयसोऽपिवा ।
रसायनानां कौम्भस्य, सर्पिषो वा प्रशस्यते ॥

त्रिफला २ तोला, जल ४ पल, क्षीर २ पल, क्षीर शेषः कार्य्यः दशवर्ष स्थित घृत १ तोला दत्वा पेयं ।

मधुना हन्त्युपयुक्ता-त्रिफला रात्रौ गुडाद्रकं प्रातः ।
सप्ताहात् पथ्यभुजो मदमूर्च्छाकामलोन्मादान् ॥

त्रिफला २ तोला, जल ४ पल, शेष १ पल, मधु १ तोला दत्वा पेयं रात्रौ । आद्रक रस ४ तोला, गुड़ १ तोला दत्वा पेयं प्रातः । एवं सप्ताहः पथ्य भोजित्वम् ॥

इति भ्रमचिकित्साधिकारः ॥

## २४ । अथ मदात्यय-चिकित्सा

मण्डः [ मन्थः ] खर्जुरमृद्वीका-वृक्षाम्लाम्लीक-दाड़िमैः ।
परूषकैः सामलकैर्य्युक्तो मद्यविकारनुत् ॥

खर्जुर, गमारी गुटी, थैकर, जामिर, दाड़िम, परूषक माटि आमलखी एतानि मिलित्वा ८ तोला, रक्तशालितण्डुल ४ तोला, जल १४ भाग, शेष २ भाग अतो भक्ष्यम् ।

सतिल [ सतीन ] मुद्‌ग-मिश्रान् वा दाड़िमामलकान्वितान् ।
द्राक्षामलकखर्जूरपरूषकरसेन वा ।
कल्पयेत् तर्पणान् यूषान् रसांश्च विविधात्मकान् ॥

तिल ४ तोला, मुद्‌ग ४ तोला, दाड़िम २ तोला, आमलकी २ तोला, गमारी गुटी २ तोला, आमलक २ तोला, खर्जुर २ तोला, माटि थैकर २ तोला एषां मिलित्वा, जल १४ भाग दि सिद्ध, शेष २ भाग पेयं अनेन विधिना । आरण्यक पक्षि मांसरसः पेयः । छागादि मांस रसो वा ।

मद्यं सौवर्च्चलव्योषयुक्तं किञ्चिज्जलान्वितम् ।
जीर्णमद्याय दातव्यं वातपानात्ययापहम् ॥

मद्य ४ पल, जल २ तोला, मिलित त्रिकटु सौवर्च्चल ३२ रति दत्वा आलोड्य पिबेत् ।

मुद्‌गयूषः सितायुक्तः स्वादुर्व्वा पैशितो रसः ।
पित्तपानात्यये योज्याः सर्व्वतश्च क्रिया हिमाः [हिताः] ॥

मुद्‌ग ८ तोला, जल ४ भाग, शेष २ भाग, सिता दत्वा पेयं । मांसरसमनेन विधिना । तत्र कारणमाह ।

विधिना मात्रया काले, हितैरन्नैर्यथा बलम् ।
प्रहृष्टो यः पिबेन्मद्यं तस्य स्यादमृतोपमम् ॥

विधिपूर्व्वके मद्य करि परिमाण करि, स्निग्ध अन्नादियेरे, शरीरर बलावल बुझि, हृष्टमन हुइ मद्यपान करिले, अमृततुल्य बलबन्त करे। शरीर सुन्दर हय, काम उद्भाव हय, मनत सन्तोष जन्मे, तेजस्वी हय, पराक्रम हय। अविधिपूर्वकमाह।

तेन मिथ्योपयुक्तेन भवत्युग्रो मदात्ययः ।

अयुक्तियुक्त बोलाय, अविधिपूर्व्वक चाउल माह पिष्टकचूर्ण, गेला मांस, केचावस्तु इसव द्रव्येरे मद्यपान करिले, अनेक रोग जन्मे, वातुल करे। शरीर विवर्ण करे। अविधिपूर्व्वक विष खाइ, अविधिपूर्व्वक मद्यपान, मधुपान, आफु, काफिङ्ग, माङ्ग एइ सकलर परा रोग जन्मिले ताके मदात्यय बोले। अत्यय मरणके बोले। अतएव औषधस्तत्र।

## पुनर्णवाघृतं

पयः पुनर्णवाक्काथ-यष्टिकल्क-प्रसाधितम् ।
घृतं पुष्टिकरं पानान्मद्यपानहतौजसः ॥

घृत ३ सेर, गोदुग्ध ३ सेर, पुनर्णवा १५ सेर, जल ६० सेर. शेष १५ सेर पटशोधन करि (वस्त्रेरे चेकि) घृत, क्षीर, क्काथ, एकीकृत्य कल्क यष्टिमधु ८ पल सिद्धं।

## अष्टाङ्गलवणम्

सौवर्च्चलमजाज्यश्च वृक्षाम्लं साम्लवेतसम् ।
त्वगेलामरिचार्द्धांशं शर्कराभागयोजितम् ॥
हितं लवणमष्टाङ्गमग्निसन्दीपनं परम् ।
मदात्यये कफप्राये दद्यात् स्रोतो विशोधनम् ॥

सौवर्च्चल, मोगजीरा, तिन्तिड़ी. थैकर, प्रत्येकर २ तोला, दालचिनि १ तोला, एलाचि १ तोला, मरिच १ तोला, चिनि २ तोला मिश्रयित्वा खादेत्।

द्राक्षाकपित्थफलदाड़िमपानकं ।
यत् तत् पानविभ्रमहरं मधुशर्कराढ्यम् ॥

गमारी गुटी, औटेङ्गा, दाड़िम एषां प्रति ( मिलित ) २ तोला, जल ४ पल, शेष १ पल, चिनि मधु दि खाव।

पथ्या क्काथेन संसिद्धं घृतं धात्रीरसेन वा ।
सर्पिः कल्याणकं वापि मदमूर्च्छाहरं पिबेत् ॥

शिखिखा १ पोवा, जल ६ सेर, शेष २ सेर राखि घृत सिद्ध करि खाव। पददरे धात्री रसेरे गोघृत सिद्ध करि खाव। विना कल्केन पाकः।

वन्यकरीषघ्राणाज्जलपानाल्लवणभक्षणाद्वापि।

गोबर गुयठी पुरि मध्म घ्राण करिव। करिव मध्य १ तोला, जल १६ तोला लवणयुक्तं पेयं।

शङ्खचूर्णरजोघ्राणात् स्वल्पं मदमपोहति।

शङ्खचूर्णं पुरि मध्म घ्राण करिव।

इति वैद्यकसारोद्धारे मदात्ययाधिकारः॥

## २५। अथ दाह-चिकित्सा

यत् पित्तज्वरदाहोक्तं दाहे तत् सर्व्वमिष्यते।
शतधौतघृताभ्यक्त लिह्याद्वा यवशक्तुभिः॥

पित्त ज्वरत यि औषध उक्त करिछे दाहत सेर औषध प्रयोग करिव।

कोलामलकयुक्तैर्व्वा धान्याम्लैरपि बुद्धिमान्।

बदरी गुटीर रस २ तोला, धात्री रस २ तोला, काञ्जि ४ तोला मिश्रयित्वा खादेत्।

छादयेत्तस्य सर्व्वाङ्गं मारणालार्द्रवाससा।

काञ्जि एरे तियाइ वस्त्र शरीरत मेराइ दिव।

भोजनादिकमुच्यते—शीतानि चान्नपानानि [शीतकार्य्याणि यानि च]।
शीतवातजले स्पर्शं शीतान्युपहराणि च।

अनुपान शीत यत द्रव्य सकलो शीत, शीतल बात, शीतल जलस्पर्श पानो। गन्धबिरिणा मुस्त काञ्जिभेद द्रवोर्लेपः।

चन्दनाम्बुकणास्यन्दि-तालवृन्तोपवीजितः।
सुप्याद्दाहार्द्दितोऽम्भोज-कदलीदलसंस्तरे॥
परिषेकावगाहेषु व्यजनानाञ्च सेवने।
शस्यते शिशिरं तोयं तृष्णादाहप्रशान्तये॥

मातिचन्दन, सुगन्धबाला, आगरकाष्ठ, तालबेटु पिष्ट्वा लेपः। कदलीपत्र, पद्मपत्र पारि शुवाव। उपरतो पद्मपत्र दिव। गावत सुगन्ध जल घतियाव, शीतजलेरे स्नान कराव। बिचनी एरे बिचिव।

वासः कमलहासिन्यो जलयन्त्रगृहाः शुभाः ।
मार्व्यश्चन्दनदिग्धाङ्गादाहदैत्यहरामताः ॥

जलमध्यत गृह करि स्त्रीये सहिते थाकि, स्त्रीये चन्दन शरीरत घसिब, लेप दि सुगन्ध जल चतियाले दाह गुचे ।

इति वैद्यकसारोद्धारे दाहाधिकारः ॥

## २६ । अथोन्माद-चिकित्सा

उन्मादे वातिके पूर्व्वं स्नेहपानं विरेचनम् ।
पित्तजे कफजे वान्तिः परो वस्त्यादिकः क्रमः२ ॥

वात दूषित उन्मादत आदिते घृतपान कराव । पित्तदोषत रेचन कराव । कफदोषत वान्ति कराव । अपर उन्मादत वस्तिक्रिया मरण घर्षण कराव । आदिशब्देन, शिरोविरेचन नस्यादि क्रिया ।

ब्राह्मीकुष्माण्डी-षड्ग्रन्था-शङ्खपुष्पिका-स्वरसः ।
उन्मादहृतोदृष्टाः पृथगेते कुष्ठमधुमिश्राः ॥

ब्राह्मीशाकर रस १ पल, कुर ३२ रति मधुना आलोड्य पेयं । एवं पुराण कुष्मायक रस १ पल, कुर ३२ रति दत्वा पेयं । एवं बचर रस १ पल, कुर ३२ रति मधु दत्वा पेयम् । एवं शङ्खमालती फुलर रस १ पल, कुर ३२ रति मधु दत्वा पेयं ।

दशमूलाम्बुसघृतं युक्तं मांसरसेन वा ।
ससिद्धार्थकचूर्णं वा पुराणं चैतसं घृतम् ।।

दशमूलर क्वाथ २ पल, पुराण घृत २ तोला, सिद्धार्थचूर्ण ।० महा दत्वा पेयं । एवं मांसरसेनापि कर्त्तव्यम् ।

रसो नस्येऽभ्यञ्जने च सार्षपं तैलमिष्यते ३ ॥

रसोन कल्क सार्षपतैलद्वयोः मिश्रयित्वा गाए घर्षणीयः ।

अपक्क-चटकीक्षीरपीतोन्माद विनाशिनी ।

चटकमांसमपक्कमेव पिष्ट्वा क्षीरेण पिवेत् ।

२ । यथोपदेक्ष्यते किञ्चिदपस्मारचिकित्सिते ।
उन्मादे तत्र कर्त्तव्यं सामान्याद्धेतु दूष्ययोः ॥ —इत्यधिकः चक्रदत्ते पाठः ॥

३ । उन्मादे लशुनः पेयः शुद्धो वा तालशास्वजः । —इति पूर्व्वार्द्धः चक्रदत्ते ।

सिद्धार्थको वचाहिङ्गुकरञ्जौ देवदारु च ।
मञ्जिष्ठात्रिफलाश्वेता-कटभीत्वक् कटुत्रिकम् ॥
समांशानि प्रियङ्गुश्च शिरीषो रजनी द्वयम् ।
बस्तमूत्रेण पिष्टोऽयमगदः पानमञ्जनम् ॥
नस्यमालेपनञ्चैव स्नानमुद्वर्त्तनन्तथा ।
अपस्मारविषोन्माद कृत्या लक्ष्मीज्वरापहः ।
भूतेभ्यश्च भयं हन्ति राजद्वारे च शस्यते ।
सर्पिरेतेन सिद्धं वा सगोमूत्रं तदर्थकृत् ॥

श्वेत सर्षप, हिङ्गु, वच, कोरञ्ज, लेटाकरञ्ज, उर्ष, मञ्जाठि, त्रिफला, श्वेतापराजिता, कटमीत्वक्, कोवाचुटि, त्रिकटु, वनमाला, शिरीष, रजनीद्वयं, एषां समभागं छागमूत्रेण पिष्ट्वा पानाभ्यञ्जनादौ योज्यानि । एतैरौषधैः कल्कं गोमूत्र चतुर्गुणं घृतं सिद्धं वा ।

## पानीयकल्याणकं घृतम्

विशाला-त्रिफला-कौन्ती-देवदार्व्वेलवालुकम् ।
स्थिरा-नतं रजन्यौ द्वे शारिवे द्वे प्रियङ्गुका ॥
नीलोत्पलैलामञ्जिष्ठा-दन्तीदाड़िमकेशरम् ।
तालीशपत्रं वृहती-मालत्याः कुसुमं नवम् ॥
विड़ङ्गं पृश्नीपर्णी च कुष्ठं चन्दन-पद्मकौ ।
अष्टाविंशतिभिः कल्कैरेतैरक्षसमन्वितैः ॥
चतुर्गुणं जलं दत्वा घृतप्रस्थं विपाचयेत् ।
अपस्मारे ज्वरे कासे शोथे मन्दानले क्षये ।
वातरक्ते प्रतिश्याये तृतीयक-चतुर्थके ॥
वम्यर्शोमूत्रकृच्छ्रेषु विसर्पोपहतेषु च ।
कण्डूपाण्ड्वामयोन्मादे विषमेहगरेषु च ॥
भूतोपहतचित्तानां गद्‌गदानामरेतसाम् ।
शस्तं स्त्रीणाञ्च वन्ध्यानामायुर्व्वर्णबलप्रदम् ।
अलक्ष्मी-पापरक्षोघ्नं सर्व्वग्रहविनाशनम् ।
कल्याणकमिदं सर्पिः श्रेष्ठं पुंसवनेषु च ॥
द्विबलं स चतुःक्षीरं क्षीरकल्याणकमिदम् ॥

## क्षीरकल्याणकघृतम्

घृत ३ सेर, जल १३ सेर, कल्क, विशाला ( गोरक्षकाँटा ), त्रिफला, रेणुका, उशै काष्ठ, एलवालुक, शालानि, तगर, हरिद्रा, श्यामा, अनन्तमूला, वनमाला, कलाभिन्, एलाचि, मञ्जिष्ठा, दन्ती, दाड़िम, नागकेशर, तालीश, वृहती, मालती फुल, विडङ्ग, पिठानी, कुर, रक्तचन्दन, पद्मकाष्ठ प्रत्येकर ४ तोला कै दि सिद्ध करिव। इथाते गोक्षीर ३ सेर दिले क्षीरकल्याण घृत बोल।

## लशुनाद्यघृतम्

लशुनस्याविनष्टस्य तुलार्द्धं निस्तुषीकृतम्।
तदर्द्धं दशमूल्यास्तु दद्याढ़केऽपां विपाचयेत्॥
पादशेषे घृतप्रस्थं लशुनस्य रसन्तथा।
कोलमूलकवृक्षाम्लमातुलुङ्गार्द्रकै रसैः॥
दाड़िमाम्बुसुरामस्तु काञ्जिकाम्लैस्तदर्द्धिकैः।
साधयेत् त्रिफलादारुलवणव्योषदीप्यकैः॥
यमानीचव्यहिङ्गम्लवेतसैश्च पलार्द्धकैः।
सिद्धमेतत् पिवेच्छूलगुल्माशोंजठरापहम्॥
ब्रध्नपाण्ड्वामयप्लीहयोनिदोषकृमिज्वरान्।
वातश्लेष्ममयांश्चान्यानुन्मादांश्चापकर्षति॥

घृत ३ सेर, नवीन नहन, वाकलिचलोवा सेर, जल ४८ सेर, शेष १२ सेर, वदरीफल काथरस १६ पल, मूलारस १६ पल, तेतेली रस १६ पल, मातुलुङ्ग रस १६ पल, टेङ्गा डालिम रस १६ पल, मस्तु १६ पल, काञ्जि १६ पल घृतत दिव, कल्क त्रिफला उशे, सैन्धव, त्रिकटु यमानी, हिङ्गु, थैकर प्रत्येकर २ तोला दि सिद्ध करिव।

## चण्डभैरवो रसः

मृतसूतार्कलोहाना तालं गन्ध मनःशिला।
रसाञ्जनञ्च तुल्यांश गोमूत्रेनापि४ मर्दयेत्॥
तं गोलं द्विगुण गन्ध लोहपात्रे क्षण पचेत्।
शीतीभूते— पञ्चगुञ्जामितं भक्ष्यमपस्मारविनाशनम्॥

मृत रस १ तोला, ताम १ तोला, लोह १ तोला, हरिताल १ तोला, गन्धक २ तोला, मनःशिला १ रसाञ्जन १ तोला, तोला, गोमूत्रेन मर्दयित्वा गोलं कृत्वा, लौहपात्रे क्षणं पचेत्। शीतीभूते पञ्चगुञ्जा पमाणे खाव।

४। नरमूत्रेनेति। —रसेन्द्रे पाठः

14

## अपरः चण्डभैरवो रसः

हिङ्गु सौवर्च्चलं कुष्ठं [व्योषं] गवां मूत्रेन [नरमूत्रेन] सर्पिषा ।
कर्षमात्रं पिवेच्चानु रसोऽयं भूतभैरवः ॥

हिङ्ग, सौवर्च्चल, कुर, गोमूत्र, घृत प्रति २ तोला एइ अनुपान।

सर्पिः पानादिरागन्तोर्मन्त्रादिश्चेष्यते विधिः ।
पूजावल्युपहारेष्टि होममन्त्राञ्जनादिभिः ॥
जयेदागन्तुमुन्मादं यथाविधि शुचिर्भिषक् ॥

पिशाचादि लङ्घित हले आगन्तु उन्माद बोले। तार उपाइ मन्त्रेरे जारिव, उपहार वलि, पारावत हंसादि। पूजा जप होम करि, चक्षुत अञ्जन, धूम, नस्य, एइ सकल करि तेवे निवृत्ति हइ।

कृष्णामरिचमिन्धूत्थमधुगोपित्तनिर्मितम् ।
अञ्जनं सर्व्वभूतोत्थ महोन्मादविनाशनं ॥

गोपित्त गोरोचना के वोले। धूप दिव।

निम्बपत्रवचाहिङ्गु मर्पनिर्म्मोकसर्षपैः ।
डाकिन्यादिहरो घूपो भूतोन्मादविनाशनः ॥

निर्म्मोक सापर कलपक बोले। सवारे धूप करि दिव।

कार्पासास्थि-मयूरपिच्छ-वृहती-निर्म्माल्य-पिण्डिनकैः ।
[स्त्वङ्मांसी] स्त्वग्वाशी वृषदंश विट् तुष-वचा-केशाहि निर्म्मोककैः
गोशृङ्ग-द्वीपदन्त-हिङ्गु मरिचैस्तुल्यैस्तुधूपः कृतः ।
भूतोन्माद [स्कन्दोन्माद] पिशाचराक्षससुरावेशज्वरघ्नः स्मृतः ॥

कपाइगुटी, मयूरपुच्छ, वृहती, तमालती, तगर, दालचिनि, जटामांसी, विड़ालविष्ठा, तुष, वच केश, सापर कलप, गोशृङ्ग, हस्तिदन्त, हिङ्गु, मरिच, एतानि तुल्यानि धूपो देयः।

महानीलं श्मशानस्थं दिग्वासेन समुद्धरेत् ।
सम्यक् कृष्णचतुर्द्दश्यां तन्मूलं कटुतैलकं ॥
अञ्जनात् सर्व्वभूतघ्नं सर्व्वग्रहनिवारणम् ।

श्मशानस्थित (रस) महानील, कृष्णा चतुर्द्दशीत, दिग्वास हइ (उलङ्ग है) तुलि आनिव, तार मूल चूर्ण कटुतैलेन मिश्रयित्वा अञ्जनं ॥

## इति वैद्यकसारोद्धारे उन्मादाधिकारः ॥

## २७। अथापस्मार-चिकित्सा

वातिकं वस्तिभिः प्रायः पैत्तं प्रायो विरेचनैः।
श्लैष्मिक वमनप्रायैरपस्मारमुपाचरेत् ॥
सर्वतः सुविशुद्धस्य [शुचिशुद्धस्य] सम्यगाश्व मितस्य च।
अपस्मारविमोक्षार्थं योगान् संशमनान् शृणु ॥

अपस्मारक आवरि वोलें। वातिकन वस्ति, पैत्तिकत रेचन, श्लैष्मिकत वमन, सकलो अवस्थात शुचि शुद्ध हव, मर्द्दन करिव।

मनोह्वातार्क्ष्यजञ्चैव शकृत् पारावतस्य च।
अञ्जनं हन्त्यपस्मारमुन्मादञ्च विनाशयेत् ॥

मनःशिला, रसाञ्जन, पारावत विष्ठा एतैः समभागै‌ःपिष्टैरञ्जन।

यष्टिहिङ्गुवचावक्रशिरीषलशुनामयैः।
साजामूत्रैरपस्मारे सोन्मादे नावनाञ्जने ॥

यष्टिमधु, हिङ्गु, वच, तगरमूल, शिरीषबीज रसोन, कुड़ एतैः समभागैः अजामूत्रैः पिष्ट्वा अञ्जनं नस्यम्वा।

पुष्योद्धृतं शुनः पित्तमपस्मारघ्नमञ्जनम्।
तदेव सर्पिषायुक्तं धूपनं परमं स्मृतम् ॥

यदृच्छा मृत कुक्कुरपित्तमञ्जनं कृतं, तदेव पित्तं घृतेन धूपं देयं।

नकुलोलूकमार्जारगृध्रकीटाहिकाकजैः।
तुण्डैः पक्षैः पुरीषैश्च धूपनं कारयेद् भिषक् ॥

नकुल, पेचा, विड़ाल, गृध्र, वर विचा, सर्प, काक एषां ठोंट, पक्ष, पाखि विष्ठा धूपं निर्म्माय धूपो देयः।

वयस्थान [कायस्थान] शारदान् मगान मुस्तोशीरयवांस्तथा।
सव्योषान् वस्तमूत्रेण पिष्ट्वा वर्त्तीः प्रकल्पयेत्।
अपस्मारे तथोन्मादे सर्पदष्टे गरार्द्दिते।
विषपीते जलमृते चैताः स्युरमृतोपमाः ॥

पचतीया, मुग, मथा, विरिणा, त्रिकटु एषां मिलित छागीमूत्रेन वर्त्तीः कृत्वा चक्षुरञ्जयेत्।

जतुकाशकृतात्तद्वद् दग्धैर्वा वस्तरोमभिः।
अपस्मारहरो लेपो मूत्रसिद्धार्थशिग्रुभिः ॥

वादलिविष्ठा, दग्धछागरोम, छागमूत्रेण पिष्ट्वा लेपः। श्वेतसर्षप चजिनामूल गोमुत्र दि लेप।

यः खादेत् क्षीरभक्ताशी माक्षिकेन वचारजः ।
अपस्मारं महाघोरं सुचिरोत्थं जयेद् ध्रुवम् ॥

वचर चूर्ण १ तोला मधु दि खाव ; पाछे क्षीर भोजन करिव ।

प्रयोज्यं तैललशुनं पयसा वा शतावरी ।
ब्राह्मीरसश्च मधुना सर्वापस्मारभेषजम् ॥

रक्तगड्डु ( रसान ) तिल तैलयुक्त करि खाव । गोक्षीर शतमूल रस मिश्र करि खाव । ब्राह्मी शाकर रस मधु एरे खाव ।

हृत्कम्पोऽक्षिरुजा यस्य स्वेदो हस्तादिशीतता ।
दशमूलीजलं तस्य कल्याणाज्यञ्च योजयेत् ॥

हृदय कम्प, चक्षुर वेदना, घर्म, हस्तपद चेचा परित ।

## पञ्चगव्यं घृतम्

गोशकृद्रसदध्यम्लक्षीरमूत्रैः समैर्घृतम् ।
सिद्धं चतुर्थकोन्मादग्रहापस्मारनाशनम् ॥

गोघृत ३ सेर, गोमय रस, टेक्कादधि रस, दुग्ध, गोमूत्र, प्रति ३ सेर दि सिद्ध करिव ।

## कुष्माण्डकघृतम्

कुष्माण्डकरसे सर्पिरष्टादश गुणे पचेत् ।
यष्ट्याह्वकल्कं तत् पानमपस्मारविनाशनम् ॥

घृत ३ सेर, कुष्माण्ड रस ५४ सेर, यष्टि ३ पोवा कल्क सिद्ध करिव ।

## ब्राह्मीघृतम्

ब्राह्मीरसे वचाकुष्ठशङ्खपुष्पीभिरेव च ।
पुराणं मेध्यमुन्मादग्रहापस्मारनुद् घृतम् ॥

पुरातन घृत ३ सेर, ब्राह्मी रस १२ सेर, कुष्ठ, वच, कुर, शङ्खमालतीफुल एषां प्रति ३ पोवा सिद्ध करिव

## पलङ्कषाद्य तैलम्

पलङ्कषावचापथ्या वृश्चिकालर्कसर्षपैः ।
जटिलापूतनाकेशी-नाकुली-हिङ्गु-रोचकैः ॥

लशुनातिविषा [लशुनातिरसा]५ चित्राकुष्ठैर्विड्भिश्च पक्षिणाम् ।
मांसासिना यथालाभं वस्तुमूत्रे चतुर्गुणे ।
सिद्धमभ्यञ्जने तैलमपास्मारविनाशनम् ॥

तिलतैल ३ सेर, छागमूत्र १२ सेर, कल्क, गुग्गुल, वच, हरीतकी, पुनर्णवा, आकण, श्वेत सरियह, जटामांसी, चोरान, कटकीतिता, लाङ्गलीया विष, हिङ्गु, रसोन, अतिविषा, चित्रक कूर, पक्षिविष्ठा, गृध्रपक्षी एतेषां १६ षोड़शाना प्रति २ कर्ष दत्वा सिद्ध । उन्मानाधिकारोक्त चगडभैरवो रस योज्य ।

मानुषास्थि, हिङ्गु, रसोन, सर्पकञ्चुक, गोमधान, घृत पिष्ट्वा धूप कार्य्यः ।

## इति वैद्यकसारोद्धारे अपस्माराधिकारः ॥

५ । लशनातिरसा, अतिरसा ; जल यष्टिमधु अन्ये त योतिष्मतीत्याहु जतुकर्णे मधुकमिति ।
—चक्रदत्तटीकाया शिवदास ।

षष्ठः परिच्छेदः

# वातरोगोचिकित्सोपदेशः

## २८ । अथ वातव्याधि-चिकित्सा

स्वाद्वम्ललवणैः स्निग्धैराहारैर्व्वातरोगिणः ।
अभ्यङ्गस्नेहवस्त्याद्यैः सर्व्वानेवोपपादयेत् ॥

मधुर अम्लदध्यादि पञ्चलवणादि स्निग्ध द्रव्य, घृतपक्क आहार तैलादि घर्षण, घृत तैल पान, वस्ति, उत्तर वस्ति, वातरोगत इसव आचरिब ।

विशेषतस्तु कोष्ठस्थे वाते क्षार पिबेन्नरः ।

उदरत वात प्रवेश हले क्षारादिपान करि, सप्तदिन पर्य्यन्त यवक्षार ।

आमाशयस्थे शुद्धस्य यथा दोषहरीक्रिया ।
आमाशयगते वाते छर्द्दिताय यथाबलम् ।
देयं षड्धरणोयोगः सप्तरात्रं सुखाम्बुना ॥

### षड्धरणोयोगः

चित्रकेन्द्रयवाः पाठाकटुकातिविषाभयाः ।
महाव्याधिप्रशमनो योगः षड्धरणः स्मृतः ॥

पलस्य दशमोऽंश धरणः ।

चित्रक ३ महा २ रति, इन्द्रयव ३ महा २ रति, पाठा ३ महा २ रति, कटकोतिता ३ महा २ रति, आतैच ३ महा २ रति, शिलिखा ३ महा २ रति एषां चूर्णानि मिलित्वा उष्णोदकेन पेयं । एवं सप्तदिनानि कुर्य्यान् ।

पक्काशयगते वाते हित स्नेहविरेचनम् ।
वस्तुयः शोधनीया या प्राशाश्च लवणोत्तराः ॥

त्रिफला, त्रिवृत् कल्क, घृत ३ पोवा ८ टका दत्वा, सिद्धे सैन्धवचूर्ण ४ तोला प्रक्षेप करि २ तोला खाव । एतत् स्नेहलवणं शोधनार्थं भक्ष्यं ।

त्वङ्मांसासृक्शिराप्राप्ते कुर्य्याच्चासृग्विमोक्षणम् ।

चर्म्मत, मांसत, शोणितत, शिरत, वात प्रवेश हले तेज कटाव ।

रसोनकल्कं नवनीतमिश्रं खादेन्नरो सोऽर्द्दितरोगयुक्तः ।
तच्चार्द्दितं नाशयतीह शीघ्रं वृन्दं घनानामिव मातरिश्वा ॥

नहरु बाटि घृतमिश्र करि खाव ।

## कल्याणकलेहः

सहरिद्रावचाकुष्ठ पिप्पलीविश्वभेषजम् ।
अजाजीचाजमोदा च यष्टीमधुकसैन्धवम् ॥
एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत् ।
तच्चूर्णं सर्पिषा लीढ्य प्रत्यहं भक्षयेन्नरः ॥
एकविंशति रात्रेण भवेच्छ्रुतिधरो नरः ।
मेघदुन्दुभिनिर्घोषो मत्तकोकिलनिस्वनः ॥
जड़गद्गदमूकत्वं लेहः कल्याणको जयेत् ।[१]

हालधि वच कुर, पिप्पली, आदा, कालजीरा, आजमि, यष्टिमधु, सैन्धव प्रत्येक ১ तोला चूर्ण करि घृतेरे लेह करि खाव ।

माषात्मगुप्तकैरण्डवाट्यालकश्रृत पिबेत् ।
हिङ्गुसैन्धवसंयुक्तं पक्षाघातनिवारणम् ॥

माषानी, बान्दर केकोवा मूल, एरण्डमूल, बरिगालमूल मिलित ২ तोला, जल ४ पल, शेष १ पल, हिङ्गु, सैन्धव दि खाव ।

हरीतकीवचारास्नासैन्धवञ्चाम्लवेतस ।
घृतमात्रासमायुक्तमपतानकनाशन ॥

शिलिखा, वच, कपौलता, सैन्धव, थैकर, प्रत्येक १ तोला चूर्ण करि घृतेरे लेह करि खाव ।

## स्वल्परसोन पिण्डः

पलमर्द्धपलञ्चैव रसोनस्य सुकुट्टितम् ।
हिङ्गुजीरकसिन्धूत्थैः सौवर्च्चलकटुत्रयैः ॥
चूर्णितैर्माषकोन्मानैः चर्ण्य विलोड़ितम् ।
यथाग्निभक्षित प्रातः रुबु ( एरण्डमूल ) क्वाथानुपानतः ॥

१ । ० बदाखिकस्कन्धगतं वायुं मन्यागतं तथा ।
बमनं हन्ति नस्यञ्च, कुशलेन प्रयोजितः ॥ —इति चक्रदत्ते अधिक पाठः ।

बाटिब, पाचे सर्व्व द्रव्यर चूर्ण दि सकलो पुनर्व्वार बटि १ तोला प्रमाणे बटिका करिब। अनुपान उष्णोदक वा एरण्ड तैल।

## अहोद्यं चूर्णम्

अहोरास्ना-गुडूची च शतमूली महौषधम्।
शतपुष्पा-सुगन्धा च हवुषा वृद्धदारकः ॥
यमानी चाजमोदा च समभागानि कारयेत्।
श्लक्ष्णचूर्णमिदं कृत्वा बिड़ालपदमात्रकं ॥
पिबेन्मांसरसैर्य्यूषै रथकोष्णोदकेन वा।
सर्पिषा वा विलिह्यात्तु दधिमण्डेन वा पुनः ॥
अस्थिसन्धिगतोवायुः स्नायुमज्जाश्रितश्च यः।
कटिग्रहे गृध्रस्याञ्च मन्यास्तम्भे हनुग्रहे ॥
ये च कोष्ठगता रोगास्तान् सर्व्वांश्चैव नाशयेत्।
अहोद्यो नामचूर्णोऽयं सर्व्वव्याधिनिवारणः ॥

मथा, गुड़ूची, शतमूल, आर्द्रक, शुल्फा, अश्वगन्धा, हवुषा, टुकरीया मूल, यमानी, आजनी, एषां प्रति ४ तोला कै चूर्ण करि थव। मांस रसे, यूषे, उष्णोदके वा प्रक्षिप्य तोलकं खादेत्।

नास्ति तैलात् परं किञ्चिदौषधं मारुतापहम्।

वातव्याधित तैल प्रधान, अतएव तैलमाह।

## केतकाद्यं तैलम्

केतकिनागबलातिबलानां यद्बहलेन रसेन विपक्वं।
तैलमनल्पतुषोदकसिद्धं मारुतमस्थिगतं विनिहन्ति३ ॥

तिल तैल ३ सेर, केतकी, गोरक्ष चाउला, वरियाल एषां प्रति (मिलित) १ पोवा, जल ४८ सेर, काञ्जि १२ सेर, सिद्धं तैलं अकल्केऽपि पाकः।

## बलातैलम् : शौरीयतैलम्

बलानिः क्वाथ-कल्काभ्यां तैलं पक्वं पयोऽन्वितम्।
सर्व्ववातविकारघ्नमेवं शौरीय-साधितम् ॥

३। अनल्पवचनादत्र तुल्ये क्वाथतुषोदके।
अकल्कोऽपि भवेत् स्नेहो यः साध्यः केवले द्रवे ॥ —इति चक्रदत्तः।

तिल तैल ३ सेर, बरियालर मूल ५ सेर, जल ४८ सेर, शेष १२ सेर, कल्क बाट्याल मूल ३ पोवा दि सिद्ध करिव। एइरूपे हालधीया वागीफुलर मूल काथक दि तैल सिद्ध करिव।

## अथ तैलमूर्च्छनम्

आम्रजम्बूकपित्थानां बीजपूरकविल्वयोः।
गन्धकर्म्मणि सर्व्वत्र पत्राणि पञ्चपल्लवं ॥

आम, जाम, औ, विल्व, सोलङ्ग, एइ सकलर स्वरस तैल निःफेन हले दिव।

तैलस्येन्दुकलांशिकस्तु विकसाभागोऽपि मूर्च्छाविधौ।
ये चान्ये त्रिफला-पयोदरजनी-ह्रीवेर-लोध्रान्विताः॥
सूचीपुष्पवटावरोऽर्नलिकास्तस्याश्च पादांशिकाः।
निष्फेने दधिमातुलुङ्गकरसैः कुर्व्वन्ति वर्णारुणं।४

तैलर १६ भागर १ भाग मजाठि, कल्क, त्रिफला, मठा हालधि, सुगन्धवाला, लोध्रछाल, केतकीपुष्पर मूल, नालुका प्र: उहार कल्क मजाठिर ४ भागर १ भाग लव इत्येके।

कल्काच्चतुर्गुणीकृत्य घृतम्वा तैलमेव वा। इति वचनात्

घृत तैल ४ भाग, कल्क १ भाग लव। तैलर ८ भाग, जल, दधि, सोलङ्ग रस, यथा लाभ दिव। सिद्ध हले चेद (चेकि) तैल लव, एवं क्रमे, यि यि तैल करिवर इच्छा करे पाचे सेइ सेइ तैल करिव। इयाके तैल मूर्च्छन विधि बोले। सकलो वायुर तैलर एइ मूर्च्छनविधि।

## विष्णुतैलम्

शालपर्णी पृश्निपर्णी बलाच बहुपुत्रिका।
एरण्डस्य च मूलानि वृहत्योः पूतिकस्य च ॥
गवेधूकस्य मूलानि तथा सहचरस्य च।
एतेषां पलिकैर्भागैः तैलप्रस्थं विपाचयेत्।
आजं वा यदि वा गव्यं क्षीरं दत्वा चतुर्गुणम् ॥

४। कृत्वा तैलं कटाहे दृढतरे विमले मन्दमन्दानलैस्तत्।
पक्वं निष्फेनभावं गतमिहतु यदा शैत्ययुक्तं तदैव ॥
मञ्जिष्ठा रात्रि लोध्रैर्जलधरनलिकैः सामलैः साक्षपथ्यैः।
सूचिपुष्पाह्वि नीरैरुपहति मथितैर्गन्धयोगं जहाति ॥
—आयुर्व्वेदसंग्रहे परिभाषाप्रदीपे च इत्यधिकः वर्त्तते

अस्य तैलस्य कल्कस्य शृणु वीर्य्यमतःपरम् ।
अश्वानां वातभग्नानां कुञ्जराणान्तथैव च ॥
तैलमेतत् प्रयोक्तव्यं सर्व्ववातनिवारणं ।
आयुष्मांश्च नरः पीत्वा निश्चयेन दृढो भवेत् ॥
गर्भमश्वतरी विन्द्यात् किं पुनर्मानुषी तथा ।
हृच्छूलं पार्श्वशूलञ्च तथैवार्द्धावभेदकं ॥
कामलापाण्डुरोगघ्नं शर्कराश्मरीनाशनं ।
क्षीणेन्द्रिया नरा ये च जरया जर्जरीकृताः ॥
येषाञ्चापि क्षयो व्याधिरन्त्रवृद्धिश्चदारुणा ।
अर्द्दितं गलगण्डञ्च वातशोणितमेव च ।
स्त्रियो वा न प्रसूयन्ते तासाञ्चैव प्रयोजयेत् ।
एतदङ्गवरं तैलं विष्णुना परिकीर्त्तितम् ॥

तिलतैल ३ सेर, छागदुग्ध अथवा गोदुग्ध १२ सेर, शालानी, पिठानी, वरियाल, शतमूल, एरगडमूल, कण्टकारी, भेकुरि, लाटामूल, गोरक्ष चाउलीया, भिगिटमूल एषां कल्क ३ पोवा सिद्धं ।

## मध्यमनारायणतैलम्[५]

विल्वोऽग्निमन्थः श्योनाकः पाटलः पारिभद्रकः ।
प्रसारण्यश्वगन्धा च वृहती-कण्टकारिका ॥
बला चातिबला चैव श्वदंष्ट्रा सपुनर्णवा ।
एषां दशपलान् भागान् चतुर्द्रोणेऽम्भसः पचेत् ।
पादशेषं परिस्राव्य तैलपात्रं प्रदापयेत् ।
शतपुष्पादेवदारु-मांसीशैलेयकं वचा ॥
चन्दनं तगरं कुष्ठ एला-पर्णीचतुष्टयम् ।
रास्नातुरगगन्धा च सैन्धवं सपुनर्णवम् ॥
एषां द्विपलिकान् भागान् पेषयित्वा विनिक्षिपेत् ।
शतावरी-रसञ्चैव तैलतुल प्रदापयेत् ॥
आजं वा यदि वा गव्य क्षीरं दत्वा चतुर्गुणम् ।
पानेवस्तौ तथाभ्यङ्गे भोज्ये चैव प्रशस्यते ॥

---

५ । नारायणतैलमिति चक्रदत्ते, आयुर्वेदसंग्रहे च ।

अश्वो वा वातसंभग्नो गजो वा यदि वा नरः।
पङ्गुलः पीठसर्पी च तैलेनानेन सिद्ध्यति ॥
अधोभागे च ये वाताः शिरोमध्यगताश्च ये।
दन्तशूले हनुस्तम्भे मन्यास्थम्भे गलग्रहे ॥
यस्य शुष्यति चैकाङ्ग गतिर्य्यस्य च विह्वला।
क्षीणेन्द्रिया नष्टशुक्रा ज्वरक्षीणाश्च ये नराः ॥
बधिरा लल्लजिह्वाश्च मन्दमेधस एव च।
अल्प प्रजा च या नारी या च गर्भ न विन्दति ॥
वातार्त्तौ वृषणौ येषामन्त्रवृद्धिश्च दारुणा।
एतत् तैलवर तेषा नाम्ना नारायणं स्मृतम् ॥
तगरं स्यान्नतं तस्याभावे शीयलीछोपड़ ।

तिल तैल १२ सेर, बल, मातधिला, पारलि, गमारी, गन्धभेदेली, अश्वगन्धा, भेकुरि, कण्टकारी, दुइ बरियाल, गोक्षुर, पुनर्णवा प्रत्येके १० पल मे जल १९२ सेर, शेष ४८ सेर शतमूलर रस १२ सेर, आज गव्यम्वा दुग्ध ४८ सेर, कल्क शुलफा, उत्र, जटामार्सी, शेलज, वच, रक्तचन्दन, तगरमूल, कूर, एलाचि, शालानी, पिठानी, मापानी, मुगानी, कपौठारि, अश्वगन्धा, सैन्धव, पुनर्णवा एषा प्रति २ पल, गन्ध द्रव्यादि यदृच्छया देयानि।

## माषतैलम्

मापातसीयवकुरुण्टककण्टकारीगोकण्टटुण्टुकजटाकपिवच्छुतोयैः।
कार्पासकास्थिशणबीजकुलत्थकोलक्वाथेन वस्तपिशितस्य रसेन चापि ॥
शुण्ठ्या समागधिकया शतपुष्पया च सैरण्डमूल-सपुनर्णवया सरण्या।
रास्नाबलामृतलताकटकैर्व्विपक्वं मापाख्यमेतदववाहुहरञ्च तैलम्।
अर्द्धाङ्गशोषमपतानकमर्द्धवातमाक्षेपकं सभुजकम्प-शिरःप्रकम्पम्।
नस्येन वस्ति विधिना परिषेचनेन हन्यात् कटी-जघनजानुरुजश्च सर्व्वाः
[ रुजः समीरात् ] ॥

तिलतैल ३ सेर, माष, अतसी, यवधान्य, झिंगिट, कण्टकारी, गोक्षुर बीज, सोणालुमूल, वान्दरकेकोबा मूल, कार्पासवीज, शणबीज, कुलत्थ, बदरशुण्ठी, प्रत्येकर ४ पल, जल ४८ सेर, शष १२ सेर, छाग मांस ६ सेर, जल ४८ सेर, शेष १२ सेर, शुण्ठी, पिप्पली, शुल्फा, एरण्डमूल, पुनर्णवा अनन्तलता, रास्ना, बरियाल, गुड़ची, मैरिच प्रत्येकर ६ तोला कै कल्क लव। पाचे तैल सिद्ध करिब।

## वायुच्छायासुरेन्द्रतैलम्

वाट्यालकं तुलार्द्धञ्च तत्समं दशमूलकम् ।
जलाष्टगुणिते दत्वा पादशेषं शृतं नयेत् ॥
एतत् क्वाथे पचेत्तैलं माषक्वाथन्तु दापयेत् ।
कल्कार्थं दीयते तत्र मञ्जिष्ठारक्तचन्दनम् ॥
कुष्ठमेलादेवदारुशैलेयं सैन्धवं वचा ।
कक्कोलं पद्मकाष्ठञ्च शृङ्गीतगरपादिका ॥
गुड़ूची-मुद्गपर्णी च माषपर्णी-शतावरी ।
नागह्वाञ्च श्यामलता-शतपुष्पा-पुनर्णवा ॥
एषां तोलद्वयं भागं दत्वा तैलन्तु पाचयेत् ।
एतत् तैलवरं नाम्ना वायुच्छायासुरेन्द्रकम् ॥
सर्व्ववातविकारेषु हितं पुंसाञ्च योषिताम् ।
क्षीणशुक्रार्त्तवानाञ्च नारीणाञ्च विशेषतः ॥
चेतोविकारं हन्त्याशु वायुमाक्षेपसम्भवम् ।
मर्म्मवातं श्रमकृतं गात्रकम्पादिकन्तथा ॥
हिक्का-श्वासञ्च कासञ्च वातपित्तसमुद्भवम् ।
अपस्मारे तथोन्मादे हितं लेपे च भोजने ।
श्रीमद्गहननाथेन रचितं विश्वसम्पदे ॥
त्रैलोक्यं भक्षणे योज्यं लेपने च यथोचितं ।
यदि भोगार्थकं योज्य गन्धद्रव्य प्रदापयेत् ॥

तिलतैल ३ सेर, क्वाथ वरियाल १० पोवा जल ४८ सेर, शेष १२ सेर, कल्क, मञ्जिष्ठा २ तोला, रक्तचन्दन २ तोला. कुर २, एलाचि २, उषे २, शैलज २, सैन्धव २, वच २, कक्कोल २, पद्मकाष्ठ २, काकटाशृङ्गी २, तगरमूल २, गुड़ूची २, मुद्गपर्णी २, माषपर्णी २, शतमूल २, नागकेशर २, टुकरीया मूल २, शुलफा २, पुनर्णवा २ तोलाके। गन्धद्रव्य यथालाभ दि सिद्ध करिब ।

## वातगजाङ्कुशः

मृतं सुतं मृतं लौहं ताप्यं गन्धकतालकं ।
पथ्या शृङ्गी विषं व्योषमग्निमन्थञ्च टङ्कनं ।
तुल्यं खल्ले दिनं मद्यं मुण्डी-निर्गुण्डीजैर्द्रवैः ।

द्विगुञ्जां वटिकां खादेत् सर्व्ववातप्रशान्तये ।
साध्यासाध्यं निहन्त्याशु रसो वात गजाङ्कुशः ॥

रस सिन्दुर १ तोला, गन्धक १ तोला, हरिताल १ तोला, स्वर्णमाक्षिक १ तोला, हरीतकी १ तोला, काकराश्रृङ्गी १ तोला, विष १ तोला, त्रिकटु ३ तोला, भातघिला १ तोला, सुवगा १ तोला, मुराडी निर्गुण्डीर रसेरे मर्दि, द्विरक्ति प्रमाणे वटिका करिव । पत्रगडपञ्चक अनुपान ।

## सर्व्वाङ्गसुन्दरः

शुद्धं सूतं तथा गन्धं मृतञ्चाभ्रं मृतायस ।
रजतञ्च तथा ताप्यं तथा चामीकरं समं ॥
नीलोत्पलस्य मूलञ्चै मृणालं तत्समं मतं ।
वक्ष्यमाणौषधैर्भाव्यं सप्तवारं पुनः पुनः ॥
केशराजस्य भृङ्गस्य तथा कुष्माण्डकस्य च ।
शतावरी-विदारी च कसेरुस्वरसैस्तथा ॥
इर्व्वारुबीजकल्केन शाल्मल्यामूलजैर्द्रवै. ।
क्रमेन भावयेदेषा रसैश्चैव पृथक् पृथक् ॥
रक्तिकादि क्रमेणैव वटिका कारयेत्ततः ।
वटिकां प्रातरेकैका खादेन्नित्यं यथाबलम् ॥
अनुपानमिह प्रोक्त क्षीरमिक्षुरसादिकम् ।
नश्यन्ति सर्व्वजा वाता सर्व्वङ्गैकाङ्गसंस्थिताः ॥
पक्षाघातार्द्दिते वाते मन्यास्तम्भे हनुग्रहे ।
कट्यार्द्दिते वस्तिशूले तथा खञ्जार्द्दितेषु च ॥
पाणिपादादि दाहेषु अम्लपित्ते च शस्यते ।
अम्लपित्तभवं रोगं वस्तिमेहनग भवेत् ।
कट्यां सन्धौ तथा पादे नितम्बे फलके तथा ।
एषु स्थानेषु ये दोषास्तान् सर्व्वान्नाशयत्यल ॥
अश्विभ्यां भाषितः सम्यग् रसः सर्व्वाङ्गसुन्दरः ॥

## तालभैरवी

तालगन्धरसाहीन्द्र-टङ्कव्योषं सहिङ्गुलं ।
पिष्ट्वाद्रस्वरसैः कुर्य्याद् वटिकां मुद्गमानतः ॥

सा सेविता निहन्त्याशु वातश्लेष्मभवान् गदान्।
ग्रहणी-वह्निमान्द्यार्शः सूचिवातं सशैत्यकम्॥

हरिताल १, गन्धक १, रस १, सीस १, सुवगा १, त्रिकटु ३, शुद्ध हिङ्गुल १, प्रत्येके तोलक, आद्रक रसेरे मुद्ग प्रमाण वटिका। यथानुपान।

इति वैद्यकसारोद्धारे वाताधिकारः॥

## २६। अथ वातरक्त-चिकित्सा

उत्तानमहागम्भीरं द्विविधं वातशोणितम्।
त्वङ्मांसाश्रयमुत्तानं गम्भीरन्त्वन्तराश्रयम्॥

वातरक्त २ विध, चर्म्ममांसतास्थित बाह्यत ; अस्थित अन्तराश्रित। पूर्व्वे तेज कटाव, बाह्यत लेप दिव। तैलसेतु विंचन—एइसकल अन्तराश्रयर। मिग्मिाष, चनक, मुगट, मसुर, वनमुगड, घृतेर यूष करि खाव। पथ्य चेङ्गरी, वेतगाज, शतमूल, मतुवा, आरण्यमांसर रस, घृतभर्ज्जित एइसकल पथ्य व्यञ्जन। शालि षष्टिक पुराण खाव।

अमृता-नागर-धन्याक-कर्षत्रयेण पाचनं सिद्धम्।
जयति सरक्तं वातं सामं कुष्ठान्यशेषाणि॥

गुड़ची, आदा, धनीया प्रति २ तोला, जल ६ पल शेष १६ तोला पेयं।

बासागुरुची-चतुरङ्गुलानामेरण्डतैलेन पिबेत् कषायम।
क्रमेन सर्व्वाङ्गजमप्यशेषं जयेदसृग्वातभवं विकारं॥

वासक, गुड़ूची, एरण्डमूल, एषां प्रति २ तोला, जल ४ पल, शेष १ पल, प्रक्षेप एरण्ड तैल।

लीढ्वा मुण्डिनिकाचूर्णं मधुसर्पिः समायुतम्।
छिन्ना क्वाथ पिवन् हन्ति वातरक्तं सुदुस्तरम्।

मुण्डफला, वनर मूलर चूर्ण १ तोला, गुड़ूची क्वाथ, मधु, घृतन्दत्वा पेयं।

गुड़ूच्याः स्वरसं६ कल्कं चूर्णं वा क्वाथमेव वा।
प्रभूतकालमासेव्यमुच्यते वातशोणितात्॥

गुड़ूचीर स्वरस, क्वाथ, कल्क, चूर्ण अधिककाल सेवन करिले वातरक्त गुचे।

६। अमृतं गुड़ूची, छान्द सत्त्वाद्ह्रस्वः। अयं योगः पित्तोत्तरे इति चक्रदत्त-टीकायां शिवदासः।

पटोल-कटुका-भीरु त्रिफलामृतसाधितम् ।
क्वाथं पीत्वा जयेज्जन्तुः सदाहं वातशोणितम् ॥

पटोललता, कटुकी, शतमूल, त्रिफला, मिलित २ तोला, गोमूत्र ८ तोला, जल ३ पल शेष १ पल खाव ।

गोधूमचूर्णाजपयोघृतञ्च सच्छागदुग्धो रुबुबीजकल्कः ।
लेपे विधेयं शतधौत सर्पिः सेके पयश्चाविकमेव शस्तम् ॥

गोमधानर चूर्ण, छागदुग्ध घृत दि लेप । एरण्डगटी वाटि छागदुग्ध घृत दि लेप । इति लेपः ।

कटुका-मधुयष्ट्याह्व [कटुकामृतयष्ट्याह्व] शुण्ठीकल्कं समाक्षिकं ।
गोमूत्रपीतं जयति सकफ वातशोणितम ॥

सबारे मिलि २ तोला वाटि, गोमूत्र ८ तोला, मधु २ तोला दि खाव ।

धात्री-हरिद्रा-मुस्ताना कषायञ्च कफाधिके ।

आम ... अवधि, मथा मिलि २ तोला, जल ४ पल शेष १ पल ।

कोकिलाक्षामृताक्वाथं पिबेत् कृष्णा कफाधिके ।

कोकिलाक्ष गुड़ुचा मिलि २ तोला, जल ४ पल, शेष १ पल पिप्पली चूर्ण दि खाव । इति कफाधिके ।

वातरक्तप्रशमनं हृद्यं गुडघृतं स्मृतम ।

गुड़घृत समे लइ खाव उन्हे । अथ त्रिदोषे ।—

सर्व्वेषु सगुडां पथ्या गुडूचीक्वाथमेव वा ।
पिप्पलीवर्द्धमानम्वा शीलयेत् सुसमाहितः ॥

गुड़ूची २ तोला, जल ४ पल शेष १ पल, हरीतकी चूर्ण गुडमिश्रित करि खाव । पिप्पली प्रथम दिवसत १ टा, द्वितीय दिवसत २ टा तृतीय दिवसत ३ टा एव क्रमेण सप्तदिनान्यवधि, पिप्पली वर्द्धमानः ।

## सम्पाकादि

सम्पकामृतवासानामेरण्डस्नेहसंयुतं ।
पीत्वा क्वाथमसृग्वातं क्रमात् सर्व्वाङ्गजं जयेत् ॥

सोणारु गुटी, गुड़ूची, वासक एषां मिलित २ तोला, जल ४ पल, शेष १ पल, प्रक्षेप एरण्ड तैल ।

## नवकार्षिकः

त्रिफलानिम्बमञ्जिष्ठावचाकटुकरोहिणी ।
वत्सादनी दारुनिशा कषायो नवकार्षिकः ॥
वातरक्तं तथाकुष्ठं पामानं रक्तमण्डलम् ।
कण्डूं कापालिका-कुष्ठं पानादेवापकर्षति ॥
पञ्चरक्तिकमानेन कार्य्योऽयं नवकार्षिकः ।
किन्त्वेवं साधिते क्वाथे योग्यमात्रा प्रदीयते ॥

त्रिफला १५ रति, निम ५ रति, मजाठि २ रति, वच ५ रति, कटकी ५ रति, गुड़ूची ५ रति, आचुकाठ ५ रति, एइ मानेरे २ तोलाकै लै जल १८ पल, शेष १ पल अत्र योग्यमात्रा कार्य्या ।

## गुड़ूचीघृतम्

गुड़ूचीक्वाथकल्काभ्या सपयस्कं शृतं घृतं ।
हन्ति वातं तथा रक्तं कुष्ठं जयति दुस्तरम् ॥

घृत ३ सेर, गोदुग्ध ३ सेर, गुड़ूची ६४ पल, जल ४८ सेर दि क्वाथ करि शेष १२ सेर, गुड़ूचीरे कल्क ८ पलदि सिद्ध करिव ।

## अपर-गुड़ूचीघृतम्

अमृतायाः कषायेण कल्केन नागरस्य च ।
दुग्धस्निग्धघृतं सिद्धं वातरक्तरुजापहं ॥
आमवाताढ्य वातादीन् तथादुष्टव्रणानि च ।
कुष्ठानि गुल्ममेहांश्च हन्यात् शीघ्रं प्रयोजितम् ॥

गुड़ूची ६४ पल, ४८ सेर जल दि शेष १२ सेर शुगठी कल्क ८ पल दि सिद्ध करिव ।

## शतावरीघृतम्

शतावरीकल्पगर्भे रसे तस्याश्चतुर्गुणे ।
क्षीरतुल्यं घृतं पक्वं वातशोणितनाशनम् ॥

घृत ३ सेर, शतमूलर रस १२ सेर, तारे कल्क ८ पल, क्षीर ३ सेर दि सिद्ध करिव । शतावरी घृतं वातपैत्तिके ।

## अमृताद्यं घृतम्

अमृतामधुकं द्राक्षा-त्रिफलानागरं बला ।
वासारग्वध वृश्चीर-देवदारु-त्रिकण्टकम् ॥
कटुकाशवरीकृष्णा-काश्मर्य्यस्य फलानि च ।
रास्नाक्षुरकगन्धर्व-वृद्धदारघनोत्पलैः ॥
कल्कैरेभिः समैः कृत्वा सर्पिः प्रस्थं विपाचयेत् ।
धात्रीरसं समं दत्वा वारित्रिगुणसंयुतम् ॥
सम्यक् सिद्धन्तु विज्ञाय भोज्ये पाने च शस्यते ।
बहुदोषान्वितं वातं रक्तेन सहमूर्च्छितम् ॥
उत्तानञ्चापि गम्भीरं त्रिकजङ्घोरुजानुजम् ।
क्रोष्टुशीर्षे महाशूले चामवाते सुदारुणे ॥
वातरोगोपसृष्टस्य वेदनाञ्चाति दुस्तराम् ।
मूत्रकृच्छ्रमुदावर्त्तं प्रमेहं विषमं ज्वरम् ॥
एतान् सर्वान निहन्त्याशु वातपित्तकफोद्भवान् ॥
सर्वकालोपयोगेन वर्णायुर्बलवर्द्धनम् ।
अश्विभ्यां निर्म्मितं श्रेष्ठं घृतमेतदनुत्तमम् ॥

घृत ३ सेर, धात्रीरस ३ सेर, जल ९ सेर, गुड़ूची, यष्टिमधु गमारीगुटी, त्रिफला, शुण्ठी, बलामूल, वाहकमूल, सोणारु गुटी, वगा पुनर्णवा, उत्रै, गोक्षुर, कटकीतिता, पिप्पली, गमारीगुटी, शतमूल, रास्ना, कोकिलाक्ष, एरण्डमूल, टुकरीया, मथा, कूर प्रत्येकर ३ महाके कल्क लव ।

## दशपाकबलातैलम्

बलाकषायकल्काभ्यां तैलं क्षीरचतुर्गुणम् ।
दशपाकं भवेदेतद्वातासृग्वातपित्तजित् ॥
धन्यं पुंसवनञ्चैव नराणा शुक्रवर्द्धनम् ।
रेतोयोनिविकारघ्नमेतद्वातविकारनुत् ॥

तिल तैल ३ सेर, क्वाथार्थ वरियाल मूल ३ सेर ३२ टका, जल ४८ सेर, शेष १२ सेर, कल्क वरियाल मूल ३ पोवा २ टका, गोक्षीर १२ सेर एवं दशधा पाकः ।

## विषतिन्दुकतैलम्

विषतरुफलमज्जाप्रस्थयुग्मञ्च शिग्रु,
स्वरसलकुचवारिप्रस्थमेकैकशश्च ।

कनकवरुणचित्रापत्र-निर्गुण्डिकास्नुक्,
स्वरसतुरगगन्धा-वैजयन्तीरसश्च ॥
पृथागतिपरिकल्प्य प्रस्थयुग्मेन युग्मम्,
विषतरुफलमज्जातुल्यतैलं विपक्वम् ।
लशुनसरलयष्टीकुष्ठसिन्धूत्थयुग्मं,
दहनतिमिरकृष्णाकल्कयुक्तं सुसिद्धम् ॥
हरति सकलवातान् घोररूपानसाध्यान् ।
प्रतिदिनमनुलेपात् सुप्तवातस्य जन्तोः ॥
कुष्ठमष्टादशविधं द्विविधं वातशोणितम ।
वैवर्ण्यं त्वग्गतान् दोषान् नाशयत्याशु मर्द्दनात् ॥

कटु तैल ३ सेर, क्वाथ कुचिला बीज ३ सेर, १६ तोला, सुन्दि जल २४ सेर, शेष ३ सेर, एवं शिग्रुमूल क्वाथ एवं वेरेला मूल क्वाथ एवं धुस्तुर मूल क्वाथ एवं चितामूल एवं वरुण मूल क्वाथ एवं निर्गुण्डी पत्र रस, स्नुहीपत्र रस, अश्वगन्धाक्वाथ एवं जयन्तीपत्र रस। कल्क रसोन, सरल, यष्टिमधु, कुर, सैन्धव, चितामूल, पिप्पली एषां प्रति १ पल ।

## वातरक्तान्तकोरसः

गन्धकं पारदं लौहं घनतालमनःशिला ।
गुग्गुलुं शोधितं सर्व्वं समभागेन चूर्णयेत् ॥
विडङ्गत्रिफलाव्योषमहिफेनपुनर्णवा ।
चित्रकं देवदारुश्च दार्व्वीश्वेतापराजिता ॥
चूर्णमेषां पृथक्तुल्यं सर्व्वमेकत्र भावयेत् ॥
त्रिफलाभृङ्गराजस्य रसेनैव त्रिधा त्रिधा ।
संचूर्ण्य भक्षयेदेव माषमात्रं दिने दिने ॥
कृत्वानुपानं निम्बस्य पत्रं पुष्पं फलं त्वचं ।
मानमात्रं घृतैः कुर्य्यात् सर्व्ववातविकारनुत् ॥
वातरक्त महाघोरं गम्भीरं सर्व्वज जयेत् ।
सर्व्वोपद्रवसंयुक्तं साध्यासाध्यं निहन्त्यलं ॥

गन्धक १ तोला, रस १ तोला, अभ्र १ तोला, हरिताल १ तोला, मनःशिला १ तोला, गुग्गुलु १ तोला, विड़ङ्ग १ तोला, त्रिफला ३ तोला, त्रिकटु ३ तोला, कापिङ्ग १ तोला, पुनर्णवा १ तोला, चित्रक १ तोला, उषै १ तोला, आचुकाठ १ तोला, बगा अपराजिता १ तोला एषां प्रति १ तोलाकं चूर्णमेकीकृत्य

भावनार्थ त्रिफला काथ ३ दिन, भृङ्गराज रस ३ दिन, रक्तिद्वयमाना वटी कार्य्या। अनुपान निम्बपत्र पुष्प फल छाल एषां समभाग चूर्ण ३२ रति घिउ मिश्रित करि चेनेकि खाव।

**इति वैद्यकसारोद्धारे वातरक्ताधिकारः॥**

## ३०। अथोरुस्तम्भ-चिकित्सा

श्लेष्मणः शमनं [चा.णं] यत् स्यान्न च मारुतकोपनम्।
तत् सर्व्वं सर्व्वदा कार्य्यमुरुस्तम्भस्य भेषजं॥
तस्य न स्नेहन कार्य्यं न बस्तिर्नविरेचनम्।७
सर्व्वोरुक्रमः कार्य्यस्तत्रादौ कफनाशनः॥
पश्चाद्वातविनाशाय कृत्स्नः कार्य्यः क्रियाक्रम॥
एतस्मिन्नुरुस्तम्भे नासृक्स्राव न कारयेत्।

उरुस्तम्भ व्याधित कक्कुणत थंभे धरि शोथ हय। कफ नाश करिव, वायु शान्त करिव। पाचे उरुस्तम्भ हने तैल क्रिया करिव। तन तैल नेगाव। बस्ति नकरिव। रेचन नकरिव। कफनाशक सकल वस्तु खाव। कफनाश हने वायु शान्त होवा औषध आदि क्रिया करिव। उरुस्तम्भ व्याधित तेज नकटाव।

तस्मादत्र सदाकार्य्यं स्नेहरुक्षणलङ्घनं।

उरुस्तम्भ हने तैलक्रिया, शुष्क वस्तु लङ्घन टहाक आचरिव।

चौद्रसर्षपवल्मीकमृत्तिकासयुत भिषक्।
गाढमुत्सादनं कुर्य्यादूरुस्तम्भे प्रलेपनम्॥

मधु, श्वेतसर्षप, उइमाटि समभाग वाटि लेप दिव

### भल्लातकादिः

भल्लातकामृताशुण्ठीदारुपथ्या पुनर्णवा।
पञ्चमूलीद्वयोन्मिश्रा ऊरुस्तम्भनिवर्हणाः॥

भल्ला गुड़ूचो, आदा, उभै, शिलिखा, पुनर्णवा, वेल, भातघिला, गमारी, पारलि, गणियरी, शालानी, पीठानी, कण्टकारी, गोक्षुर, प्रत्येके समभागे मिलि २ तोला, जल ४ पल, शेष १ पल पान।

---

७। नस्य न स्नेहनं कार्य्यं न बस्तिर्न विरेचनम्। --इति चक्रदत्तः।

पिप्पलीपिप्पलीमूलभल्लातक्वाथ एव च ।
कल्को वा मधुसन्मिश्र ऊरुस्तम्भविनाशनः ॥

पिप्पली, पिप्पलीमूल, भल्ला, एषां मिलि २ तोला, जल ४ पल, शेष १ पल मधु दत्वा पेयं । अथवा कल्कवटि मधु दत्वा खादेत् ।

चव्याभयाग्निदारुणां समधुः स्यादुरुग्रहे ।
कल्को लिहेच मूत्राढ्यैः करञ्जफलसर्षपैः ॥

चविक, हरीतकी, चित्रक, आ-ुकाठ एषां वाटि मधु दत्वा पेयं । लेटागुटी, सेवासर्षपं गोमूत्रेण पिष्ट्वा लेपः ।

## अष्टकट्वरतैलम्

पलाभ्यां पिप्पलीमूलनागरादष्टकट्वरः ।
तैलप्रस्थः समो दध्ना गृध्रस्यूरुग्रहापहः ॥

सर्षप तैल ३ सेर, दधि ३ सेर, ससरदधि पादजलभ मथित तक्र २४ सेर । कल्क पिप्पलीमूल शुयठी एषां प्रति ४ पल ।

## गुञ्जाभद्रोरसः

निष्कत्रयं८ शुद्धसूतं निष्कद्वादशगन्धकं ।
गुञ्जावीजञ्च९ षड्निष्क जयन्तीनिम्ववीजकम् ॥
प्रत्येकं निष्कमात्रन्तु निष्कं जैपालवीजकं ।
जयाजम्बीरधुस्तूरकाकमाचीद्रवैर्दिनम् ॥
भावयित्वा वटीं कुर्य्यात् चतुर्गुञ्जाप्रमाणतः ।
गुञ्जाभद्ररसो नाम हिङ्गुसैन्धवसंयुतः ।
शमयत्युल्वनं दुःखमूरुस्तम्भं सुदारुणम् ॥

शुद्ध रस १॥ तोला, शुद्ध गन्धक ६ तोला, श्वेतगुञ्जा बीज चूर्ण ३ तोला, निमगुटीर चूर्ण ॥ तोला, जयन्तीफुलर गुटी ॥ तोला ।

८। गुञ्जाभद्ररसे निष्कमिति, निष्कमर्द्धतोलकं ।

९। गुञ्जावीजं श्वेतगुञ्जावीजं । —इति रसेन्द्रसारव्याख्यायां गोपालः ।

जयपाल बीज ॥ तोला, एकीकृत्य जयन्ती पत्ररस, धुस्तूरा, काकमाची, जम्बीर रस एषां रसेन दिनमेकं मर्द्दनं कृत्वा गुञ्जामात्रा वटिका कार्य्या। हिङ्गु सैन्धव अनुपान करि खाव।

**इति वैद्यकसारोद्धारे उरुस्तम्भाधिकारः ॥**

## ३१। अथ आमवात-चिकित्सा

आहारस्य रसः शेषो यो न पक्वोऽग्निलाघवात्।
समूलं सर्व्वरोगाणामाममित्यभिधीयते ॥

अन्नादि भोजन करिले अल्पाग्नि कारणे यिनि पाक नेपाइ शेष हुइ थाके, सकलो रोगर सेये मूल हय। तारे नाम आम बोले।

लङ्घनं स्वेदनं तिक्त-दीपनानि कटूनि च।
विरेचनं स्नेहपानं वस्तयश्चाममारुते ॥

लङ्घन करिब, सेक दिब, तिक्त द्रव्य खाव, अग्निदीप्तिकारक द्रव्य खाव। जलाखाव, विरेचन करिव, घृतपान, तैलघर्षण, वस्ति करिव। आमवात हत इत्यादि क्रिया करिव।

### षडङ्गस्वेदः [ शङ्करस्वेदः ]

कार्पासास्थि-कुलात्थिकातिलयवैरेरण्डमूलातसी।
वर्षाभूशनशिग्रुकाञ्जिकयुतैरेकीकृतैर्वा पृथक्।
स्वेदः स्यादथ कर्पूरोदरशिरः स्फिक्पाणिपादाङ्गुलि,
गुल्फस्कन्ध-कटीरुजा विजयते, सामाः समीरानुगाः ॥

कार्पासास्थि, कुलत्थिका, तिल, यवधान्य, एरण्डमूल, मसिना, पुनर्णावा, शनबीज, एतानि समभागानि स्थाल्यां काञ्जिकेन सिद्धं तस्योपरिलिप्तं सरावं दत्वा सच्छिद्रं पुटकद्वयं एकैकमानीय स्वेदयेत्।

त्रिवृत् सैन्धव-शुण्ठीनां आरणालेन चूर्णितम्।
पीत्वा विमुच्यते जन्तुरामवातहरं परम ॥

तेड़िया, शुनाचूर्णं ७२ रति, सैन्धव १२ रति, काञ्जिक पलेन पेयं।

## बृहद्योगराज-गुग्गुलुः

त्र्यकटु त्रिफलापाठाशताह्वा रजनीद्वयम् ।
अजमोदावचाहिङ्गुहवषाहस्तिपिप्पली ॥
उपकुञ्चिका-शटीधान्यं विड़ं सौवर्च्चलं तथा ।
सैन्धवं पिप्पलीमलं त्वगेलापत्रकेशरम ॥
फनिजफ़कश्च लौहञ्च [तगर] मर्जकश्च त्रिकण्टकः ।
रास्ना-चातिविषा-शण्ठी-यवक्षाराम्लवेतसम ॥
चित्रकं पुष्करं चव्य वृक्षाम्लं दाडिमं रुवः ।
अश्वगन्धा-त्रिवृद्दन्ती बदर देवदारु च ॥
हरिद्रा कटकामर्व्वा-त्रयेमाना-दुरालभा ।
विड़ङ्गं मर्षपञ्चैव [मृतवङ्गञ्च] यमानी वासकन्तथा ॥
एतानि समभागानि श्लक्ष्णचर्णानि कारयेत ।
शोधितं गुगलुञ्चैव सर्व्वचर्णसम नयेत् ॥
घृतेन पीड़यित्वा त [घृतेन पिष्टयित्वा] स्निग्धे भाण्डे निधापयेत् ।
रसवातेन ये भग्नाः कटिभग्नाश्च ये जनाः ।
एकाङ्गं शर्ष्यते येषा कृष्ठ वापि चलोत्तरम
पादौ निम्नाागितौ येषां येषा वा गृध्रसीग्रहः ।
सन्धिवात क्रोष्टुशीर्ष वात सर्व्व शरीरगम ॥
अशीतिं वातजान् रोगान् चत्वारिंशच्च पैत्तिकान ॥
विंशति श्लैष्मिका श्चैव हन्त्यवश्य न सशयः ।
अय वृहद्योगराज-गुग्गुलुः सर्व्ववातहा ॥

त्रिकटु, त्रिफला, आकणादि, शुलफा, जीरकद्वय, आजनि, वच, हिङ्गु, हवुषा, हातिपिप्पली, वनयमानी, केतुरि, धनीया, विट्, सौवर्चल, सैन्धव पिप्पलीमल, दालचिनि, एलाचि, तेजपत्र, नागकेशर, क्षुद्रपत्रतुलसी (लौह), तगर, धुना गोक्षुर, रास्ना आतैच, शण्ठी, यवक्षार, थेकर, चिता, पूर, चै, तेतेली, डाडिम, परवडमूल, अश्वगन्धा, त्रिवृता, सोन्दरपगाल, वदरी, उबै, हरिद्रा, कटकीतिता, वनरिहा, नाथकल्प, कुचैलता, विडङ्ग, सेवासरियह, यमानी, वासक प्रत्यकर सममागचूर्ण, तारे समान शोधित गुगगुल, घृतेर पिषिडत करि नवीन भाण्डत थव । तप्तजल अनुपान करि २ मष्ठा प्रमाणे खाब ।

## भृङ्गादिसप्तकम्

भृङ्गामृताश्वेतपुनर्णवानां शक्राशनस्यापि च मार्कवस्य ।
चूर्णं मिताक्षौद्रयुतं घृतेन लिढ्वा पयः पेयमतन्द्रितेन ॥
सामञ्च वायुं ग्रहणीं प्रदुष्टां कासाग्निमादं [ज्वर] स्वरमम्लपित्तं ।
शोथ तथा पाण्डुमरोचकञ्च प्रमेहमुग्रं परिणामशूल ॥
स्निग्धान्न-भोक्तुः पुरुषस्य शीघ्रं निहन्ति सर्व्वं कफपित्तरोग ।
रसायनो वह्निबलप्रदश्च दुर्नामहन्ता ममसप्तकोऽयं ॥

टकरीया लता, गुड़ूची, श्वेतपुनर्णवा, भाङ्ग, भृङ्गराज, प्रत्येकर १ पल चिनि मधु समे मिश्र करिब । २४ रति घृत अनुपान करि ८० रति कै खाब । परे दुग्ध खाब, क्रमे २ टका पर्य्यन्त वृद्धि; पैत्तिक चामवातत शुभ ।

## वातारिगुग्गुलुः

वातारितैलसंयुक्तं गन्धकं पुरसयुतं ।
फलत्रययुतं कृत्वा पिष्टयित्वा [पिष्टयित्वा] चिरं रुजि ॥
भक्षयेत् प्रत्यहं प्रातः रुवुक्वाथानुपानतः ।
दिने दिने प्रयोक्तव्यं मासमेकं निरन्तरम् ॥
आमवातं कटीशूलं गृध्रसी खञ्जपङ्गुता ।
वातरक्तं सशोथञ्च [वातरक्तञ्च शोथञ्च] सदाहं क्रोष्टुशीर्षकम् ॥
शमयेत् कुशलोद्दष्ट [शमयेद्‌वहुशोद्दष्ट]मपि वैद्यैर्विवर्ज्जितम् ॥

शोधित गन्धक १ पल, शोधित गुग्गुलु ४ पल, एरण्ड तैल १ पल, त्रिफला चूर्ण ३ पल, एरण्ड तैल, गन्धक एइ दुइपरे पिष्ठित करिब । पिचत गुगगुलु मिहलाब । २ मद्दा कै खाब, एरण्ड क्वाथ अनुपान त्रिफला क्वाथ बा, विड विवद्धे हितं ।

## स्वल्प-सिंहनादगुग्गुलुः

पलत्रयं कषायस्य त्रिफलायाः सुचूर्णितम् ।
गन्धकस्य पलञ्चैकं कौशिकस्य पलं तथा ॥
कुडवं रुवुतैलस्य सर्व्वमादाय यत्नतः ।
पाचयेत् पाकविद् वैद्यो लौहे ताम्रे च भाजने ॥

हन्ति वातं तथा पित्तं श्लेष्माणं खञ्जपङ्गुताम् ।
श्वासं सुदुर्जयं हन्ति कासं पञ्चविधं तथा ॥
कुष्ठानि वातरक्तञ्च गुल्मशूलोदराणि च ।
आमवातं जयेदेतदपि वैद्यविवर्जितम् ॥
एतदभ्यासयोगेन जरापलितनाशनम् ।
सर्पिस्तैलरसोपेतं [वसोपेतं] अश्नीयाच्छालिषष्टिक ।
सिंहनाद इति ख्यातो रोगवारणदर्पहा ।
वह्निवृद्धिकरः पुंसां भाषितो दण्डपाणिना ॥

त्रिफला ३ पल, जल ३ सेर, शेष १ पल, शोधित गन्धक १ पल, शोधित गुग्गुलु १ पल, एरगड तैल ४ पल, गन्धक चूर्णेन पिष्टनीयः। पश्चात् त्रिफलाक्वाथं गोलयित्वा, लौहपात्रे ताम्रपात्रे वा कियत्कालं पाचयेत्। १६ रतिकै ग्वाव ।

## शुण्ठीखण्डः

नागरस्य पलान्यष्टौ घृतस्य पलविंशतिः ।
क्षीर-द्विप्रस्थसंयुक्तं खण्डस्यार्द्धशतं पचेत् ॥
व्योष त्रिजातकं द्रव्यात् प्रत्येकञ्च पलं पलं ।
निःक्षिप्य चूर्णितं तत्र खादेदग्निबलं प्रति ॥
बल्यमायुष्यमोजस्यं वलिपलितनाशनं ।
आमवातप्रशमनं बलपुष्टिविवर्द्धनम् ॥

शुग्ठीचूर्ण ८ पल, घृत २० पल, दुग्ध ६४ पल, खण्ड १० पोवा—सिद्धे प्रक्षेप त्रिकटु ३ पल, त्रिसुगन्धि ३ पल दत्वा संमर्द्य स्निग्धभाण्डे स्थाप्यं, अतो भक्ष्यं तोलकं तप्तजलमनुपेयं ।

## शुण्ठीघृतम्

नागरक्वाथकल्काभ्यां घृतप्रस्थं विपाचयेत् ।
चतुर्गुणेन तेनाथ केवलेनोदकेन वा ॥
वातश्लेष्मप्रशमनमग्निसन्दीपनं परं ।
नागरं घृतमित्युक्तं कट्यामशूलनाशनम् ॥

घृत ६ पोवा ८ टका, शुग्ठी क्वाथ ६४ पल, जल ४८ सेर, शेष १२ सेर, शुग्ठी कल्क ८ पल सिद्धं ।

### त्रिवृतादिमोदकः

कणामूलकमेरण्ड-त्रिवृद्दन्ती पलं पलं ।
सर्व्वतुल्यामृताशुण्ठी-गुड़ेन सहमोदकः ॥
कर्षमेरण्डतैलेन सर्व्वामवातनाशनः ।
अग्निमान्द्याञ्च शोथञ्च गुल्मार्शोग्रहणीगदान् ॥

पिप्पली मूल १ पल, एरगड मूल १ पल, दन्तीमूल १ पल, तेड़िया मूल १ पल, गुड़ूचीसत्व ५ पल, शुगठीचूर्ण ५ पल, पुराण गुड़ १० पल मिश्रयित्वा मोदकः कार्य्यः। त्रिंकार्षमेरगडतैलन्दत्वा खादेत्।

### [ वृहत् ] रसोनपिण्डः

रसोनस्य पलशतं तिलस्य कुड़वं तथा ।
हिङ्गु-त्रिकटुकं चारौ द्वौ पञ्च लवणानि च ॥
शतपुष्पा तथा कुष्ठं पिप्पलीमूलचित्रकौ ।
अजमोदा यमानी च धन्याकञ्चापि वुद्धिमान् ॥
प्रत्येकन्तु पलञ्चैषां श्लक्ष्णचूर्णानि कारयेत् ।
घृतभाण्डे दृढ़े चैव स्थापयेद् दिनषोड़श ॥
प्रक्षिप्य तैलमानीञ्च प्रस्थार्द्धं काञ्जिकस्य च ।
खादेत् कर्षप्रमाणन्तु तोयं मद्यं पिवेदनु ॥
आमवाते तथा वाते सर्व्वाङ्गैकाङ्गसंश्रिते ।
अपस्मारेऽनले मन्दे कासे श्वासे गरेषु च ।
सोन्मादवातभग्ने च शूले जन्तुषु शस्यते ॥

शोधित रसोन ५ सेर, तिलचूर्ण ८ पल, हिङ्गु १ पल, त्रिकटु ३ पल, यवक्षार १ पल, सर्ज्जिक क्षार १ पल, सैन्धव १ पल, सोवर्च्चल १ पल, विट १ पल, कर्कच १ पल, साम्भार १ पल, शुल्फा १ पल, कुर १ पल, पिप्पली मूल १ पल, चित्रक १ पल, आजनि १ पल, यमानी १ पल, धनीया १ पल, तिलतैल ८ पल, काञ्जि १६ पल सर्व्वमेकीकृत्य घृतभाण्डे स्थापयित्वा आशुधान्यराशौ षोड़श दिनानि स्थापयेत्। अत आकृष्य मत्स्यं तोलकमानं उष्णजलेन मद्येन वा अनुपेयं ।

### पञ्चार्कतैलं

मूलैः सपत्रैः फलपुष्पसारैरर्कस्य निष्पीड्य रसाढकञ्च ।
शुक्तं पलं षोड़शिकं तथैव रास्नारसं तैलमथाढकः स्यात् ॥

भूपर्णि चित्रक-पुनर्णववाजिगन्धा-निर्गुण्डिकातगरशिग्रुसिफालवङ्गैः ।
सिन्धूत्थसर्षपत्रुटीसुरदारुकुष्ठैः कर्षान्वितैः पाचितमाजपय एकं सः ॥
तैलं वातं हरेच्चापि असितञ्च निरन्तरं ।
अभ्यङ्गात् श्रोणीसन्धिस्थं पञ्चवातान् सुमर्द्दनात् ॥
अर्कतैलमिदं श्रेष्ठं सर्व्ववातविकारनुत् ॥

तिलतैल १२ सेर, मूल, पत्र, फल, पुष्प, गच्छ, एइ ५ विध आकण रस १२ सेर, शुक्त १६ पल, रास्ना ८ पल, जल ३ सेर, शेष १ पोवा, छागदुग्ध १२ सेर, नाहर फल, चित्रक, पुनर्णावा, अश्वगन्धा, पचतीया, तगरशिफा, शिग्रमूल, लवङ्ग, सैन्धव, सेवा सरियह, एलाचि, रओै, कूर, दालचिनि एषां प्रति कल्क २ तोला ।

अभिस्यन्दकरा ये च येचान्ये गुरुपिच्छिला ।
वर्ज्जनीयं प्रयत्नेन चामवातार्द्दितैर्नरैः ॥

महिषी क्षीर, गुरु मांस, वीर्य्यकारक वस्तु इसब नाचरिब ।

इति वैद्यकसारोद्धारे आमवाताधिकारः ॥

सप्तमः परिच्छेदः

# शूल-गुल्मरोगादिचिकित्सोपदेशः

## ३२। अथ शूल-चिकित्सा

अनङ्गनाशाय हरस्त्रिशूलं मुमोच कोपान्मकरध्वजश्च।
तमापतन्तं सहसा निरीक्ष्य भयार्द्दितो विष्णुतनुं प्रविष्टः॥
स विष्णुहुङ्कारविमोहितात्मा पपात भूमौ प्रथितः सशूलः।
स पञ्चभूतानुगतं शरीरं प्रदूषयत्यस्य हि पूर्व्व-सृष्टिः॥
वमनं लङ्घनं स्वेदः पाचनं फलवर्त्तयः।
क्षारचूर्णानि गुड़िकाः शस्यन्ते शूलशान्तये॥

वान्ति कराव; लङ्घन कराव, सेन दिव; जीर्णकारक वस्तु खुवाव। फलवर्ति करिव; क्षार औषध दिव, चूर्ण औषध वड़ि करिव।

पुंसः शूलाभिपन्नस्य स्वेद एव सुखावहः।
पायसैः कृशरैः पिण्डैः स्निग्धैर्व्वापि शितोत्करैः॥

अतिशय प्रकारे [ सेनु ] स्वेद दिले शूल शान्त हय।

स्निग्धैः सकौलत्थरसैःससारैः भोज्यैः पयोयूषरसैश्च पथ्यैः।
सहिङ्गुसौवर्च्चलदाड़िमाढ्यैः सपञ्चकोलैः घृततैलमिश्रैः॥

पथ्य सुन्दर वस्तु अन्नादि, कुलत्थ रस, माष, क्षीर, मुद्‌ग यूषादि, हिङ्ग, सौवर्च्चल, दाड़िम, जालुक, आदा, पिप्पली, ऐ एइ पञ्चकोल घृत, एइ औषध पथ्य खाव।

तिलैश्च गुटिकां कृत्वा भ्रामयेज्जठरोपरि।
गुटिकाशमयत्याशु शूलञ्चैवातिदुःसहम्॥

तिलर वड़ि करि उदरत लेप दिव। अथवा तिल वाटि कापरेरे टोपला वान्धि, अग्नित तपताइ सेक दिव।

बलापुनर्णवेरण्ड-वृहतीद्वय गोक्षुरैः।
सहिङ्गु-लवणं पीतं सद्यो वातरुजापहम्॥

बला, पुनर्णवा, एरण्ड मूल, कण्टकारी, भेकुरि, गोक्षुर, एषां मिलि २ तोला, जल ४ पल, शेष १ पल, हिङ्गु सैन्धवं दत्वा पिवेत्।

हिङ्गु प्रतिविषाव्योष-वचा-सौवर्च्चलाभयाः ।

हिङ्गु, आतैच, त्रिकटु, वच, सौवर्च्चल, शिलिखा एषां चूर्णानि उष्णोदकमनुपेयं ।

यमानीहिङ्गु सिन्धूत्थ क्षारसौवर्च्चलाभयाः ।
सुरामण्डेन पातव्या वातशूलनिसूदनाः ॥

यमानो, हिङ्गु, सैन्धव, यवक्षार, सौवर्च्चल, शिलिखा, एषा समभाग चूर्णं लाजमण्डेन पातव्यं ।

विश्वमेरण्डजं मूलं क्वाथयित्वा जल पिवेत् ।
हिङ्गु सौवर्चलोपेतं सद्यः शूलनिवारणम् ॥

आदा, एरण्ड मूल मिलित्वा २ तोला जल ४ पल, शेष १ पल, हिङ्गु २ रति, सौवर्च्चल १६ रति पेयं ।

## विश्वादिः

विश्वैरण्डयवक्वाथः सद्यः शूलनिवारणः ।
हिङ्गु पुष्करमूलाभ्यां हिङ्गु सौवर्च्चलेन वा ॥

आदा, एरण्डमूल, यवधान्य एषा मिलि २ तोला, जल ४ पल, शेष १ पल, हिङ्गु २ रति, सौवर्च्चल १६ रति अथवा हिङ्गु २ रति, कुष्ठचूर्ण १६ रति प्रक्षिप्य पेयं ।

## बृहद्विश्वादिः

विश्वोरुवूकदशमूलयवाम्भसा तु द्विक्षारहिङ्गु लवणत्रयपुष्कराणा ।
चूर्णं पिवेत् हृदयपार्श्वकटीग्रहामपक्वाशयां शभूशरुगज्वरगुल्मशूली ॥

आदा, एरण्डमूल, दशमूल, यवतण्डुल मिलित्वा २ तोला, जल ४ पल शेष १ पल, सौवर्च्चल, सैन्धव, विट, यवक्षार, सर्ज्जिकाक्षार, कुर, हिङ्गु, एषा चूर्णानि प्रक्षिप्य पेयं ।
प्रक्षेपः पादिकः काथ्यादिति वचनात ।

वीजपूरकमूलञ्च घृतेन सहपाययेत् ।
जयेद्वातभवं शूलं कर्षमेकं प्रमाणतः ॥

सोलङ्गर मूल २ तोला घृतेन पिष्ट्वा पाययेत् ।

नाभिलेपाज्जयेच्छूलं मदनः काञ्जिकान्वितः ।

कोटकरा बीज काञ्जिकेन पिष्ट्वा नाभि लेपः ।

मातुलुङ्गरसं सर्पिः सहिङ्गु लवणान्वितः ।
सुखोष्णं पाययेदेतत् विड् विवन्धगदापहम् ॥

सोलङ्गरस २ तोला प्रक्षेपं, घृत हिङ्गु सैन्धव पेयं ।

पित्तशूले— गुड़ः शालिर्यवः क्षीरं सर्पिः पानं विरेचनम् ।
जाङ्गलानि च मांसानि भेषजं पित्तशूलिनाम् ॥

चिनि, शाल्यन्न, यव, सद्य क्षीर, घृत, विरेचन, आरण्यक पक्षिमांस पित्तशूलत इसव पथ्य खाव ।

धान्यारसं विदार्य्या वा त्रायन्तीगोस्तनाम्बुना ।
पिवेत् सशर्करं सद्यः पित्तशूलनिसूदनम्[१] ॥

आमलकी रस ८ तोला, चिनि ३२ रति दत्वा पेयं । एवं कोमोरा, नाथकल्प, द्राक्षा एषां मिलि २ तोला, जल ४ पल, शेष १ पल, प्रक्षेप चिनि, पश्चात क्षीरं पेयं ।

शतावरीरसं क्षौद्रयुतं प्रातः पिवेन्नरः ।
दाहशूलोपशान्त्यर्थं सर्व्वपित्तामयापहम् ॥

शतमूलर रस १ पल मधु दत्वा प्रातः पिवेत् ।

वृहत्यौ गोक्षुरैरण्ड-कुशकाशेक्षुवालिका[२] ।
पीताः पित्तभवं शूलं सद्यो हन्युः सुदारुणम् ॥

कण्टकारी, भेकुरि, गोचुर, एरण्डमूल, कुश, कासि ( इक्षु ), खागरि एषां मिलि २ तोला, जल ४ पल, शेष १ पल, शीते पेयं किञ्चित् मधु प्रक्षिपन्ति ।

त्रिफलानिम्बयष्ट्याह्व-कटुकारग्वधैः शृतम् ।
पाययेन्मधुसमिश्रं दाहशूलोपशान्तये ॥

त्रिफला, निम्ब, यष्टिमधु, कटुकिलता, गमारीगुटी, एषां मिलि २ तोला, जल ४ पल शेष १ पल शीते मधु दत्वा पेयं ।

प्रलिह्यात् पित्तशूलघ्नं धात्रीचूर्णं समाक्षिकं ।

आमलकी चूर्णं मधु मिश्रं खादेत ।

१ । धात्र्याः स्वरसमित्यादि योगत्रयम ।
धात्र्याः स्वरसः, विदार्य्या अपि स्वरसः, त्रायन्ती गोस्तनयोः क्वाथः शर्करा च सर्व्वत्र बोध्या ।
—इति चक्रदत्तटीकायां शिवदासः

२ । इक्षुवालिका, खागड़भेदा । —इति शिवदासः ।

श्लेष्मशूले—श्लेष्मात्मके लङ्घनच्छर्द्दनानि शिरोविरेकं मधुशीधुपानम्।
मधूनि गोधूमयवानरिष्टान् सेवेत रुक्षान् कटुकांश्च सर्व्वान्॥

लङ्घन, वस्ति, नस्य, मधु, शीधु, सुराभेद, गोमधान, यव, शुकान वस्तु, जला, इसब पथ्य आचरिब।

पिप्पली-पिप्पलीमूल-चव्यचित्रकनागरैः।
यवागूर्दीपनीयास्याच्छूलघ्नीतोयसाधिता॥

पिप्पली, पिप्पलीमूल, चविक, चिता, आदा एषां मिलि २ तोला, जल ३ सेर, शेष ३ पोवा, यवचूर्ण १६ टका दत्वा पाकः कार्य्यः, हिङ्गुसैन्धवं दत्वा भक्ष्या।

पञ्चकोलं जलं प्रातः सहिङ्गुलवणान्वितम्।
सुखोष्णं पाययेदेतत् श्लेष्मशूलनिसूदनम्॥

पञ्चकोलक्वाथः, हिङ्गुसैन्धवान्वितः प्रातः पेयः।

विल्वमूलमथैरण्डं चित्रकं विश्वभेषजं।
हिङ्गुसैन्धवसंयुक्तं सद्यः शूलनिवारणम्॥

विल्वमूल, एरण्डमूल, चित्रक, आदा एषां मिलि २ तोला, जल ८ पल, शेष १ पल, हिङ्गुसैन्धव, प्रक्षिप्य, पेयं।

मुस्तं वचां तिक्तकरोहिणीञ्च तथाभयां निर्द्दहनीञ्च तुल्याम्।
पिवेत्तु गोमूत्रयुतां कफोत्थे शूले तथामस्य च पाचनार्थम्॥

मथा, वच, कटकीतिता, शिलिखा, बनरिहा एषां मिलि २ तोला, वाटि गोमूत्र पलेन पेयं।

मातुलुङ्गरसो वापि शिग्रुक्वाथस्तथापरः।
सक्षारो मधुना पीतः पार्श्वहृद्वस्तिशूलनुत्॥

सोलङ्गमूल २ तोला, जल ४ पल, शेष १ पल यवक्षार मधु दि खाव। एइ दरे शिग्रु मूलको खाव।

## हिङ्ग्वादि (कफे आमशूले)

सहिंगुतुम्बुरुव्योषयमानीचित्रकाभया।
सक्षारलवणाश्चूर्णं पिवेत् प्रातः सुखाम्बुना॥
विन्मूत्रानिलशूलघ्नं पाचनं वह्निदीपनम्॥

हिङ्गु, धनोया, त्रिकटु, यमानी, चिता, शिखिखा, समभागे चूर्ण, यवक्षार सैन्धव दि शीतल जलेरे खाव।

दीपकं सैन्धवं पथ्या नागरञ्च चतुः समम् ।
चूर्णं शूलं जयत्याशु मन्दाग्नेश्चैव दीपनम् ॥

यनी, शिलिखा, शुयठी, सैन्धव सममाग चूर्ण शीतल जलेरे खाव ।

कफपित्तशूले—पटोलत्रिफलारिष्ट-क्वाथं मधुयुत पिवेत् ।
पित्त-श्लेष्मज्वरच्छर्दि-दाहशूलोपशान्तये ॥
रसोनं मद्यसम्मिश्रं पिवेत् प्रातः प्रकाङ्क्षितः ।
वातश्लेष्मभव शूलं निहन्यात् वह्निदीपनं ॥

नहरु निस्तुष करि एपल मद्ये रे तदमावे काञ्जिएरे खाव ।

सन्निपातशूले—शङ्खचूर्णं सलवण सहिङ्गुव्योपसंयुतम् ।
उष्णोदकेन तत् पीतं शूलं हन्यात्रिदोषजं ॥

लवण सैन्धवक वोले, व्योप त्रिकटुक वोले ।

## एरण्डसप्तकम्

एरण्डविल्वबृहतीद्वयमातलुङ्ग-पाषाणभिन्त्रिकटमूलकृतः कषायः ।३
सक्षारहिङ्गुलवणो रुवतैलमिश्रः श्रोण्यंशमेढ्रहृदयस्तनरुक्षुपेयः ॥

एरण्डमूल, वेलमूल, कण्टकारी, भेकुरि, सोलङ्गमूल, पाषाणभेदी, गोक्षुर सवाँ मिलि २ तोला क्वाथ करि, हिङ्गु, यवक्षार, एरण्ड तैल सैन्धव, एइ सकल दि खाव ।

## दाधिकं घृतम्

पिप्पलीनागर विल्व कारवीचव्यचित्रकम् ।
हिङ्गु दाडिमवृक्षाम्लवचाक्षाराम्लवतसम् ॥
वर्षाभूकृष्णलवणमजाजीवीजपूरकम् ।
दधित्रिगुणितं सर्पिस्तत् सिद्धं दाधिक घृतम् ॥

३। एरण्डेत्यादौ । मातुलुङ्गं, मातुलुङ्गस्य मूलम्, पाषाणभित्, पाषाणभेदी । त्रिकण्टो गोक्षुरस्तस्य मूलम् । लवणमत्र सैन्धवं न तु सौवर्च्चलम् । —इति चक्रदत्तटीकायां शिवदासः ।

गुल्मार्शःप्लीह हृत्पार्श्वशूलयोनिरुजापहम् ।
दोषप्रशमनं श्रेष्ठं वाधिकं परम स्मृतम् ।।

घृत ३ सेर, दधि ८ सेर, जल १२ सेर, सोलङ्गरस ३ सेर, तस्यमूल कल्क, पिप्पली, शुगठी, कृष्णजीरा, बिल्व, बिल्वशुगठी, चविक, चितामूल हिङ्ग, दाड़िमवीज, तेतेली, वच, यवक्षार, धैकर, पुनर्णबा, विट्लवण, जीरा, बीजपूरक मूल एषां प्रति २ तोला कर्ष सिद्ध ।

## त्रिफलामण्डुरम्

त्रिदोषे —गोमूत्रसिद्ध मण्डुरं त्रिफलाचूर्णसयुतम् ।
विलिहन् मधुसर्पिर्भ्यां शूल हन्ति त्रिदोषजम् ।।

सप्तधा गोमूत्र निर्व्वापित मण्डुर चूर्ण १ पल ४ कर्ष त्रिफलाचूर्ण मिलित (प्रति) ३ पल नूतन पात्रे एकीकृत्य स्थाप्यं, अतो मधुसर्पिभ्या संमर्द्दय मद्यं ।

व्यायामं मैथुनं मद्य लवणं कटुवैदलम् ।
वेगरोधं शुचं क्रोधं वर्जयेच्छूलवान् नरः ।।४

## इति वैद्यकसारोद्धारे शूलाधिकारः ।।

## ३२ । अथ परिणामशूल-चिकित्सा

प्राक्कर्म्मलङ्घनं तत्र वमन म विरेचनम् ।
अनुवासो निरुहश्च वस्तिः गोमूत्रचूर्णयोः ।।
विल्वक्काथेन वमनं कटुतुम्बीजलेन वा ।।

लङ्घन करिव, वान्ति कराव, पेट वोवा, अनुवास विरह दुइविध वस्तिकर्म्म करिव । गोमूत्र चूर्णाद्रव्य विल्वादि क्वाथ खुबाइ वान्ति कराव । तितालाउर क्वाथ वा एइ सकल आचरिव अम्लपित्तत ।

त्रिफलाक्वाथगोमूत्रक्षीरमामरसैः पृथक् ।
एरण्डतैल-द्विगुणैः पीतं शान्त्यं विरेचनम् ।।

त्रिफलार क्वाथ करि १ पल, एरण्ड तैल २ पल दि खाव ।

४ । कम्बलावृत-गात्रस्य प्राणायामं प्रकुर्व्वतः
कटुतैलाक्त शक्तूनां धूपः शूलहरः परः ।।
व्यायामं मैथुनं मद्यं लवणं कटुवैदलम् ।
वेगरोधं शुचं क्रोधं वर्जयेच्छूलवान् नरः । —इत्यधिकः चक्रदत्ते पाठः ।

## विडङ्गादिमोदकः [ वा विडङ्गादिगुटिका ]

विडङ्गत्रिफलाव्योष-त्रिवृद्दन्ति सचित्रकं।
सर्व्वाण्येतानि संस्कृत्य श्लक्ष्णचूर्णानि कारयेत्॥
गुड़ेन मोदकं कृत्वा भक्षयेत् प्रातरुत्थितः।
उष्णोदकदानुपानन्तु दद्याद्वह्निविवर्द्धनम्॥
जयेत् त्रिदोषजं शूलं परिणामसमुद्भवम्।

विड़ङ्ग, त्रिफला, त्रिकटु, त्रिवृता, सोन्दर पवाल, चिता सर्वांग सममागचूर्ण लव, सर्व्वसम गुड़ दिं मोदक करि उष्णोदकेर खाव।

नागरतिलगुड़कल्कं पयसा संसाध्य यः पुमान्दद्यात्।
उग्रं परिणतिशूलं तस्यापैति सप्तरात्रेण॥

आदा, तिलबटा, पुराण गुड़ जलेन पेयं।

पीतं शम्बुकजं भस्म जलेनोष्णेन तत्क्षणात्।
पक्तिजं विनिहन्त्येतत् शूलं विष्णुरिवासुरान्॥

सरु शामुक भस्मकरि उष्णजलेन पीतं।

लौहचूर्णं वरायुक्तं विलीढ़ं मधुसर्पिषा।
शूलं परिणतं हन्यात् तन्मलम्बा प्रयोजितम्॥

लौहजारण १ तोला, त्रिफलाचूर्ण १ तोला, घृत मधुभ्यां लीढ़ं। तन्मलं मण्डुरं एवं लौहवत् खादेत्।

कृष्णाभयालौहचूर्णं गुड़ेन सह भक्षयेत्।
पक्तिशूलं प्रशमयेत् जठराण्यग्निमन्दताम्॥
आमवातविकारांश्च स्थौल्यञ्चैवापकर्षति॥

पिप्पली, शिलिखा, लौहजारण, समभागं कृत्वा गुड़ेन खादेत्।

## पथ्याद्यलौहम्

पथ्या लौहरजः शुण्ठीचूर्णं माक्षिक-सर्पिषा।
परिणामरुजं हन्ति वातपित्तकफात्मिकां॥

हरीतकीचूर्ण १ तोला, शुण्ठीचूर्ण १ तोला, लौहजारण ४ तोला, घृतमधुभ्यां समर्द्य खादेत्

## नारिकेलक्षारः वा नारिकेललवणम्

नारिकेलं सतोयञ्च लवणेन प्रपूरितम् ।
मृदावचेष्टितं शुष्कं पक्वं गोमयवह्निना ॥
पिप्पल्या भक्षितं हन्ति शूलं हि परिणामजम् ।
वातिकं पैत्तिकञ्चापि श्लैष्मिक सान्निपातिकम् ॥

पक्क नारिकेलं सजलं लवणेन प्रपूरितं दग्ध्वा लवणं ग्राह्यं, ततः प्रथम भक्ष्यं ३२ रति, तत्सजलमनुपेयं ।

## पिप्पलीघृतम्

क्वाथेन कल्केन च पिप्पलीनां सिद्धं घृतं माक्षिकसंप्रयुक्तम् ।
क्षीरानुपानस्य निहन्त्यवश्यं [क्षीरान्न-पथ्यैर्विनिहन्त्यवश्यं]
शूलं प्रवृद्धं परिणामसञ्ज्ञम् ॥

पिप्पली १ पोवा, जल ७ सेर, शेष ६ पोवा, कल्क ३२ टका, घृत ६ पोवा ८ टका, शीते मधु ३२ टका दत्वा आलोड्य कर्षमेकं खादेत । क्षीरपलैकमनुपीबेत् ।

## बृहच्छतावरीमण्डुरम्

मण्डुरस्याऽतितप्तस्य वराक्वाथप्लुतस्य च ।
चूर्णीकृत्य पलान्यष्टौ शतावरीरसस्य च ॥
दध्नश्च पयसश्चाष्टौ चामलक्या रसस्य च ।
चतुष्पलं घृतस्यापि शानमात्र विनिक्षिपेत् ॥
सिद्धे प्रत्येकमेतेषामजाजीधान्यमुस्तकम् ।
त्रिजातककणा पथ्या उपयुक्त निहन्ति च ॥
शूलं दोषत्रयोद्भूतमम्लपित्तञ्च दारुणम् ।
अरुचिञ्च वमिञ्चैव कासं श्वासञ्च नाशयेत् ॥

त्रिफला काथ निर्व्वापित शुद्धमण्डुरचूर्ण ८ पल, शतमूली रस ८ पल, गव्यदधि ८ पल । गोदुग्ध ८ पल, आमलकीरस ८ पल, घृत ४ पल, सिद्धे प्रक्षेप, मोगजीरा, धनीया, मथा, एलाचि, दालचिनि, तेजपात, पिप्पली, शिलिखा एषां प्रत्येक चूर्ण ३० रति, दत्वावतार्य्यं

## क्षीरमण्डुरम्

वातपैत्तिके— लोहकिट्टपलान्यष्टौ गोमूत्रार्द्धाढ़के पचेत् ।
क्षीरप्रस्थेन तत् सिद्धं पक्ति[पित्त]शूलहरं नृणां ॥

पूर्ववत् शोधित मण्डुरचूर्ण ८ पल, गोमूत्र ६४ पल, गोदुग्ध ३२ पल, पक्त्वा वटिका कार्य्या ।

## त्रिफलालौहम्

अक्षामलकशिवानां स्वरसैश्च पक्वं सुलौहजचूर्णम् ।
सगुडं यद्युपभुङ्क्ते मुञ्चन्ति शूली त्रिदोषजं शूलम् ॥

लौहभष्म १ पल, पुराण गुड़ १ पल, त्रिफलारस १६ पल, गुड़पाक हले घृत मधु दि लेह करि खाव ४ रतिर परा १० ररित पर्य्यन्त ।

## लौहगुड़िका

लौहस्य रजसो भागस्त्रिफलायास्त्रयस्तथा[५] ।
गुड़स्याष्टौ तथा भागा गुड़ान्मूत्रं चतुर्गुणम् ॥
एतत् सर्व्वञ्च विपचेद् गुड़पाकविधानवित् [ विधानवत् ]
लिह्याच्च तद् यथाशक्ति क्षये शूले च पाकजे ॥

लौह १ पल, त्रिफला ३ पल, पुराण गुड़ ८ पल, गोमूत्र ३२ पल, सर्व्वमेकीकृत्य पाकं कृत्वा, स्निग्ध भाण्डे संस्थाप्य पूर्व्ववत् भक्षयेत् ।

## बृहन्नारिकेलखण्डः

नारिकेलपलान्यष्टौ शर्कराप्रस्थसम्मिता ।
तज्जलं पात्रमेकन्तु सर्पिः पञ्चपलानि च ॥
शुण्ठीचूर्णस्य कुड़वं प्रस्थार्द्धं क्षीरमेव च ।
सर्व्वमेकीकृतं पात्रे शनैर्मृद्वग्निना पचेत् ॥
तुगात्रिकटुकं मुस्तं चातुर्जातं सधान्यकं ।
द्वि कणा जीरकञ्चैव कर्षयुग्म पृथक् पृथक् ॥

५ । लौहस्येति भाग इत्यकोभागः, त्रिफलायास्त्रय इति मिलित्वा ।
—चक्रदत्तटीकायां शिवदासः ।

श्लक्ष्णचूर्णं विनिक्षिप्य स्थापयेद् भाजने मृदः ।
खादेत् प्रतिदिनं शानं यथेष्टाहारवानपि ॥
सर्व्वदोषभवं शूलमेकजं द्वन्द्वजं तथा ।
परिणामभवं शूलमम्लपित्तञ्च नाशयेत् ॥
बलपुष्टिकरं हृद्यं बाजीकरणमुत्तमम् ।
रक्तपित्तहरं श्रेष्ठं छर्द्दिहृद्रोगनाशनम् ॥
[ अग्निसन्दीपनकरं सर्व्वरोगबिनाशनम् ] ।
धन्वन्तरिकृतञ्चैतन्नारिकेलरसायनम् ।

[ अपक्क नारिकेल ] सुपक्क नारिकेल वाटि ‹ पल, घृत ४ पल, खराड १६ पल, शुण्ठीचूर्ण ४ पल, पाकार्थ नारिकेल जल १८ सेर, क्षीर ६ पोवा, अल्पाग्नि दि जाल दिव । सिद्ध हले दिब वंशलोचन, त्रिकटु, त्रिसुगन्धि, मथा, नागकेशर, धनीया, दुइ पिप्पली, मोगजीरा प्रत्येकर ४ तोलाकै, अवतारण करि ३२ रतिकै खाब, शीतल जलानुपानं ।

## शूलसिंहयोगः

विषकर्षं वचाकर्षं त्रिकटुत्रिफला च षट् ।
भार्गीमुस्ताविड़ङ्गानि प्रति कर्षञ्च चूर्णयेत् ॥
गुड़ेन सर्व्वतुल्येन गुड़िकाचनमात्रका ।
शूलसिंहप्रयोगोऽय कफशूलहरो भवेत् ॥

विष २ तोला, वच २ तोला, त्रिकटु ३ तोला, त्रिफला ३ तोला, अकलविर २ तोला, मथा २ तोला, विड़ङ्ग २ तोला, सर्व्वचर्ण समगुड़ मोदकं कृत्वा, एरगड मूल, शुण्ठी, एतद्क्काथ, हिङ्गु, सौवर्च्चला-न्वितमनुपेयम् ।

## शिवामण्डुरम्

शिवाधात्रीपलैकैकं पुरातनगुड़ं समम् ।
गोमूत्र शुद्धमण्डुरं पलत्रयं सुचूर्णितम् ॥
सुलोहाभ्रकयोः कर्षं मर्द्दयेन्मधुसर्पिषा ।
समालोड्य ततः खादेत्तोलकञ्च प्रमाणतः ।
आदिमध्यावसानेषु भोजनस्य क्रमेण तु ।
परिणामं ज्वरं पित्तमम्लपित्तं सुदारुणम् ॥

अन्नद्रवसमुत्थञ्च शूलं सम्वत्सरोत्थितं ।
हृच्छूलं पार्श्वशूलञ्च गुल्मशूलं विशेषतः ।'
शूलमष्टविधं हन्ति भास्करस्तिमिरं यथा ।

हरीतकीचूर्ण १ पल, धात्री चूर्ण १ पल, पुरातन गुड़ २ पल, गोमूत्र शुद्धमण्डुर चूर्ण ३ पल, लौह १ तोला, अभ्र १ तोला, पाकहले, घिउमधु अनुपान दि १ तोलाके खाव ।

**इति वैद्यकसारोद्धारे परिणामशूलाधिकारः ॥**

## ३४ । अथोदावर्त्त-चिकित्सा

अजीर्णेत ज्वरर परा, अग्निमन्द हय, आर अनेक व्यापारेर परा वायु प्रकुपित है उदावर्त्त करे, पेट उखड़ाके वोले । सेक दिव ।

त्रिवृत्कृष्णाहरीतक्यो द्वि चतुः पञ्चभागिकाः ।
गुड़िकागुड़तुल्यास्ता, विड्विबन्धगदापहाः ॥

तेड़िया २ तोला, पिप्पली ४ तोला, हरीतकी ५ तोला, पुराण गुड़ १ पल ३ तोला, सम्मर्द्दय गुटिका कार्य्या, अतः कोष्ठानुरूपं खाद्यं उष्णोदकमनुपेयं ।

### नाराचचूर्णम्

खण्डपलं त्रिवृतासममुपकुल्याकर्षचूर्णितं श्लक्ष्णं ।
प्रागभोजने च समधुविड़ालपदकं लिहेत् प्राज्ञः ॥
एतद् गाढ़पुरिषे पित्ते कफे च विनियोज्यम् ।
सुस्वादुर्नृपयोग्योऽयं चूर्णो नाराचको नाम्ना ॥

खण्ड १ पल, त्रिवृच्चूर्ण १ पल, पिप्पलीचूर्ण २ तोला सर्व्वमेकीकृत्य अतो भक्ष्यं तोलकं, शीतल जलमनुपेयं नारिकेल जलम्वा ।

रसोनं मद्यसंमिश्रं पिवेत् प्रातः प्रकाङ्क्षितः ।
गुल्मोदावर्त्तशूलघ्नं दीपनं बलवर्द्धनं ॥

नहर मद्ये रे वा काञ्जिकेर वाटि खाव १ तोला प्रातः ।

न वेगान् धारयेद्धीरो जातान्मूत्रपुरीषयोः ।
न रेतसो न वातस्य न छर्द्याः क्षवथोर्न च ॥

सोद्गारस्य न जृम्भायास्तथा न क्षुत्पिपासयोः ।
न वाष्पस्य न निद्राया निश्वासस्य श्रमस्य च ॥

विष्ठा, मूत्र, रेतस, वात, छर्द्दि, उद्गार, हामि, क्षुधा, पिपासा, निद्रा, निश्वास, श्रम एइ सकल नचले, वायुये तवध करि थइ । इहाक उदावर्त्त वोले ।

तस्योपायमाह—हिङ्गुमाक्षिकसिन्धूत्थैः पक्वा वर्त्तिं सुवर्त्तितां ।
घृताभ्यक्ता गुदे दद्यादुदावर्त्त-विनाशिनी ॥

मधु ८ तोला, हिङ्ग १६ रति, सैन्धव १६ रति, चरुत पाक करिव । घन हले नमाइ घृत मिहलाइ गुह्यत पश्चिव । इयाके गुदवर्त्ति वोले ।

वर्त्तिस्त्रिकटुसैन्धवसर्षपगृहधूमकुष्ठमदनफलैः ।
मधुनि गुड़े वा पक्वादर्व्वी प्रलेपा चाङ्गुष्ठपरिमाणा ॥
वर्त्तिरिय दृष्टफला शनैः शनैः प्रपिहिता घृताभ्यक्ता ।
आनाहोदावर्त्त-प्रशमनी जठरगुल्मविनाशिनी ॥

त्रिकटुचूर्ण १६ रति, सैन्धव ८ रति, सेवासरियह ८ रति, आलान्धु ८ रति, कोटकरागुटी ८ रति, गुड़ १ पल दि पाक करि वर्त्ति करिव ।

## पञ्चमूलीक्षीरम्

पञ्चमूलीशृतं क्षीरं द्राक्षारसमथापि वा ।
सर्व्वथैवोपयुञ्जीत मूत्रकृच्छ्राश्मरी-विधिं ॥

कुश, कासि, खागरि, विरिणा, इक्षु सवारे मिलि २ तोला, क्षीर ८ तोला, जल ४ पल, शेष क्षीर १ पल राखि खाव । सेइ क्रमे द्राक्षा २ तोला, सिद्ध करि खाव ।

द्विरुत्तराहिङ्गुवचा सकुष्ठा सुवर्च्चिका चेति विड़ञ्च चूर्णम् ।
सुखाम्बुनानाहविसूचिकार्त्ति-हृद्रोगगुल्मोर्द्धसमीरणेषु ॥

हिङ्ग २ तोला, वच ४ तोला, कुर ८ तोला, सर्ज्जिकाक्षार १६ रति, विड़्लोण ३२ रति सवाके मिलित करि, तप्त जलेरे खाव ।

त्रिवृद्धरीतकीश्यामाः स्नुहीक्षीरेण भावयेत् ।
वटिकामूत्रपीतास्ताः श्रेष्ठाश्चानाहभेदिकाः ॥

तेड़ियाधुना, शिलिखा, टुकरीया मिलितचूर्ण २ तोला, सिजुक्षीररे वटि रौद्रत शुकाव, १२ रतिया वरि करि गोमूत्र दि खाव । मलस्तम्भ हले एइ व्यवस्था ।

### शुष्कमूलकाद्यं घृतम्

मूलकं शुष्कमार्द्रञ्च वर्षाभूमूलपञ्चकम् ॥
आरेवतफलञ्चापि पिष्ट्वा तेन पचेद् घृतम् ।
तत् पीतमात्रं [पीयमानमिति क्वचित् पाठः]शमयेदुदावर्त्तमसंशयं ॥

घृत ३ सेर, शुष्कान मूला, शुगठी, पुनर्णवा, वेल, मातघिना, गमारी, पारलि, गणियरी सबारे मिलि ७ पल १ तोला, जल ४८ सेर, शेष १२ सेर, सोणारु गुटी ८ पल दि सिद्ध करिब। १ तोला प्रमाणे उष्णोदकेरे खाव।

उद्गारजे क्रमोपेतं स्नैहिकं धूममाचरेत् ।
छर्द्यांघाते यथादोषं नस्यस्नेहादिभिर्जयेत् ॥
भुक्त्वा प्रच्छर्द्दनं धूमो लङ्घनं रक्तमोक्षणम् ।
रुक्षान्नपानं व्यायामो विरेकश्चात्र शस्यते ॥
शालिः पयोनिरुहाश्च हितं मैथुनमेव च ।
क्षुद्विघाते हितं स्निग्धमुष्णमल्पञ्च भोजनम् ॥
तृष्णाघाते पिबेन्मद्यं [पिबेन्मन्थं]यवागूं वापि शीतलां ।
रसेनाद्यात् सुविश्रान्तः श्रमश्वासातुरोनरः ।
निद्राघाते पिबेत् क्षीरं स्वप्नः संवाहनानि च ॥
स्नेहस्वेदविधिस्तत्र वातालग्रहजे गदे ।
वर्त्तयश्च हिताः कार्य्याः स्निग्धानि भोजनानि च ॥
पानानि वस्तयश्चैव शस्तं वातानुलोमनम् ।
उदावर्त्तक्रियानाहे सामे लङ्घन-पाचनं ॥

**इति वैद्यकसारोद्धारे उदावर्त्त-चिकित्सा समाप्ता ॥**

## ३५। अथ गुल्म-चिकित्सा

लङ्घनं [लघ्वन्नं] दीपनं स्निग्धमुष्णं वातानुलोमनं ।
वृंहणं यद् भवेत् सर्व्वं [यद् भवेद् द्रव्यं] तद्धितं सर्व्वगुल्मिनां ॥

लघ्वन अग्निदीप्तिकारक। सुन्दर वस्तु, जला, वायुवृद्धिकारक, शुष्क द्रव्य, लघु भोजन गुल्मत इसब आचरिब। प्रधान सेतु दिब। ध्वैकर, गुड़, माह, क्षीर, इसब भोजन करि पेट कोमल करिब। वायु प्रकुपित करि, उदरर गाठि माझि मल चलाव। नाड़ि शुद्ध करि, इटा बाटि दुयेरे सेतु दिब, इसब पथ्य।

मातुलुङ्गरसो हिङ्गु-दाड़िमं बिड़सैन्धवं ।
सुरामण्डेन पातव्यं वातगुल्मरुजापहम् ॥

सोलङ्ग १ तोला, हिङ्ग ८ रति, दाड़िम बीज १ तोला, बिड़सैन्धव ३२ रति, मद्येन वा मद्यमण्डेनापि पेय १ पल ।

स्थानावसेकोरक्तस्य बाहुमध्ये शिराव्यधः ।
स्वेदोऽनुलोमनञ्चैव प्रशस्त सर्व्वगुल्मिनां ॥

यि स्थानत गुल्म हइ, सेइ स्थानत तेज कटाव, ताते सेक दिव ।

मातुलुङ्गपलं पिष्टं द्वे पले लुञ्चितस्य च ।

सोलङ्ग रस ८ तोला, तिलवटा १३ तोला, आलोड्य खादेत । लुञ्चित बुलि निस्तुषीकृत, तिलवटा १ पल, गुड़ १ पल, क्षीरेणोष्णेन पिबेत ।

साधयेच्छुद्ध शुष्कस्य रसोनस्य चतुः पलम् ।
क्षीरोदकेऽष्टगुणिते क्षीरशेषञ्च पाययेत् ॥
वातगुल्ममुदावर्त्तं गृध्रसीं विषमज्वरम् ।
हृद्रोगं विद्रधिं शोषं नाशयत्याशु तत् पयः ॥

शोधित, शुकान रहयडु ४ पल, क्षीर ८ पल, जल ८ पल, सिद्ध क्षीर ८ पल रात्रि खाव ।

पक्वे तु व्रणवत् कार्य्यं व्यध-शोधन-रोपणम् ।

गुल्म पके यदि व्रण क्रिया पकनि खाव । विन्धि पका गुचाव । शुकनि दिव ।

नीलिनी त्रिवृता पथ्या दन्तीकम्पिल्लकैः सह ।
शोधनार्थं घृतं देयं सविट्क्षारसनागर ॥

रस, तेड़िया, दन्ती शिलिखा, जरथ, विटलोण, यवक्षार, शुगठी, प्रत्येक चूर्ण ८ रति, घृत ४ तोला, मिश्रयित्वा खादेत । पैत्तिके अनेन रेचयेत ।

रोहिणीकटुकानिम्बं मधुकं त्रिफलात्वचः ।
कर्षांशास्त्रायमाना च पटोलत्रिवृतापले ॥
द्वि पलञ्च मसूराणां साध्यमष्टगुणे जले ।
घृताच्छेषं घृतममं सर्पिषश्च चतुः पलम् ॥
पिबेत् संमूर्च्छितं तेन गुल्मः शाम्यति पैत्तिकः ।
ज्वरस्तृष्णा च शूलञ्च भ्रमोमूर्च्छारतिस्तथा ॥

घृत ३ सेर, कटकीतिता १ तोला, निमछाल १ तोला, मधुयष्टि १ तोला, त्रिफला ३ तोला, नाथकल्प १ तोला, पटोल पत्र १ पल, तेड़िया धुना १ पल, मसूर २ पल, जल ८ गुण, सिद्ध घृतं कर्ष २ तोला पेयं ।

**अथ कफगुल्मे—** घृतं सक्षारकटुकं पातव्यं कफगुल्मिना ।
मन्दोऽग्निर्वेदनामन्दा गुरुस्तिमितकोष्ठता ॥

घृत ४ तोला, यवक्षार ३२ रति, त्रिकटु ३२ रति खादेत ।

पञ्चमूलीशृतं तोयं पुराणं वारुणीरसम् ।
कफगुल्मी पिबेत् काले जीर्णं माध्वीकमेव वा ॥

स्वल्प पञ्चमूली मिलि २ तोला, जल ४ पल, शेष १ पल, पुराण मद्येन पेयं, पुराण मधुना वा ।

व्यामिश्रदोषे व्यामिश्र एष एव क्रियाक्रमः ।
सन्निपातोद्भवे गुल्मे त्रिदोषघ्नो विधिर्हितः ॥

दुइ दोषजक द्वन्द्वज गुल्म बोलै । त्रिदोषजे सान्निपातिक क्रिया करिब ।

## वचादिचूर्णम्

**अथ त्रिदोषे—** वचाहरीतकीहिङ्गु सैन्धवं साम्लवेतसं ।
यवक्षारं यमानीञ्च पिबेदुष्णेन वारिणा ।
एतद्धि गुल्मनिचयं सशूलं सपरिग्रहं ।
भिनत्ति सप्तरात्रेण वह्नेर्वृद्धिं करोति च ॥

वच १ तोला, हरीतकी १ तोला, हिङ्गु १ तोला, सैन्धव १ तोला, थैकर १ तोला, यवक्षार १ तोला, यमानी १ तोला, एषां चूर्णानि मिश्रयित्वा तप्तजलेन सद्या ।

## यमान्यादिचूर्णम्

यमानीहिङ्गुसिन्धूत्थ क्षारसौवर्चलाभयाः ।
सुरामण्डेन पातव्या गुल्मशूलनिसूदनाः ॥

यनी १ तोला, हिङ्गु १ तोला, सैन्धव १ तोला, यवक्षार १ तोला, सौवर्च्चल १ तोला, शिखिवा १ तोला मिलित्वा चूर्णं मद्येन अन्यदुष्णोदकेन वा पेयं ।

## हिङ्ग्वादिचूर्णम्

हिङ्गु पुष्करमूलानि तुम्बूरूणिहरीतकी ।
श्यामाविडं सैन्धवञ्च यवक्षारं महौषधं ॥

यवक्राथोदकेनैव घृतभृष्टन्तु पाययेत् ।
तेनास्य भिद्यते गुल्मः सशूलः सपरिग्रहः ॥

हिङ्ग १ तोला, पञ्चमूल १ तोला, धनीया १ तोला, हरीतकी १ तोला, दुकरौया १ तोला, विट्लोण १ तोला, सैन्धव १ तोला, यवक्षार १ तोला, आदा १ तोला यवक्राथेन मिश्रोकृत्य किञ्चिद् घृतेन भर्ज्जित्वा उष्णोदकेन पेयं ।

## काङ्कायनगुड़िका

शटीं पुष्करमूलञ्च दन्ती चित्रकमाढ़की ।
शृङ्गवेरं वचाञ्चैव पलिकानि समाहरेत् ॥
त्रिवृतायाः पलञ्चैव कुर्य्यात् त्रीणि च हिङ्गुलः ।
यवक्षार पले द्वे च द्वे पले चाम्लवेतसात् ॥
यमान्यजाजीमरिचं धान्यकञ्चेति कार्षिकम् ।
उपकुञ्चयजमोदाभ्यां तथा चाष्टमिकामपि ॥
मातुलुङ्गरसेनैव गुड़िकाः [गुटिका] कारयेद् भिषक् ।
तासामेका पिवेद् द्वे वा तिस्रो वापि सुखाम्बुना ।
अम्लैश्च मद्यैयूषैश्च घृतेन पयसाऽथवा ।
एषा काङ्कायनेनोक्ता गुड़िका गुल्मनाशिनी ॥
अर्शोहृद्रोगशमनी क्रिमीणाञ्च विनाशिनी ।
गोमूत्रयुक्ताशमयेत् कफगुल्मं चिरोत्थितम् ।
क्षीरेण पित्तगुल्मञ्च मद्यैरम्लैश्च वातिकं ।
त्रिफलारसमूत्रैश्च नियच्छेत् सान्निपातिकं ।
रक्तगुल्मे च नारीणामुष्ट्रीक्षीरेण पाययेत् ॥

केतुरी, पञ्चमूल, सोन्दर पखाल, चित्रक, मिरिमाह, आदा, वच, प्रत्येकर १ पल, त्रिवृत् १ पल, हिङ्ग ३ पल, यवक्षार २ पल, थैकरा २ पल, यमानी, मोगजीरा, मरिच, धान्याक कालजीरा, वेत्रयमानी, प्रति ४ तोला, सर्व्वचूर्णमेकीकृत्य मातलुङ्गरसेन पिष्ट्वा, कोल प्रमाणा वटिका कार्य्या । अतः एकां, द्वे, तिस्रो वा, उक्तानुपानैः खादेत् ।

## व्योषाद्यघृतं

व्योषाभया-रोहिणी च त्रिवृज्जेपालवीजकं ।
दन्तीपलञ्च प्रत्येकं कल्कं दत्वा घृतं पचेत् ॥

धात्रीफलरसेनैव ज्ञात्वा दोषबलाबलम् ।
अनुपानं प्रकर्त्तव्यं साध्यासाध्यं निहन्त्यलम् ॥
गुल्मप्लीहोदराध्मानमुदावर्त्तं सुदारुणम् ।
दधिभक्तं सदा पथ्यं स्निग्धमल्पञ्च भोजनम् ॥
इदं व्योषादिकं नाम भैरवी-परिकीर्त्तितम् ॥
अनेन जन्तवः सर्व्वे व्याधिमुक्ताश्चिरायुषः ॥

घृत ३ सेर, धात्रीरस १२ सेर, कल्क, त्रिकटु, शिलिखा कटकीतिता, तेड़िया, कनिविहर गुटी, दन्ती मूल एषां प्रति १ पल सिद्धं ।

## क्षीरषट्पलकं घृतम्

पिप्पली-पिप्पलीमूल-चव्यचित्रकनागरैः ।
पलिकैः सयवक्षारैः सर्पिः प्रस्थं विपाचयेत् ।
क्षीरप्रस्थेन तत् सर्पिर्हन्ति गुल्मं कफात्मकम् ॥
ग्रहणी-पाण्डुरोगघ्न प्लीहकासज्वरापहम् ।

घृत ३ सेर, गव्य क्षीर ३ सेर, कल्क, पिप्पली १ पल, पिप्पलीमूल १ पल, चव्य १ पल, चित्रक १ पल, आदा १ पल, यवक्षार सिद्धं घृतम् ।

## दन्तीहरीतकी ( गुड़ )

त्रिदोषे—जलद्रोणे विपक्तव्या विंशतिः पञ्च चाभयाः ।
दन्त्याः पलानि तावन्ति चित्रकस्य तथैव च ॥
तेनाष्टभागशेषेण पचेद्दन्तीसमं गुड़ं ।
ताश्चाभयास्त्रिवृच्चूर्णात् तैलञ्चापि चतुः पलं ॥
पलमेकं कणाशुण्ठ्योः सिद्धे लेहे च शीतले ।
क्षौद्र तैलसमं दत्वा चातुर्ज्जातपलन्तथा ॥
ततो लेह पलं लीढ्वा जग्ध्वा चैकां हरीतकी ।
सुखं विरिच्यते स्निग्धो दोषप्रशमनाय च ॥
प्लीहश्वयथुगुल्मार्शो हृत्पाण्डुग्रहणीगदाः ।
शाम्यन्त्युत्क्लेश-विषमज्वरकुष्ठ्यान्यरोचकाः ॥

हरीतकी २५ टा, दन्तीमूल २५ पल, जल २४ सेर, शेष ६ सेर, तिलतैल ४ पल दि सेइ हरीतकी भाजिब, पुराण गुड़ २५ पल दि पाक करिव । सिद्ध हले प्रक्षेप, त्रिवृताचूर्ण ४ पल, पिप्पलीचूर्ण ४ तोला,

शुण्ठीचूर्ण ४ तोला, एलाचि १ तोला, दालचिनि १ तोला, तेजपत्र १ तोला, शीतल हले मधु ४ पल दि, हरीतकी १ टा सहिते १ तोला दि खाव। तप्तजल अनुपान।

## [महा]नाराचरसः६

ताम्रं गन्धं समं सूतं जैपालत्रिफलासमं।
कटुकं पेषयेत् क्षारैर्निष्कं गुल्महरं पिबेत्॥
उष्णोदकं पिबेच्चानु नाराचोऽयं महारसः॥

ताम्ररस प्रति १ तोला, गन्धक ४ तोला, शोधित कलिविह २ तोला, त्रिफला २ तोला, त्रिकटु चूर्ण २ तोला, यवक्षार २ तोला, कज्जली पूर्व्वकं सम्मिश्रय गुञ्जाचतुष्टयं पर्णेन भक्षयेत्। उष्णोदकमनुपिबेत्।

स्त्रीणां रक्तगुल्मे—रुधिरेऽतिप्रवृत्ते तु रक्तपित्तहराक्रिया अधोगरक्तपित्तोक्ता॥

## भल्लातकघृतम्

भल्लातकात् कल्ककषाय पक्वं सर्पिः पिबेत् शर्करया विमिश्रम्।
तद्रक्तगुल्मं विनिहन्ति पीतं बलासगुल्मं मधुना समेतं॥

घृत ३ सेर, क्वाथार्थं भल्ला ३ सेर, पानी १२ सेर, शेष ३ सेर, कल्क भल्ला ६४ तोला, चिनि ६४ तोला, सिद्धं घृत १ तोला, मधु दत्वा खादेत्।

## लवङ्गादिचूर्णम्

लवङ्गदन्तीत्रिवृतायमानीशुण्ठीवचाधान्यकचित्रकानि।
फलत्रिकं मागधिका-कटुत्रिद्राक्षाचवी-गोक्षुरयावशूकं॥
एलाजमोदा-कुटजस्य वीजं विधाय चूर्णानि समान्यमीषां।
खादेत्ततः पाणितलं हिताशीकोष्णं जलञ्चानुपिबेत् प्रयत्नात्॥
निहन्ति गुल्मं सरुजं सदाहमर्शांसिशोथांश्च तथामवातम्।
सर्व्वोदराण्येव चिरोत्थितानि चूर्णं लवङ्गादिकमाशु हन्ति॥

लवङ्ग १, दन्ती, तेड़िया, यमी, आदा, वच, धनीया, चिता, त्रिफला, पिप्पली, त्रिकटु, गमारीगुटी, चविक, गोक्षुर, यवक्षार, एलाचि, आजनि, कुटजबीज एषां सममागमेकीकृत्य १ तोला, उष्ण जलेन खादेत्॥

६। नाराचरसे सर्व्वं द्रव्यं समपरिमाणमिति रसेन्द्रसारः।

## पञ्चाननो रसः

पारदं शिखितुण्डञ्च गन्धं जैपालपिप्पली ।
आरग्वधफलान्मज्जा वज्रीक्षीरेण भावयेत् ॥
धात्रीरसयुतं खादेद् रक्तगुल्मप्रशान्तये ।
चिञ्चाफलरसञ्चानु पथ्यं दध्योदनं हितम् ॥

शोधित रस २ तोला, शोधित तुतिया २ तोला, शोधित गन्धक २ तोला, शोधित कनिविह २ तोला, पिप्पली २ तोला, सोणारु गुटीर मज्जा २ तोला, एषां प्रति चूर्ण २ तोला, कज्जली पूर्व्वकं सर्व्वमेकीकृत्य सिजु क्षीरेण द्रावयित्वा मर्द्दयेत । शुष्कयित्वा रक्ति त्रय प्रमाणा वटिका कार्य्या । आमलकी रस किम्वा तेतेली फलरसमनुपिवेत् ।

## गुल्मकालानलो रसः

पारदं गन्धकं ताम्रं तालकं टङ्गनं समम् ।
तोलद्वयकृतं भागं यवक्षारञ्च तत् समम् ॥
मुस्तकं मरिचं शुण्ठीपिप्पलीगजपिप्पली ।
हरीतकीवचाकुष्ठं तोलैकं चूर्णयेत् सुधीः ॥
सर्व्वमेकीकृतं पात्रे भावना क्रियते ततः ।
पपटं हस्तिशुण्डी च अपामार्ग-पटोलयोः ॥
तत् पुनश्चूर्णयेत् पश्चात् सव्वगुल्मनिवारणम् ।
गुञ्जा चतुष्टयं खादेद्धरीतक्यनुपानतः ॥
वातिकं पैत्तिकं गुल्मं श्लैष्मिकञ्च त्रिदोषजं ।
द्वन्द्वजञ्च निहन्त्याशु वातगुल्मं विशेषतः ॥७

रस २ तोला, गन्धक २ तोला, ताम्र २ तोला, शोधित हरिताल २ तोला, शुवगा २ तोला, यवक्षार २ तोला, मथा २ तोला, मरिच २ तोला, आदा १ तोला, पिप्पली १ तोला, गजपिप्पली १ तोला, शिलिखा १ तोला, बच १ तोला, कुर १ तोला. सर्व्वचूर्णमेकीकृत्य भावयेत् । क्षेत्रपर्पटी ७ दिन हातीशुयडीया ७ दिन, वनशठ ७ दिन, पटोल ७ दिन भावयित्वा चूर्णयेत् । शिलिपा रसंग ४ रति खाव ।

## इति वैद्यकसारोद्धारे गुल्माधिकारः ॥

---

७ । वल्लूरं ( शुष्क मांसं ) मूलकं मत्स्यान् शुष्कशाकानि वैदलम् ।
नखादेच्चालुकं गुल्मी मधुराणि फलानि च ॥ —इति चक्रदत्ते अधिकः पाठः ।

अष्टमः परिच्छेदः

# हृद्रोगचिकित्सोपदेशः

## ३६ । अथ हृद्रोग-चिकित्सा

वातोपसृष्टे हृदये वामयेत् स्निग्धमातुरम्१ ।

वातिकहृद्रोगत वान्ति कराव ।

द्वि पञ्चमूलीक्वाथेन सस्नेहलवणेन च ।

दशमूल [ प्रति ] मिलित २ तोला, पानी ४ सेर, शेष १ सेर, तिल तैल घृत सैन्धव, मदनगुटो ( मदनफल ) मिलित १ तोला दि अल्प उष्ण करि पान करि वान्ति करिब ।

### पिप्पल्याद्यं चूर्णम्

पिप्पल्येलावचाहिङ्गु-यवक्षारोऽथ सैन्धवम् ।
सोवर्च्चलमथो शुण्ठी-अजमोदा च चूर्णितम् ॥
फलधान्याम्ल-कौलत्थ दधिमद्यासवादिभिः ।
पाययेत् शुद्धदेहञ्च स्नेहेनान्यतमेन वा ॥

पिप्पली, बच, एलाचि, हिङ्ग, यवक्षार, सैन्धव, सौवर्च्चल, आदा, यनी प्रत्येकर १ तोलाकै लव, काञ्जि, कुलत्थ क्काथ वा दधि यथालाभ अनुपान तिलतैल वा ।

नागरम्वा पिवेदुष्णं कषायञ्चाग्निवर्द्धनं ।
कासश्वासानिलहरं शूलहृद्रोगनाशनम् ॥

शुण्ठी २ तोला क्काथ करि उष्णे खाव ।

श्रीपर्णीमधुक-क्षौद्र-सितागुड-जलैर्व्वमेत् ।

गमारीगुटो १ तोला, यष्टिमधु १ तोला, क्काथकरि चिनि, मधु, गुड़, मदन १ तोला, आलोड्य पित्वा वमेत् ।

पित्तोपसृष्टे हृदये सेवेत मधुरैः शृतम् ।
घृतं कषायांश्चोद्दिष्टान् पित्तज्वरविनाशनान् ॥

घृत औषध क्काथ इसव खाव ।

१ । अत्रानुक्तमपि मदन फलादि चूर्णं वोध्यं वमनयोग्यत्वात् । —चक्रदत्तटीकायां शिवदासः ।

शीताः प्रदेहाः परिसेचनानि तथा विरेकोहृदि-पित्तदुष्टे ।
द्राक्षासिता-क्षौद्रपरूषकैः स्यात् सर्व्वञ्च पित्तापहमन्नपानम् ॥

शीतोपचार-बिचनिवात, काञ्जिकादि घसि शरीर चेचा करिब पैत्तिक हृद्रोगत। द्राक्षा तदभावे गमारीगुटी, परूषकफल कहार स्वरस (क्काथ) मधु चिनि मिश्र खादेत ।

पिष्ट्वा पिबेद्वापि सिताजलेन यष्ट्याह्वयं तिक्तक-रोहिणीञ्च ।
यष्टिमधु, कटकीतिता दुयो जलेन पिष्ट्वा चिनि दत्वा पिबेत। पैत्तिकहृद्रोगत रेचन करि खुवाब ।

अर्ज्जुनस्य त्वचासिद्धं क्षीरं योज्यंहृद् ।
सितया पञ्चमूल्या वा बलया मधुकेन वा ॥

अर्ज्जुन छाल २ तोला, गोदुग्ध ११ तोला, जल ३ पोवा दुग्धावशेषः काथ्यः ।
बृहत् पञ्चमूल काथ चिनि दि खाव एवं वरियाल मूल यष्टिमधु मिलि २ तोला, काथ चिनि दि खाव। अयं वातपित्तयोगः ।

कृष्णाशुण्ठीवचारास्नाशठीपथ्याः सपौष्कराः ।
चूर्णिता वा शृता मूत्रे पातव्या कफहृद्गदे ॥

पिप्पली, आदा, वच, कपैठारि, केनगी, शिलिखा कर, एषां समभागे चूर्णानि गोमूत्रेण पिबेत । एषा मिलि २ तोला काथं मूत्रेण पिबेत् ।

त्रिदोषे— चूर्णं पुष्करजं लिह्यान्माक्षिकेन समायुतम् ।
हृच्छूलं श्वासकासघ्नं क्षयहिक्कानिवारणम् ॥

कुड चूर्ण मधुना लेह्यम ।

## हिङ्ग्वादिचूर्णम्

हिंगुग्रगन्धाविड़विश्वकृष्णा-कुष्ठाभयाचित्रकयावशूकम् ।
पिबेच्च सौवर्च्चलपुष्कराढ्यं यवाम्भसाशूलहृदामयघ्नं ॥

हिङ्गु, वच, विट्लोण, आदा, पिप्पली, कर, शिलिखा, चित्रक यवक्षार एषां समभाग चूर्ण, यवधान्य २ तोला काथयित्वा जलेन गोलयित्वा पिबेत् ।

क्रिमिहृद्रोगिणां स्निग्धं भोजयेत् पिशितौदनं ।
दध्ना च पललोपेतं त्र्यहं पश्चाद्विरेचयेत् ॥

क्रिमि हृद्रोगत, सुन्दर चाउलर अन्न, सुन्दर मांसर व्यञ्जनेरे खाव हित ।
कृष्णतिल चूर्ण २ तोला, दधि १ पल मिश्र करि खाव ३ दिन तेवे रेचन हव ।

विड़ङ्गगाढं धान्याम्लं पाययेद्धितमूत्तमम् ।

विड़ङ्ग चूर्ण २ तोला, काञ्जि १ पल दि गाव ।

क्रिमिजे च पिवेन्मूत्रं विड़ङ्गामयसंयुतम् ।
हृदिस्थिताः पतन्त्येवमधस्तात् क्रिमयो नृणाम्

गोमूत्र १ पल, विड़ङ्ग, कूर मिलि १ तोला आलोड्य पेयं ।

## अर्ज्जुनघृतम्

अर्ज्जुनक्वाथकल्काभ्यां घृतप्रस्थं विपाचयेत् ।
सिद्धमात्रा पिवेद्वापि सर्व्वहृद्रोगशान्तये ॥

घृत ३ सेर, क्वाथार्थं अर्ज्जुन छाल १० पल, जल ६४ सेर, शेष १६ सेर, कल्क १० तोला सिद्ध, अतो मद्दयं ४ तोला, तप्त जलमनुपेयं ।

## हृदयार्णवोरसः

शुद्धसूत समं गन्ध मृतताम्रं तयोः समम् ।
मर्द्दयेत् त्रिफला[द्रावैः] क्वाथैः काकमाचीद्रवैर्द्दिनम् ।
चनमात्रां वटी खादेद् रसोऽयं हृदयार्णवः ॥

शोधित रस २ तोला, गन्धक २ तोला, मृत ताम्र ४ तोला, कज्जली-पूर्व्वकर्मको कृत्य, त्रिफला क्वाथ १ दिन, काकमाचीरसेन मर्द्दित्वा गशोष्य, कलाय प्रमाणा वटी कर्त्तव्या, अतः एका वा त्रिफला काकमाचो क्वाथमनुपिवेत् ।

इति वैद्यकसारोद्धारे हृद्रोगाधिकारः ॥

नवमः परिच्छेदः

# मूत्ररोगचिकित्सोपदेशः

## ३७। मूत्रकृच्छ्र-चिकित्सा

अश्मरीशान्तिविधयो यदुक्ताः प्रसमीक्ष्य तान्।
यथा दोषं प्रयुञ्जीत स्नेहादिकर्मापि क्रमम्॥

अश्मरी व्याधि शान्ति क्रियासकल मूत्रकृच्छ्रेत आचरिव। घृत, तैल, सेक, मास रस इसकल आचरिव।

अमृतानागरं धात्रीवाजिगन्धात्रिकण्टकान्।
प्रपिबेद् वातरोगार्त्तः सशूलीमूत्रकृच्छ्रवान्॥

गुडूची, शुण्ठी, आमलकी, अश्वगन्धा, गोक्षुर, एषां मिलि २ तोला, जल ८ पल, शेष १ पल।

### तृणपञ्चकम्

कुशः काशः शरो दर्भ इक्षुश्चेति तृणोद्भवम्।
पित्तकृच्छ्रहरं पञ्चमूलं वस्तिविशोधनम्॥
एतत् सिद्धं पयः पीतं मेढ्रगं हन्ति शोणितम्॥

कुश, कासि, खागरि, विरिणा, इक्षु एषां मिलि २ तोला, जल ८ पल शेष १ पल। अथवा एषां मिलि २ तोला, क्षीर ४ पल, जल ३ पोवा दुग्धावशेषः। प्रक्षेप चिनि २ तोला पेयं।

शतावरीकाशकुशश्वदंष्ट्रा-विदारिशालीक्षुकसेरुकाणाम्।
क्वाथं सुसिद्धं मधुशर्करायुक्तं पिबन् जयेत् पैत्तिकमूत्रकृच्छ्रम्॥

शतमूल, कासि, कुश, गोक्षुर, पतानि (पीठानी), भुंइकोमरा, विरिणा, कुहियार, केसेरु एषां मिलि २ तोला, क्वाथ करि मधु चिनि दि पेयं।

गुडेनामलकं खादेत् [ वृष्यं ] श्रमघ्नं तर्पणं प्रियम्।
पित्तासृग्दाहशूलघ्नं मूत्रकृच्छ्रविनाशनम्॥

आमलकी रस १ पल, पुराण गुड़ मिश्रयित्वा खादेत्। शीतल जलमनुपेयम्।

एर्वारुबीजं मधुकञ्च दार्व्वीं पैत्ते पिबेत् तण्डुलधावनेन।

कुष्माण्ड बीज, यष्टिमधु एषां मिलि १ तोला विधिना तण्डुलोदक १ पल मिलित्वा पेयं।

दार्व्वीं तथैवामलकीरसेन समाक्षिकां पैत्तिकमूत्रकृच्छ्रे ।

एवं दार्व्वी, आमलकी रस १ तोला, तण्डुलाम्बुपानेन पेयं । तप्तक्षीर, मरिच, यवान्न, तक्र, तिक्त द्रव्य खाव । वान्ति करिव । तैलमर्षण करिव । दूषित मूत्र कृच्छ्रत इसब आचरिव ।

मूत्रेण सुरया वापि कदलीस्वरसेन वा ।
कफकृच्छ्रविनाशाय श्लक्ष्णं पिष्ट्वा त्रुटिं पिवेत् ॥

गोमूत्र १ पल, एलाचि चूर्ण १ तोला मिलित्वा पेयं । एवं कदली स्वरस १ पल, सुरा, तदभावे काञ्जिकेन पेयं ।

भोजनं क्रौञ्चमांसेन मूत्रार्थे च प्रशस्यते ।
मूत्रकृच्छ्राणि शमयेदश्मरीञ्च भिनत्त्यपि ॥

क्रौञ्चवकमांस भोजन करिव ।

त्रिदोषे— सर्व्वं त्रिदोषप्रभवे तु वायोः स्थानानुपूर्व्व्या प्रशमीक्ष्य कार्य्यं ।
त्रिभ्योऽधिके प्रागवमनं कफे स्यात् पित्ते विरेकः पवने तु वस्तिः ।

तिनि दोष प्रवले पूर्व्वे वान्ति कराय कफ शान्त कराव । पित्तदोष प्रधान हले रेचन कराव । वात दोषत तैल क्रिया करिव ।

वृहतीधावनीपाठा-यष्टिमधुकलिङ्गकाः ।
पाचनीयो वृहत्यादिः कृच्छ्रदोषत्रयापहः ॥

वृहती, पिठानी, पाठा, यष्टिमधु, कुटज वीज एषां मिलित्वा २ तोला, क्वाथं पेयं ।

क्वाथं गोक्षुरीवीजस्य यवक्षारयुतं पिवेत् ।
मूत्रकृच्छ्रं शकृज्जञ्च पीतः शीघ्रं विनाशयेत् ॥

गोक्षुर क्वाथे यवक्षारयुतं पेयं । वीर्य्य बन्ध हले शिलाजतुचूर्ण मधुएरे खाव । सुन्दरी सम्भोग करिव ।

एलाहिङ्गुयुतं क्षीरं सर्पिर्मिश्रं पिवेन्नरः ।
मूत्रदोषविशुद्ध्यर्थं शुक्रदोषहरञ्च तत् ॥

दुग्ध १ पल, एलाचि चूर्ण ३२ रति, हिङ्गु २ रति पेयं । पित्तत यि क्रिया रक्तपित्तत सेइ क्रिया ।

## त्रिकण्टकादिः

त्रिकण्टकारग्वधदर्भकाश-दुरालभा-पर्व्वतभेदपथ्याः ।
निघ्नन्ति पीता मधुनाश्मरीञ्च संप्राप्तमृत्योरपि मूत्रकृच्छ्रम् ॥

गोक्षुर, सोणारुगुटी, कुश, कहुवा, कुशलता, पाषाणभेद, शिलिखा एषां मिलि २ तोला क्वाथ करि, मधु दि खाव ।

कषायोऽतिबलामूल-साधितः सर्व्वकृच्छ्रजित् ।

वरबरियालर काथ खाव ।

एलाश्मभेदक-शिलाजतुपिप्पलीनां चूर्णानि तण्डुलजलैर्लुनितानि पीत्वा ।
यद्वा गुड़ेन सहितान्यवलिह्य सम्यक् आसन्नमृत्युरपि जीवति मूत्रकृच्छ्री ॥

एलाचि, कुलत्थ, शिलाजत, पिप्पली, एषां चर्णानि गुड़ेन मिश्रयित्वा पेयं। यद्वा तण्डुल जलेन पेयं ।

अयोरजः श्लक्ष्णपिष्टं मधुना सह योजितम् ।
मूत्रकृच्छ्रं निहन्त्याशु त्रिभिर्लेहैर्न संशयः ॥

जारित लौह ५ रति मधुना लेह्यः ।

सितातुल्यो यवक्षारः सर्व्वकृच्छ्रविनाशनः ।

चिनि ३२ रति, यवक्षार ३२ रति पिष्ट्वा खादेत ।

## त्रिकण्टकाद्यं घृतम्

त्रिकण्टकैरण्ड कुशाद्यभीरु-कर्कारुकेक्षुरसेन सिद्धम्[१] ।
सर्पिर्गुडार्द्धांशयुत प्रपेयं कृच्छ्राश्मरीमूत्रविघातहेतोः ॥

घृत ३ सेर, गोक्षुर १६ पल, जल १२ सेर, शेष ३ सेर, एरण्डमूल १६ पल, जल १२ सेर, शेष ३ सेर एवं पञ्चतृण मिलित १६ पल, जल १२ सेर, शेष ३ सेर, शतमूलरस ३ सेर, कुष्माण्डरस ३ सेर, इक्षुरस ३ सेर, पुराण गुड़ १६ पल सिद्धमतः पेयं । पञ्चतृणकाथानपानं तोलकमानं ।

## मूत्रकृच्छ्रान्तको रसः

शतावरीरसैः पिष्टं भस्मयुतं सताम्रकं[२] ।
शिखितुण्डञ्च [शिखितुत्थञ्च] तुल्यांशं दिनैकं मर्द्दयेद् दृढम् ॥
तद्गोलं सार्षपतैले पाच्यं यामस्त्त चूर्णयेत् ।
भक्षणान्नात्र सन्देहो मूत्रकृच्छ्रं निहन्त्यलं ॥
मूत्रकृच्छ्रान्तकः क्षौद्रैर्लिहेद् गुञ्जाचतुष्टयं ।
तुलसीतिलपिण्याकबिल्वमूलतुषाम्बुना ।
कर्षैकं वानुपानेन सुरयाथवा सुवर्च्चलैः ॥

१। त्रिकण्टकेत्यादौ। कुशादि तृण, पञ्चमूलम्, अभीरुः, शतावरी, कर्कारुकः कुष्माण्डभेदः, कुष्माण्डाकृतिः, उत्कले प्रसिद्धः। —चक्रदत्तटीकायां शिवदासः।

२। शतावरी रसैः पिष्टा, मृतसूतञ्च तालकमिति। --रसेन्द्रसारसंग्रहे पाठः।

शोधित मारित रस २ तोला, शोधित तुतीया २ तोला, मृत ताम्र २ तोला, शतमूलीरसैर्मर्द्दित्वा, कदलीपत्रे पोटलं वद्धा सर्षपे तैले यामं पचेत्। तत उद्धृत्य शुष्कं, चूर्णीकृत्य गुञ्जा चतुष्टयमाना वटिका कार्य्या। अतो मद्ध्यं तुलसीपत्र रसेन वा, पर्णपत्र रसेन वा, काञ्जिकमनुपिवेत्।

## वृहत् पाषाणभिन्नोरसः

त्रिदोषजे रक्तमूत्रे—सुवर्णलोहमभ्रञ्च रसगन्धं शिलाजतु।
यष्टिमधुयवक्षारं सैन्धवं तुत्थमेव च॥
त्रिफलाशतमूली च वाजिगन्धं त्रिकण्टकं।
कुशः काशः शरोदर्भ इक्षुश्च तृणपञ्चकं॥
विदारिकण्डकञ्चैव समभागं विचूर्णयेत्।
चातुर्जात पलञ्चैकं पलैकं वंशरेचनं॥
सर्व्वचूर्णं समादाय भावयेद् धात्रीजैः रसैः।
कुमारिकारसैस्तद्वत् शतमूलीरसैस्तथा॥
पञ्चरक्तिप्रमाणेन वटिका कारयेद् वुधः।
भक्षयेद् वटिका प्रातः पञ्चतृणरसेन वै॥
अश्मरी मूत्रकृच्छ्राणि मूत्राघातमसृग्दरं।
वातिक पैतिकञ्चैव श्लैष्मिकं सान्निपातिक॥
प्रमेहान विंशतिञ्चैव साध्यासाध्यन्नसंशयः।
ये च मृत्युप्रदाश्चापि तान सर्व्वान नाशयत्यपि॥

## कुशावलेहः

कुशः काशो वीरणश्च कृष्णेक्षुः खसुरस्तथा।
एषां दशपलान् भागान जलद्रोणे विपाचयेत्
अष्टभागावशेषन्तु कषायमवतारयेत्।
खण्डप्रस्थं समादाय लेहवत् साधु साधयेत्॥
अवतार्य्य ततः पश्चाच्चूर्णानीमानि दापयेत्।
मधुकं कर्कटीवीज कर्कारुं त्रपुषं तथा॥
शुभामलकपत्राणि त्वगेलानागकेशरम्।
वरुणामृतगुन्द्राणां प्रत्येकमक्षसम्मितम्॥

टेङ्गा दालिम गुटी २ तोला, मथा १ तोला, पलाचिचूर्ण ८ रति, शुण्ठीचूर्ण ८ रति, सुरा १ पल, काञ्जि १ पलेरे खाव, सैन्धव दि।

मूत्रे विवद्धे कर्पूरचूर्णं लिङ्गे प्रवेशयेत्।

मूत्र्वार कोमल मुखेर काफुर धूलि करि लिङ्गत, योनिमार्गत सुमाइ दिब।

शृतशीतपयोऽन्नाशी चन्दनं तण्डुलाम्बुना।
पिवेत् सशर्करं श्रेष्ठमुष्णवाते सशोणिते॥

जातिचन्दन ३० रति, तण्डुलोदक १ पल, चिनि ३२ रति दि खाव। अथवा पगा दुग्ध चेचा करि सेयेरे खाव।

शीतावगाहवस्तिश्च उष्णवातनिवारणः।

तलपेट पर्य्यन्त जलत नामि थाकिव।

कुष्माण्डकरसः पीतः शर्कराक्षारसंयुतः।

कोमोरा रस १ पल, यवक्षार १६ रति, चेनि ३० रति दि खाव।

शिलाजतु पिवेत् क्वाथे गणे वीरतरादिके।
वासकस्य कषाये वा मूत्राघाते सुदारुणे॥

वासकमूल २ तोला, क्काथ रस १ पल, शोधित शिलाजतु ३० रति दि खाव।

## वीरतर्व्वादिमाह[४]

वीरतरु[५]सहचरौ दर्भो वृक्षादनी नलः।
गुन्द्राः[६] काशकुशावश्मभेदिमोरटटुण्टुकाः॥

---

४। देवेन्द्र सेन संगृहीत आयुर्व्वेद संग्रहे—सुश्रुतोक्त वीरतर्व्वादिगणः। वीरतरु सहचरद्वय दर्भ-वृक्षादनी गुन्द्रानल, कुशकाशाश्मभेदकाग्निमन्थ मोरटा-वसुक-वसिर-मल्लुक कुरुण्टकेन्दीवर-कपोतवङ्का-श्वदंष्ट्रा चेति।— "वीरतर्व्वादिरित्येष गणोवातविकारनुत्।
अश्मरीशर्करामूत्रकृच्छ्राघातरुजापहः॥

५। वीरतरु (धव वा वेलन्तरवृक्ष)—नीलझिण्टी, रक्तझिण्टी, उलुमूल, परगाछा गुन्द्रा (शर), नलकुश, काश, पाषाणभेदी, गणियरी, इक्षुमूल, आकन्द, वकपुष्प, शोना, पीतझिण्टी, नीलोत्पल कुकुरा आरु गोक्षुर एइ सकलक वीरतर्व्वादिगण वोले। इहाक व्यवहार करिले वायुविकार, अश्मरी, शर्करामूत्रकृच्छ्र आरु मूत्राघात निवारित हय।

वीरतर इति चक्रदत्ते पाठः। वीरतरः शरः इति शिवदासः।

६। गुन्द्रा गुलश्च इति चक्रदत्तटीकायां शिवदासः।

कुरुण्टिकाथवशिरोवसुकश्चाग्निमन्थकः ।
इन्दीवरीश्वदंष्ट्रा च तथा कपोतवक्त्रकः ॥
वीरतर्व्वादिरित्येष गणोवातविकारनुत् ।
शर्कराश्मरीहा मूत्रकृच्छ्राघातरुजापहः ॥

विरिणामूल, झिन्टिमूल, कुशमूल, रामलामन्न, नलमूल, काशिमूल, उलुमूल, कुलत्थ, इक्षुमूल, पीत झिगटीमूल, गोक्षुर, मातघिना, नील झिगटीमूल, भेटमूल, कपौठारि एषां मिलि २ तोला, जल ४ पल, शेष १ पल, शोधित शिलाजतु ३२ रति दत्वा पेयं ।

## शिलाजतुवटकः

अथवा एषामष्टादशानां मिलित १८ तोला, शिलाजतुशोधित १८ तोला, जलेन पिष्ट्वा वटिका कार्य्या ! पञ्चतृणक्वाथोऽनुपेयः ।

इति वैद्यकसारोद्धारे मूत्राघाताधिकारः ॥

## ३६ । अथाश्मरी–चिकित्सा

अश्मरी दारुणो व्याधिरन्तक प्रतीमो मतः ।
औषधैस्तरुणः साध्यः प्रवृद्धः छेदमर्हति ॥

अश्मरीव्याधि यमतुल्य दुःसाध्यः । औषधादि क्रिया करित शुत सिद्धि हय । वृद्धर सिद्धि हठात नहय । पूर्व घृत, तैल कारणे व्याधि हय, अतएव क्षारपिष्टक गुड़ काथ, क्षीर इसव भोजन करि वात शान्ति करिव ।

वरुणस्य त्वचं श्रेष्ठा शुण्ठीगोक्षुरसयुतां ।
यवक्षारगुड़ं दत्वा क्वाथयित्वा पिवेद्धिताम् ॥
अश्मरी वातजा हन्ति चिरकालानुबन्धिनो ॥

वरुण छाल, आदा, गोक्षुर, एषां मिलि २ तोला, जल ४ पल, शेष १ पल, यवक्षार १६ रति, गुड़ ३२ रति दत्वा पेयं ।

शुण्ठ्यादिः—शुण्ठ्यग्निमन्थपाषाण शिग्रुवरुण गोक्षुरैः ।
अभयारग्वधफलैः क्वाथं कुर्य्याद् विचक्षणः ॥
रामठक्षार-लवणचूर्णं दत्वा पिवेन्नरः ।

अश्मरीमूत्रकृच्छ्रघ्नं पाचनं दीपनं परम् ॥
हन्यात् कोष्ठाश्रितं वातं कट्यूरुगुदमेढ्रगम् ॥

आदा, भातघिला, कुलत्थ, चजिना, वरुण, गोक्षुर, शिलिखा, सोणारुगुटी, एषां मिलि २ तोला, जल ४ पल, शेष १ पल, हिङ्गु १ रति, यवक्षार १६ रति, सैन्धव १६ रति दि उष्ण करि खाव ।

नारिकलर साह, फुल, यवक्षार, जल १ पल दि वाटि खाव । सातदिनत अश्मरी पात हय ।

## कुशादिघृतम्

कुशः काशः शरो दर्भः[गुल्म] इत्कटोमोरटोऽश्मभित् ।
गुत्थो[दर्भो]विदारी वाराही शालिमूलं त्रिकण्टकः ॥
भल्लुकः पाटली पाठापत्तुरोऽथ कुरुण्टकः ।
पुनर्णवेशिरीशश्च क्वथितास्तेषु साधितम् ॥
घृतं शिलाह्वमधुकबीजैरिन्दीवरस्य च ।
त्रपुषैर्व्वारुकाणां वा बीजैश्चा वा पितं शृतं ॥
भिनत्ति पित्तसम्भूतामश्मरीं क्षिप्रमेव च ।
क्षारान् यवागूः पेयाश्च कषायाणि पयांसि च ।
भोजनानि प्रकुर्व्वीत गणेऽस्मिन् पित्तनाशने ॥

घृत ३ सेर, कुश, काश, विरिणा, गुड़ूची, इकूरा, कुहियार, कुलत्थ, वरकुश, पाताल्किकोमोरा, वराहक्रान्ता, शालिधानर शिफा, गोक्षुर, बिलाहि वेङेना, पारलि, आकलविन्धि, पड़गडु, हालधोयावागी, पुनर्णवा, शिरीश, एइ सकल १० सेर, जल ४० सेर, शेष १० सेर राखिव ।

शिलाजतु ६ तोला, यष्टिमधु ६ तोला, भेटरगुटी ६ तोला, तियाहगुटी ६ तोला, कोमोरागुटी ६ तोला, एइ सकल कल्क दि घृत सिद्ध करिव ।

वरुणत्वक्‌कषायस्तु पीतस्तु गुड़संयुतः ।
अश्मरीं पातयत्याशु वस्तिशूलविनाशनः ॥

वरुण छाल २ तोला क्काथ करि पुराण गुड़ ३२ रति दि खाव ।

## शरादिपञ्चमूलघृतम्

शरादि पञ्चमूल्या वा कषायेण पचेद् घृतम् ।
प्रस्थं गोक्षुरकल्केन सिद्धमद्यात् सशर्करम् ॥
अश्मरीमूत्रकृच्छ्रघ्नं रेतोमार्गरुजापहम् ॥

पञ्चतृणर मूल १० सेर, जल ४० सेर, शेष १० सेर, राखि, घृत २ सेर, गोक्षुर कटार कल्क ८ पल दिव, सिद्ध हले चिनि ८ पल दि खाब। २ तोला पञ्चतृणर क्वाथ अनुपेयम।

श्वदंष्ट्रैरण्डपत्राणि नागरं वरुणत्वचम्।
एतत् क्वाथ वरं प्रातः पिबेदश्मरी भेदनम्॥

गोक्षुर, एरण्डपत्र, शुण्ठी, वरुणछाल २ तोला, क्वाथ ०॥ ८ रति दि खाव।

## पाषाणभिन्नोरसः

शुद्धसूतं द्विधागन्धं शिखितुत्थ रसोपमम [शिलजतुरसः पलम्]।
श्वेतपुनर्णवावासारसैः श्वेतापराजितैः॥
प्रतिद्रव्यैः त्र्यहं मर्द्द्यं शुष्कं तद् भाण्डसंपुटे।
स्वेदयेद् दोलिकायन्त्रे संशुष्कं तद् विचूर्णयेत्॥
रसः पाषाणभिन्नः स्याद द्विगुञ्जश्चाश्मरी हरेत्।७

शोधित रस २ तोला, शोधित गन्धक २ तोला, शोधित ततिया १ तोला, कज्जली पूर्व्वकं मर्द्दिकीकृत्य, श्वेतपुनर्णवा रस ३ दिन, वासकरस ३ दिन, श्वेतापराजिता रसत ३ दिन एषां द्रवैः संमर्द्य भावयित्वा शुष्कां पिण्डभूतां मुखाद मृतपात्रेन पूर्ण दिव। पाछे वस्त्रेर दोला यन्त्र करि, आङ्गाराग्नित एकक्षण ताप दि, तत उद्धृत्य मुखाद चूर्ण करिव। भूधात्रीरस (भूम्यामलकीरस), केटावेटेनार रस २ तोला रसत, एइ ४ रति मिश्रित करि खाव। पाछे कुलत्थाथर रस खाव।

**इति वैद्यकसारोद्धारे अश्मरीशर्कराधिकारः॥**

## ४०। अथ प्रमेह-चिकित्सा

श्यामाककोद्रवोद्दाल-गोधूम-चनकाढ़की।
कुलत्थाश्च हिता भोज्ये पुराणामेहिनां यदा॥
जाङ्गलं तिक्तशाकानि यवान्नञ्च श्रमो मधु।

विल्ववैधान, कोदोधान, उरिधान, गोमधान, चनकमाह, मिरिमाह, कुलत्थमाह, एइ सकल पुरातन हव, अरण्यर पक्षि, तिताशाक, यवधानर अन्न, मधु, एइ सकल प्रमेहत पथ्य।

---

७। भूधात्रीफलविशालां पिष्ट्वा दुग्धेन पाययेत्।
कुलत्थक्वाथ संपीतमनुपानं सुखावहम॥ —चक्रदत्ते अधिकः पाठः।

पारिजातजयानिम्बवह्निगायत्रीणां पृथक् ।
पाठायाः सागुरोः पीता द्वयस्य शारदस्य च ॥
जलेक्षुमद्यसिकता शनैर्लवणपिष्टकान् ।
सान्द्रमेहान् क्रमाद्घ्नन्ति चाष्टौकाथाः समाक्षिकाः ॥८

पारिजातेर छाल २ तोला पूर्वोक्तक्रमे काथ करि मधु ३२ रक्तिका दि जलमेहत खाव ।

एइ क्रमे जयन्ती फुलर मूल २ तोला काथ करि खाव इक्षुमेहत । एवं निमछाल २ तोला सुरामेहत । चित्रक २ तोला सिकतामेहत, खदिरसार २ तोला शनैमेहत, आकलविद्धिमूल [अगुरु] २ तोला लवणमेहत, हालधि आचुकाठ २ तोला पिष्टकमेहत, चतोयनाछाल २ तोला, जल ८ पल, शेष २ पल, मधु ३२ रक्तिका सान्द्रमेहत खाव ।

हरीतकीकट्फलमुस्तलोध्राः पाठाविडङ्गार्जुन धन्वनाश्च (धन्वयाश्च)
उभे हरिद्रे तगरं विडङ्ग कदम्बशालार्जुनदीप्यकाश्च ॥
दार्व्वीविडङ्गं खदिरोधवश्च सुराह्वकुष्ठार्जुन-चन्दनानि ।
दार्व्व्यग्निमन्थौ त्रिफला सपाठा पाठा च मूर्व्वा च तथाश्वदंष्ट्रा ॥
यवान्युशीराण्यभयागुडूचीजम्बाभया [जम्बूशिवा] चित्रकसप्तपर्णाः ।
पादैः कषायाः कफमेहिनां ते दशोपदिष्टा मधु संप्रयुक्ता ॥९

हरीतकी, काइफल, मथा, भूमलनि मिलित २ तोला, जल ८ पल, शेष २ पल मधु ३२ रक्ति दि खाव उदकमेहत ।

आकणविन्धि, बिडङ्ग, अर्जुनछाल, कुंनेलता मिलि २ तोला, सेइ क्रमे काथ करि मधु दि खाव इक्षुमेहत ।

हालधि, आचुकाठ, तगरमूल, विडङ्ग, क्वाथ मधु दि खाव सिकतामेहत । कदम्बछाल, शालछाल, अर्जुनछाल, यनी क्वाथ मधुयुक्त लालामेहत । दारुहरिद्रा विडङ्ग, खदिरसार, धोवालता क्वाथ मधुयुक्त सान्द्रमेहत । उअँकाठ, कुर, आगर, रक्तचन्दन, सेइदरे शुक्रमेहत । दारुहरिद्रा, भातघिला, त्रिफला, आकलविन्धि एवं शनैर्म्मेहत् । आकलविन्धि वनरिहा, गोक्षुरकटा एवं सुरामेहे । यनी, विरिणामूल, शिलिखा, आमरिलता एवं शीतमेहे । जम्बुछाल, हरीतकी, चिता, चतोयनाछाल एवं कफमेहे ।

। पारिभद्रन्यादयोऽष्टौ काथा—
जलाद्यष्टौ मेहान् क्रमाद् घ्नन्तीत्यन्वयः । —चक्रदत्ते शिवदासः ।
। जलप्रमेहेक्षुरसप्रमेहे सान्द्रप्रमेहेऽपि सुराप्रमेहे ।
पिष्टप्रमेहेऽपि च शुक्रमेहे क्रमादमीस्युः सिकताप्रमेहे ॥
शीतप्रमेहे च शनैः प्रमेहे लालाप्रमेहेऽपि सुखाय तेषां ॥
—इत्यधिकः चक्रदत्ते पाठः ।

अश्वत्थाच्चतुरङ्गुलान्न्यग्रोधादेः फलत्रयात् ।
मञ्जिष्ठी रक्तसाराच्च क्वाथाः पञ्च समाक्षिकाः ॥
नीलहारिद्रशुक्राख्य क्षारमाञ्जिष्ठकाह्वयान् ।
मेहान् हन्युः क्रमादेते मक्षौद्रो रक्तमेहजित् ॥

अश्वत्थ छाल २ तोला, जल ८ पल, शेष २ पल, मधु दत्वा पेयं नीलमेहे। सोणार छालर क्वाथ मधुयुक्ता पेयं हरिद्रामेहे। वटछालर क्वाथ मधुयुक्त एवं शुक्रमेहे। त्रिफलार क्वाथ मधुयुक्त क्षारमेहे। मजाठि, रक्तचन्दन मधुयुक्त क्वाथ एवं मञ्जिष्ठमेहे। एते पञ्च पित्ते।

क्वाथः खर्ज्जुर-काश्मर्य्यं तिन्दुकास्थ्यमृताकृतः ।

खर्ज्जूरगुटी, गमारीगुटी केन्दुगुटी, आमरितता २ तोला, जल ८ पल, शेष २ पल, मधु दत्वा पेयं रक्तमेहे।

अग्निमन्थकषायन्तु वसामेहे प्रयोजयेत् ।

मातघिला २ तोला क्वाथ मधुयुक्त वसामेहे।

पाठाशिरीषदुःस्पर्श मूर्व्वाकिंशुकतिन्दुक ।
कपित्थानां भिषक् क्वाथं हस्तिमेहे प्रयोजयेत् ॥

आकलविन्धि शिरीषछाल, कुचैलता, वनरिहा, केन्दफल, पलाशवीज, कपित्थफल एषां मिलि २ तोला, क्वाथ मधुयुक्तं पेयं। एते वातिक मेहे।

दूर्व्वाकशेरुपूतीक कुम्भीकप्लव[शैवलम्]कानलं ।
जलेन क्वथितं पीतं शुक्रमेहहरं परम् ॥

दुर्व्वा, केहेरु, लेटागुटीर मूल, तेलिया धुनार मूल, मथा, चिता, एषां २ तोला क्वाथ मधुयुक्तं पेयं।

त्रिफलारग्वधद्राक्षा कषायो मधुसंयुतः ।
पीतो निहन्ति फेनाख्यं प्रमेहं वियतं नृणाम् ॥

त्रिफला, सोणारु, गमारीगुटी, एषां मिलि २ तोला क्वाथ करि मधु दि खाव।

काम्पिल्लसप्तच्छदशालजानि वैभीतरोहीतककौटजानि ।
कपित्थपुष्पानि च चूर्णितानि क्षौद्रेण लिह्यात् कफपित्तमेही ॥१०

१०। प्रमेहिणो यदा मूत्रमनाविलमपिच्छिलम ।
विशदं तिक्त-कटुकं, तदारोग्यं प्रचक्षते ॥ —आयुर्व्वेदसंग्रहे
सर्व्वमेहहरो धात्र्या रसः क्षौद्रनिशायुतः ।
कषायस्त्रिफलादारुमुस्तकैरथवा कृतः ॥ —चक्रपाणिः।

जरथ, चतीयाना, शालछाल, भमरागुटी, रोहीतक, कुटज छाल औ एषां सममाग चर्ण मधना लेह्यं खादेत् कफ पित्तमेह ।

एवं सर्व्वमेहहरो धात्र्यारसः क्षौद्रमितायुतः ।

आमलकी रस १ पल, हरिद्राचूर्ण १६ रति, मधु २ तोला, दत्वा पेयं ।

गुडूच्याः स्वरसः पेयो मधुना सर्व्वमेहजित् ।

गुडूची रस १ पल, मधु ८ तोला दत्वा पेयं ।

फलत्रिकं दारुनिशां विशालां मुस्तञ्च निःक्वाथ्य निशांशकल्कं ।
पिवेत् कषायं मधुसंप्रयुक्तं सर्व्वप्रमेहेषु समुत्थितेषु ॥

त्रिफला, दारुकाठ, करावेङेना, मथा, एषां मिलि २ तोला क्वाथ करि प्रक्षेप हरिद्राचर्ण ३२ रति मधु दत्वा पेयं ।

## न्यग्रोधाद्यं चूर्णम्

न्यग्रोधोडुम्बराश्वत्थश्योनाकारग्वधासनम् ।
आम्रजम्बुकपित्थञ्च पियालः ककुभोधवः ॥
मधुको मधुकं लोध्रं वरुणः पारिभद्रकम् ।
पटोलं मेषशृङ्गी च दन्तीचित्रकमाढ़की ॥
करञ्जत्रिफलाशक्रभल्लातकफलानि च ।
एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत् ॥
न्यग्रोधाद्यमिदं चूर्णं मधुना सहलेहयेत् ।
फलत्रयरसञ्चानु पिवेन्मूत्रं विशुध्यति ।
एतेन विंशतिर्मेहा मूत्रकृच्छ्राणि यानि च ।
प्रशमं यान्ति योगेन पिड़का न च जायते ।
न्यग्रोधाद्यमिदं तत्र चाम्रजम्वस्थि गृह्यते ॥

वट १ तोला, डिमरु १ तोला, आहत १ तोला, मातघिला १ तोला, सोनारु १ तोला, असन १ तोला, आमगुटी १ तोला, जामगुटी १ तोला, औ बीज १ तोला, पियाल १ तोला, अर्ज्जुन १ तोला, धव १ तोला, यष्टिमधु १ तोला, मौसिठा १ तोला, मूमलति १ तोला, वरुण १ तोला, निम्ब १ तोला, पटोल १ तोला, मेषशृङ्गी १ तोला, सोन्दर पवाल १ तोला, चित्रक १ तोला, मिरिमाह १ तोला, नेटागुटी १ तोला, त्रिफला ३ तोला कुटज बीज १ तोला, भल्लागुटी १ तोला एषां चूर्णानि सममागानि मधुना लेह्यं । त्रिफला क्वाथमनपिबेत् ।

## विडङ्गादिलौहम्

विडङ्गत्रिफलामुस्तैः कणया नागरेण च ।
जीरकाभ्यां युतं हन्ति प्रमेहानतिदारुणान् ॥
लोहं मूत्रविकारांश्च सर्व्वानेव विनाशयेत् ॥

विडङ्ग १ महा, त्रिफला ३ महा, मथा १, पिप्पली १, आदा १, कालजीरा १, सोगजीरा १ महा, एइ ९ महा, मारित लौह ९ महा त्रिफला क्वाथ मधु दिया ८ रति खादेत ।

## [ स्वल्प ] दाड़िमाद्यं घृतम्

दाड़िमस्य च वीजानि क्रिमिघ्नस्य च तण्डुलाः ।
रजनी चविकाजाजी त्रिफलानागर कणा ॥
त्रिकण्टकस्य च फलं यमानीधान्यकन्तथा ।
वृक्षाम्लं चपलाकोलं सिन्धूद्भवसमायुतम् ॥
अम्लवेतस-सद्राक्षायष्टीमधुकपाकलैः ।
दार्व्वीत्वक् च शिलाधातु नीलोत्पलरसाञ्जनैः ॥
कल्कैरक्षसमैरेभिः घृतप्रस्थं विपाचयेत् ।
पाने भोज्ये च दातव्य सर्व्वर्त्तुषु च मात्रया ॥
प्रमेहान विंशतिविधान् मूत्राघातास्तथाश्मरी ।
कृच्छ्रं सुदारुणञ्चैव हन्यादेतन्न संशयः ॥
विबन्धानाहशूलघ्नं कामलाज्वरनाशनम् ।
दाड़िमाद्य घृत नाम्ना अश्विभ्यां निर्म्मित पुरा ॥

घृत ३ सेर, पानी १२ सेर, कल्क दाड़िमवीज, विड़ङ्ग, हालधि, चविक, सोगजीरा, आदा, त्रिफला, पिप्पली, गोक्षुर, यमानी, धान्याक, तेतेली ( फल ) हाती पिप्पली, वदरीफल, सैन्धव, प्रतेकर २ तोला, दत्वा सिद्धं घृतं ॥

## गोक्षुरगुग्गुलु ११

त्रिकटुत्रिफलातुल्य गुग्गुलुञ्च समांशकम् ।
गोक्षुरक्वाथसंयुक्तां वटिका कारयेद् बुधः ॥

११ । गोक्षुरादि गुटी, आयुर्वेदसंग्रहे

देशकालवलापेक्षी भक्षयेच्चानुलोमिकम् ।
न चात्र परिहारोऽस्ति कर्म्म कुर्य्याद् यथोस्सितम् ॥
प्रमेहान् वातरोगाश्च वातशोणितमेव च ।
मूत्राघातं मूत्रदोषं प्रदरञ्चानुनाशयेत् ॥

गुग्गुलु २ पल, भावना, शोधनार्थं, गोक्षुर २ पल, जल २० पल, शेष ८ पल, क्वाथ समये दोलायन्त्रे पक्वं गुग्गुलुं उष्ण क्वाथे गोलयित्वा, वस्त्रे गालयित्वा लोहिकायां शुष्क पिण्डतां गतं । त्रिकटु, त्रिफला एषा प्रतिचूर्णं १ पल, मधु दत्वा सम्मर्द्दय तोलकमानाः गुटिकाः कार्य्याः । अतो भक्ष्यं, त्रिफला क्वाथ, गुडूची क्वाथम्वा पलैकमनुपिवेत् ॥

### महानलोरसः

भस्मसूत भस्मरङ्ग तुल्य क्षौद्रे विमर्द्दयेत् ।
द्विगुञ्ज भक्षयेन्नित्य मेह हन्ति चिरन्तनं ॥
गुञ्जामूल पिवेच्चानु क्षीरैरेव प्रशाम्यति ॥

रससिन्दुर १ तोला, राङ्गजारण १ तोला मिश्रयित्वा गुञ्जाद्वय मधुना लिह्य, रातलमणिर मूलर चूर्ण ३० रति क्षीरेण अनुपेय ।

### तारकेश्वरोरसः

मृत सूत मृत गन्ध मृतलोहाभ्रक समम् ।
मर्द्दयेन्मधुना चाह्नो रसोऽयं तारकेश्वरः ॥
माषमात्रं लिहेत् क्षौद्रैवहुमूत्रापनुत्तये ।
औडुम्बरफल पक्व चूर्णितं मधुना लिहेत् ॥

शुद्धरस १ तोला, शुद्धगन्धक १ तोला, अभ्र १ तोला, लौह १, कज्जलीकं एकीकृत्य मधुना विमर्द्दय स्थापयेत । अतो ४ रति, मधुना लिह्य, औडुम्बर फलं पिष्ट्वा कर्षं मधु दत्वानुपेयं ।

### हरिशङ्करोरसः

मृतसूताभ्रकं तुल्यं धात्रीफलनिजद्रवैः ।
सप्ताहं भावयेत् खल्वे रसोऽयं हरिशङ्करः ॥
माषमात्रं वटीं खादेत् [ नील ] सर्व्वमेहप्रशान्तये ।

महानिम्बस्य बीजानि पूर्व्ववत् तण्डुलोदकैः ॥
सघृतं पाययेच्चानु असाध्यं साधयेत् चणात् ॥

शुद्धरस, मृताभ्र, प्रति १ पल, आमलकी रसेन सप्ताहं भावयेत्, अतो गुञ्जाष्टमाना वटी कार्य्या, एका प्राश्या। निम्बबीज १ तोला, तण्डुलोदक १ पल, घृत १ तोला पेयं अनुपानं।

## श्रीचन्द्रप्रभागुग्गुलुः

चन्द्रप्रभावचामुस्ताभूनिम्बसुरदारवः।
हरिद्रातिविषादार्व्वी-पिप्पलीमूलचित्रकम् ॥
धान्याकं त्रिफलाचव्यं विडङ्गं गजपिप्पली।
व्योषमाक्षिकधातुश्च द्वौ क्षारौ लवणत्रयं ॥
एतानि शानमानानि प्रत्येकं कारयेद् बुधः।
त्रिवृद्दन्तीपत्रकञ्च त्वगेला-वंशलोचनाः ॥
प्रत्येकं कर्षमात्राणि कुर्य्यादेतानि बुद्धिमान्।
द्विकर्षं मृतलौहं स्यात् चतुष्कर्षा मिता भवेत् ॥
शिलाजत्वष्ट कर्षं स्यादष्टौ कर्षाश्च गुग्गुलोः।
एभिरेकत्रसंचुर्ण्णैः कर्त्तव्या गुटिका शुभा ॥
चन्द्रप्रभेति विख्याता सर्व्वरोगप्रणाशिनी।
प्रमेहं विंशतिं कृच्छ्रं मूत्राघातं तथाश्मरीं ॥
विबन्धानाहशूलानि [ लेहनाद् ] लेहनं ग्रन्थिमर्व्वुदं।
अन्त्रवृद्धिस्तथा पाण्डुः कामलाश्च हलिमकं ॥
पिड़काश्च कटिशूलं श्वासं कासं विचर्च्चिकां।
कुष्ठ्यादि दद्रूणां कण्डूं प्लीहोदर-भगन्दरं ॥
दन्तरोगं नेत्ररोगं स्त्रीणामार्त्तवजां रुजं।
पुंसां शुक्रगतान् रोगान् मन्दाग्निमरुचिन्तथा ॥
वातपित्तकफव्याधीन् वल्या वृष्या रसायनी।
चन्द्रप्रभायां कर्णन्तु चतुःशानो विधीयते ॥
वृद्धवैद्योपदेशेन कर्षार्द्धं रसगन्धयोः ॥

काफुर २ तोला, महा वच २ तोला, मथा २ तोला, माहतिता २ तोला, महाउषै २ तोला, हालधि २ तोला, आतैच २ तोला, आचुकाठ २ तोला, पिप्पली मूल २ तोला, चित्रक २ तोला, धनीया २ तोला,

त्रिफला ६ तोला, चव्य २ तोला, विडङ्ग २ तोला, हाती पिप्पली २ तोला, त्रिकटु ६ तोला, स्वर्णमाक्षिक, यवक्षार २ तोला, सर्जिकाक्षार २ तोला, सैन्धव २ तोला, सौवर्च्चल २ तोला, विट २ तोला, तेड़ियाधुना २ तोला, सोन्दर पखाल २ तोला, तेजपत्र २ तोला, दालचिनि २ तोला, एलाचि २ तोला, वंशलोचन २ तोला, मारित लोहा ४ तोला, चिनि ८ तोला, शिलाजतु १६ तोला, गुग्गुलु १६ तोला।

वृद्धवैद्योपदेशात् रस २ तोला, गन्धक १ तोला, सर्व्वं जलेन मर्द्दयित्वा २४ रति मानेन वटिकाकार्य्या, अतः एकां त्रिफला काथेन उष्णोदकेन वा खादेत्।

## इति वैद्यकसारोद्धारे प्रमेहाधिकारः ॥

दशमः परिच्छेदः

# मेदादिव्याधि-चिकित्सोपदेशः

## ४१ । अथ मेद-रोग-चिकित्सा

गार मांस बढ़ाके स्थौल्य बोले, मेदवृद्धियो बोले ।

श्रमचिन्ताव्यवायध्व क्षौद्रजागरणप्रियः ।
हन्त्यवश्यमतिस्थौल्यं यवश्यामाक-भोजनः ॥

अनेक श्रम, चिन्ताविष्ट, अतिमैथुन, दीर्घगमन, सतत मधुपान, जागरण इसब आचरिव, खाव ; मांस वृद्धि नहय ; इयाके नाचरिले मांसवृद्धि हय ।

प्रातर्मधुयुतं वारि-सेवितं स्थौल्यनाशनं ।

प्रभाते मधु मिश्र जल खाव ।

उष्णमन्नस्य मण्डं वा पिवन् कृशतनुर्भवेत् ।

तप्त अन्न, तप्त पानी खाव ।

क्षारं वातारिपत्रस्य हिङ्गुयुक्तं पिवेन्नरः ।
मेदोवृद्धिविनाशाय भक्तमण्डसमन्वितम् ।

एरण्ड पत्र हिङ्गु भक्तमण्डेन मिश्रयित्वा पेयं ।

सचव्य-जीरसव्योष-हिङ्गुसौवर्चलाबलाः ।
मस्तुना शक्तवः पीता मेदोघ्ना वह्निदीपनाः ॥

चविक, भोगजीरा, त्रिकटु, हिङ्गु, सौवर्च्चल, वला एषां चूर्ण २ तोला, यवादि पिष्टकचूर्ण १६ तोला, दधि मधुना यथाशक्तितो भक्ष्याः ।

### विड़ङ्गादिलौहम्

विड़ङ्गनागरक्षार-काल-लौहरजोमधु ।
यवामलकचूर्णञ्च प्रयोगः स्थौल्यनाशकः ॥

विड़ङ्ग १ तोला, आदा १ तोला, यवक्षार १ तोला, लौहजारण १ तोला, यव १ तोला, आमलकी १ तोला, एषां सममाग चूर्णानि मधुना आलोड्य लिहेत् ।

अमृतात्रुटिवेल्लवत्सकं कलिङ्गपथ्यामलकानि गुग्गुलुः ।
क्रमवृद्धमिदं मधुप्लुतं पिड़का-स्थौल्य भगन्दरं जयेत् ॥

गुड़ूची १ तोला, एलाचि २ तोला, विड़ङ्ग ३ तोला, कुटज छाल ४ तोला, इन्द्रयव ५ तोला, हरीतकी ६ तोला, आमलकी ७ तोला, गुग्गुलु ८ तोला, एषां चूर्णानि गुग्गुलुना मर्दयित्वा शानप्रमाणा वटिका कार्य्या, अतो मधु दत्वा खादेत ।

## नवाङ्गगुग्गुलुः

व्योषाग्नि त्रिफलामुस्य-विड़ङ्गैर्गुग्गुलुं समम् ।
खादन् सर्व्वान् जयेद् व्याधीन् मेदः श्लेष्मामवातजान ॥

गुग्गुलु ९ तोला, त्रिकटु ३ तोला, चित्रक १ तोला, त्रिफला ३ तोला, मथा १ तोला, विड़ङ्ग १ तोला, सर्व्वं चूर्णमेकीकृत्य मधुना पिष्टयित्वा, स्निग्धे भाण्डे स्थाप्य अतो भक्ष्यं अर्द्धतोलकमाना, तप्तजलमनुपेयं ।

## त्रिफलाद्यं तैलम्

त्रिफलातिविषामूर्व्वा-त्रिवृच्चित्रकवासकैः ।
निम्बारग्वधषड्ग्रन्था सप्तपर्ण-निशाद्वयैः ॥
गुड़ूचीन्द्रसुरा१कृष्णा-कुष्ठमर्षपनागरैः ।
तैलमेभिः समं पक्वं सुरसादि रसाप्लुतम् ॥
पानाभ्यञ्जन-गण्डूप-नस्य-वस्तिषु योजितम् ।
स्थूलतालस्य कण्ड्वादीन जयेत् कफकृतान् गदान ॥

## सुरसादि गणमाह

सुरसा द्विविधा कञ्जीकतृणे द्वे च कट्फले ।
करमर्द्दो विड़ङ्गश्च त्वरके द्वे अलम्बुषे ॥
काकजानु तथा दन्ती निर्गुण्डी काकमाचिका ॥
सुरसादि गणो ह्येष कफनुत् क्रिमिनाशनः ।
स्थौल्यारुचि तथा कासश्वासघ्नो व्रणनाशनः ॥

१ । त्रिफलाद्यतैले इन्द्रसुरा, गोरक्ष, कर्कटी, निर्गुण्डी वा । —इति चक्रदत्तटीकायां शिवदासः ।

तैल ३ सेर, कृष्ण तुलसी, शुक्ल तुलसी, अकलबिर, बिरिणामूल, गन्ध बिरिणा, काउफल, लाटामूल, बिडङ्ग, गोक्षुरष्ट्रि वरमूरफुला, सरुमूरफुला, कोवामातुरी, दन्तीमूल, कोवाचुटिलतामूल एषां मिलि ५ सेर, जल ४८ सेर, शेष १२ सेर कल्क त्रिफला, आतैच, वनरिहा, तेड़ियाधुना, चित्रक, वासक, निम्ब, सोणारुगुटी, बच, चतियना, हरिद्रादुइ, गड़ूची, ( इन्द्रमुरा, कोवाठुटी ) पिप्पली, कुर, श्वेतसर्षप, आदा एषां प्रति ४ तोला।

अथ कृशे—वातव्याधि क्रियां सर्व्वां कृशे कुर्य्याद् विचक्षणः।

शरीरर बल मांस शुकाइ निस्तेज हय, इयाके कृशव्याधि बोले। वातव्याधि शान्त करा औषध दिब।

अश्वगन्धाघृताभ्यास्च तत्रोक्तं मांसवर्द्धनं।

अश्वगन्धाचूर्ण १ तोला, घृतेन खादेत्।

मुस्ता च आढ़की चैव समभागेन चूर्णयेत्।
क्षीरेण सह पीत्वा तु स कृशः स्थूलतां व्रजेत्॥

मथाचूर्ण १ तोला, मिरिमाहरचूर्ण १ तोला, गोदुग्धेनालोड्य पेयम।

वव्वोलस्य दलैः सम्यक् वारिणा परिपेषितैः।
गात्रमुद्वर्त्तनात् पश्चात्ततः स्नानं समाचरेत्॥
प्रस्वेदान्मुच्यते शीघ्रं ततस्तेषां समाचरेत्।

बावलार पात [ वनतुलसी रसेरे बाटि ] शीतल जलेरे बति सर्व्वं शरीरत घसिब। ४ दण्ड अन्तरे स्नान करिब; गाघमा गन्धोवा गुचे।

शिरीषलामज्जकनागलोध्रैः त्वग्दोषदौर्गन्ध्यहरः प्रघर्षः।

शिरीष छाल, विरिणामूल, नाहरफुल, भूमलति छाल एषां समभागं जलेन पिष्टा गात्रघर्षणं दौर्गन्ध घर्महरणं।

पत्राम्बुलोहाभयचन्दनानि शिरीषदौर्गन्ध्यहरः प्रहर्षः।

तेजपात, सुगन्धबाला, गन्ध बिरिणा, आगर काठ, जातिचन्दन समभागे पिष्टैः गात्रे लेपः।

वासादलरसो लेपात् शङ्खचूर्णेन सयुतः।
विल्वपत्रदलो वापि गात्रदौर्गन्ध्यनाशनः।

वासापत्ररस, शङ्ख पिष्टि द्वयोर्लेपः। अथवा विल्वपत्र रसेनापि लेपः।

**इति वैद्यकसारोद्धारे स्थौल्यदौर्गन्ध्याधिकारः॥**

# ४२। अथोदर-चिकित्सा

उदरे दोषसम्पूर्णे कुक्षौ मन्दायतेऽनलः।
तस्माद् भोज्यानि योज्यानि दीपनानि लघूनि च।

उदरत वात-पित्त-कफ दोषे व्यापिले, दुइ कोखे अग्निमन्द हुइ कोप करे, अतएव भोजने लघु वस्तु खाव। अग्निदीप्तिकारक मुद्ग, मसूर, सरुमाछ, आखे, रक्तशालो, यव, आरण्य पक्षिर मांस, आरण्य पशु मांस इसव खाव। प्रधान रेचन कराव। उदर रोगर इसव पथ्य। इयात बाजे सकलो अपथ्य।

वातोदरी पिबेत् तक्रं पिप्पलीलवणान्वितम्।

तक्र २ पल, पिप्पलीचूर्ण ७ मद्दा पिबेत्।

शर्करामरिचोपेतं स्वादु-पित्तोदरी पिबेत्।

चेनिं २ तोला, मरिचचूर्ण १६ रति, अम्लतक्र ७ पल आलोड्य पेयं।

यमानीसैन्धवाजाजी-व्योषयुक्तं कफोदरी।

यनी १ तोला, सैन्धव १ तोला, आजनि ? तोला, त्रिकटु ३ तोला, एषा सममागचूर्ण तक्र पलैकेन पिबेत्।

मधुतैलवचाशुण्ठीशताह्वाकुष्ठसैन्धवैः।
युक्तं प्लीहोदरी जातं सव्योषन्तूदकोदरी।

वच, शुण्ठी, शुलफा, कुर, सैन्धव, एषां सममागचूर्ण मधु, तिलतैल, सुजात दधि तक्र २ पल प्रक्षेप त्रिकटुचूर्ण १ तोला पेयम्।

बद्धोदरी तु हवुषा-दीप्यकाजाजी-सैन्धवैः।
पिबेच्छिद्रोदरी तक्रं पिप्पलीक्षौद्रसंयुतम्॥

हवुषा, यनी, मोगजीरा, सैन्धव एषा सममागचूर्ण तक्र २ पल पिप्पलचूर्ण १ तोला, मधु १ तोला पेयं।

त्र्यूषणक्षारलवणैर्युक्तन्तु निचयोदरी२।

त्रिकटु, यवक्षार, सैन्धव एषां चूर्ण सममागेन तक्र २ पलत्रयेन पेयं।

गौरवारोचकार्त्तानां समन्दाग्न्यतिसारिणां।
तक्रं वातकफार्त्तानाममृतत्वाय कल्पते॥

गरिष्ठ, अरुचि, अग्निमन्दत, अतिसारत, वात-कफ पीड़ात तक्रपान अमृततुल्य।

२। निचयोदरी, सन्निपातोदरी। इति चक्रदत्तटीकायां शिवदासः।

## सामुद्राद्यं चूर्णम्

सामुद्र-सौवर्च्चल-सैन्धवानि क्षारं यवानीमजमोदकञ्च ।
सपिप्पलीचित्रकशृङ्गवेरं हिङ्गुं विड़ञ्चेति समानि कुर्य्यात् ॥
एतानि चूर्णानि घृतप्लुतानि भुञ्जीत पूर्व्वं कवलं प्रशस्तम् ।
वातोदरं गुल्ममजीर्णभुक्तं वायुप्रकोपं ग्रहणीञ्च दुष्टां ।
अर्शांसि दुष्टानि च पाण्डुरोगं भगन्दरञ्चेति निहन्ति सद्यः ॥

सामुद्र लोण, सौवर्च्चल, सैन्धव, यवक्षार, आजनि पिप्पली, आदा, चित्रक, हिङ्गु, विट्लोण एतानि समभाग चूर्णानि चूर्णादष्टमांसक घृतेन, सनीय, प्रथमे औषध खाइ अन्न खाव ।

पित्तोदरे तु बलिनं पूर्व्वमेव विरेचयेत् ।

पैत्तिक उदर रोगत, बलवन्तक पूर्व्वे रेचन कराव ।

पयसा च त्रिवृत्कल्केनोरुवूकश्रृतेन वा ।

गोक्षीर १ पल, तेड़ियामूल २ तोला, एरगडमूल २ तोला, जल ४ पल, शेष १ पल, तेड़ियाचूर्ण २ तोला, आलोड्य पेयं ।

सातलात्रायमानाभ्यां शृतेनारग्वधेन वा ।

चतियना, नाथकल्प मिलि २ तोला, काय चाकि सिठा गुचाइ लै प्रक्षेप सोणारुगुटी बाटि दिब ।

कफादुदरिणं शुद्धं कटुक्षाराम्रभोजितं ।
मूत्रारिष्टायस्कृतिभिर्य्योजयेच्च कफापहैः ॥

कफोदरत शुद्ध रेचन करिव । त्रिकटूचूर्ण १ तोला, यवक्षार २ तोला सह मिश्रयित्वा खादेत् । गोमूत्र, अरिष्ट औषध रसायन औषध दिव

सन्निपातोदरे सर्व्वा यथोक्ताः कारयेत् क्रियाः ।

सन्निपात उदरीत सन्निपातोक्त क्रिया करिव ।

मूत्राण्यष्टावुदरिणां सेके पाने च योजयेत् ।
मूत्रं गोऽजाविमहिषी गजाश्वोष्ट्रखरोद्भवं ।

गोमूत्र, भेड़ा छागर मूत्र, छागमू , महिषमूत्र, हस्तिमूत्र, घोरामूत्र, उटर मूत्र, गाधमूत्र । आठो मूत्राणि उदर रोगिये खाव । एइ मूत्रेरे सेक लव ।

स्नुहिपयोभावितानां पिप्पलीनां पयोशनः ।
सहस्रञ्च प्रयुञ्जीत शक्तितो जठरामयी ॥

स्नुहि क्षीरेण सप्तधा भावित पिप्पली गोट १००० एक हाजार, अतो गुटिका त्रयमधिकं पिष्ट्वा, पीत्वा विरेचयेत्। विरेके जाते दुग्धेन मोक्तव्यं।

स्नुक्पयसा परिभावितः तण्डुलचूर्णैर्विनिर्म्मितः पूपः।
उदरमुदारं हिंस्याद् योगोऽयं सप्तरात्रेण॥

पिष्टकचूर्ण सिजु क्षीरेण सप्तदिवस भावना दि खाव। रेचन हय कोष्ठानुरूपे पेयम्।

## पिप्पली वर्द्धमानः

पिप्पली-वर्द्धमानं वा कल्पदृष्टं३ प्रयोजयेत्।
जठराणां विनाशाय नास्ति तेन समं भुवि॥

पिप्पली प्रथम दिवसत १ टा, द्वितीये २ टा, तृतीये ३ टा, चातुर्थे ४ टा, पञ्चमे ५ टा, षष्ठे ६ टा, सप्तमे ७ टा, अष्टमे ८ टा, नवमे ९ टा, दशमे १० टा एवं क्रमेण विंशति दिनपर्य्यन्ते तप्तजलेन वटिका खादेत।

## पटोलाद्यं चूर्णम्

पटोलमूलं रजनीं विड़ङ्गं त्रिफलात्वचम्।
कम्पिल्लकं नीलिनीञ्च त्रिवृताञ्चेति चूर्णयेन॥
षडाद्यान् कार्षिकानन्त्यां स्त्रींश्च द्वि त्रि चतुर्गुणान्।
कृत्वा चूर्णं ततो मुष्टिं गवा मूत्रेण वै पिवेत्॥
विरिक्तो जाङ्गलरसैर्भुञ्जीत मृदुमोदनम्।

पटोलमूल, हालधि, विड़ङ्ग, त्रिफला, जरथ, रसतेड़िया, एषां प्रत्येकर २ तोलाके चूर्ण मिलित्वा, अतो मध्यं एक द्वि त्रि चतुर्भागं बलावलं दृष्ट्वा, गोमूत्र पनेनालोड्य पुनः पुनः सर्व्वोदरे विरेचनमेषां।

सक्षीरं माहिषं मूत्रं निराहारः पिवेन्नरः।
शाम्यत्यनेन जठरं सप्ताहादिति निश्चयः॥

महिषमूत्र १ पल पीत्वा केवलं क्षीरमाहारं कुर्य्यात।

गवाक्षी शङ्खिनी दन्ती नीलिनीकल्कसंयुतम्।
सर्व्वोदर-विनाशाय गोमूत्रं पातुमारभेत्॥

काटावेङ्केनामूल, शङ्खमालती मूल, सोन्दर पवाल एषां चूर्णानि समभागानि गोमूत्र पलेन पेयं।

---

३। कल्पदृष्टमिति, चरकोक्त रसायनविधिदृष्टमिति शिवदासः।

दशमूलदारुनागरच्छिन्नरुहापुनर्णवाभयाक्काथः ।
जयति जलोदरशोथश्लीपदगलगण्डवातरोगांश्च४ ॥

बेल, मातघिला, गमारी, पारलि, गणियरी, शालानि, पीठानी, कण्टकारी, भेकुरि, गोक्षुर, दवेकाठ, आदा, गुड़ची, पुनर्णवा, शिलिखा, एषां मिलि २ तोला, जल ४ पल, शेष १ पल पेयं ।

पुनर्णवानिम्बपटोलशुण्ठीतिक्तामृतादार्व्वभया कषायः ।
सर्व्वाङ्ग-शोथोदरकासशूलश्वासान्वितं पाण्डुगदं निहन्ति ॥

पुनर्णवा, निम्ब, पटोल, आदा, कटकीतिता, गुड़ूची आन्चुकाठ शिलिखा, एषां मिलि २ तोल क्काथं पेयं ।

## विन्दुघृतम्

अर्कक्षीर पले द्वे तु स्नुहीक्षीरपलानि षट् ।
पथ्या काम्पिल्लकं श्यामा सम्पाक गिरिकर्णिका ॥
नीलिनीत्रिवृतादन्तीशङ्खिनीचित्रकस्तथा ।
एतेषां पलिकैर्भागैर्घृतप्रस्थं विपाचयेत् ॥
अथास्य मलिने कोष्ठे विन्दुमात्रं प्रदापयेत् ।
यावतोऽस्य पिवेद् विन्दूं स्तावद् वारान् विरिच्यते ॥
कुष्ठं गुल्ममुदावर्त्तं श्वयथुं सभगन्दरं ।
शमयत्युदराण्यष्टौ वृक्षमिन्द्राशनिर्य्यथा ॥
एतद् विन्दुघृतं नाम येनाभ्यक्तो विरिच्यते ॥

घृत ३ सेर, जल १२ सेर, अर्कक्षीर २ पल सिजक्षीर ६ पल, हरीतकी १ पल, करच १ पल, हुकरीयालता १ पल, सोणारु गुटी १ पल, इन्द्रयव १ पल श्वेतापराजिता १ पल, तेड़ियाधुना १ पल, दन्तीमूल १ पल, शङ्खमालती फुल १ पल सिद्ध घृत ।

## पिप्पल्याद्यलौहम्

पिप्पलीमूलपिण्डाह्व त्रिकत्रय ससिन्धुजैः ।
सेवितो नियतं हन्ति लौहः सर्व्वोदरामयं ॥

पिप्पलीमूल १ महा, तगरमूल १ महा, त्रिकटु ३ महा, त्रिफला ३ महा, चिता १ महा विडङ्ग १ महा, मथा १ महा, जारित लौह ३ तोला, घृत मधुभ्यां सम्मर्द्दय लेह्यं ।

---

४। "प्लीहगुल्मार्शसां क्रिमींश्च" इति मूले ।

## त्रिकट्वादि लौहम्

त्रिकटुत्रिफलादन्तीमार्गत्रिमदशुण्ठीभिः ।
पुनर्णवासमायुक्तं कोष्ठं हन्ति सुदुस्तरं ॥
लौहं सर्व्वोदरं [शोथोदरं]स्थौल्यं मेदोगदमसंशयः ॥

त्रिकटु ३ महा त्रिफला ३ महा, दन्ती १ महा, अपामार्ग १ महा, विड़ङ्ग १ महा, चिता १ महा, मथा १ महा, आदा १ महा, पुनर्णावा १ महा, लौहा १३ महा घृत मधुभ्यां खाद्यं ।

## वैश्वानरवटी

शुद्धसूतं द्विधा गन्धं मृतार्कायः शिलाजतु ।
रसमानं प्रदातव्यं रसस्य द्विगुणं विषम् ॥
त्रिकटु चित्रकं कुष्ठ निर्गुण्डीमुषलीरजः ।
अजमोदारमांशेन प्रत्येकञ्च प्रकल्पयेत् ।
पञ्चाङ्ग निम्बकाथेन भावयेच्चैकविंशतिः ॥
भृङ्गराजरसैः सप्त दत्त्वा क्षौद्रेण लेहयेत ।
वदरास्थि प्रमाणेन वटिका ता विनिर्दिशेत् ॥
श्लेष्मोदरं निहन्त्याशु मासाद् वैश्वानरवटी ।
देवदारु-वह्निमूल-कल्कं क्षीरेण पाययेत् ॥
[ भोजनं मेषदुग्धेन कुलत्थानां रसेन तु ॥ ]

शुद्धरस १ तोला, शुद्धगन्धक २ तोला. मृत ताम्र १ तोला, लौह १ तोला, शोधित शिलाजतु १ तोला, शोधित विष २ तोला, त्रिकटु ३ तोला, चित्रक १ तोला, कुर १ तोला, पचतिया १ तोला, नागिनी मुरबन्ध १ तोला, आजनि १ तोला, एषां चूर्णानि निमछाल पत्र पुष्प फल मूल मिलित १६ तोला, जल ८ भाग शेष क्वाथेरे २१ वार भावना दिव, भृङ्गराजर रसेरे ७ एवं भावयित्वा वदरास्थि प्रमाणा वटिका कार्य्या, वटीमेकां मधुना विलिह्य, उष्णे, चितामूल प्रति १८ रति पिष्टा दुग्धेनानुपिवेत् ।

## नाराचोरसः

अष्टौ निस्तुषदन्तीवीजकलिकाद् भागत्रयं नागराद् ।
द्वौ गन्धान्मरिचानि टङ्कनरसादेकश्च भागः क्रमात् ।
गुञ्जामानवटी विरेचनकरी देया च शीताम्बुना ।
गुल्म-प्लीह-महोदरार्त्तिशमनो नाराचनामा रसः ॥

शोधित दन्ती बीज ८ भाग, शुण्ठी ३ भाग, गन्धक ४ भाग, मरिच १ भाग, टङ्कन १ भाग, रस १ भाग जलेन पिष्ट्वा गुञ्जाप्रमाणा वटिका कार्य्या, एका वटीं भुक्त्वा शीतलजलमनुपिबेत्। विरेकेजाते उष्णजलं पेयं ॥

इति वैद्यकसारोद्धारे उदररोगाधिकारः ॥

## ४३। अथ प्लीहयकृच्चिकित्सा

यस्य प्लीहानमुद्भूय कुर्य्यास्तिष्ठति मारुतः।
शनैः परितुदन् पार्श्वं प्लीहा तस्य विवर्द्धते[५] ॥

कोनो पुरुषर वायुवद्ध हइ, वारम्वार खुचि विनिय वेदना करे अल्प वृद्धि हय; आहारादिरपि।

यमानिकाचित्रकयावशूक षड्ग्रन्थिदन्तीमगधोद्भवाना।
प्लीहानमेतद्विनिहन्ति चूर्णमुष्णाम्बुना मस्तुसुरासवैर्वा ॥

यनी १ तोला, चित्रक १ तोला, यवक्षार १ तोला, वच १ तोला, सोन्दर पखाल १ तोला, पिप्पली १ तोला, एतानि चूर्णानि मिलित्वा १ तोला, उष्ण जलानुपानेन पेय।

पिप्पली किंशुकक्षारभावितां सम्प्रयोजयेत्।
गुल्मप्लीहापहां वह्निदीपनञ्च रसायनी ॥

पलाशक्षारोदकं दत्वा पिप्पलीचूर्णं सप्त दिनं भावयित्वा वर्द्धमानं प्रयोजयेत्।

तालपुष्पभवः क्षारः सगुड़ः प्लीहनाशनः[६]।

तालपुष्प दग्ध क्षार, पुराण गुड़ेन मिश्रयित्वा पेय। क्षार वारि अनुपेयं।

५। शोणिताज्जायते प्लीहा वामतोहृदयादधः।
रक्तवाहि शिराणां स मूलं ख्यातोमहर्षिभिः ॥
प्लीहामयस्य हेत्वादि समस्तं यकृदामये।
किन्तुस्थितिस्तहोर्द्वयो वामदक्षिणपार्श्वयोः। —इति भावप्रकाशे मिश्रः।

६। तालपुष्प इत्यादौ अन्तर्धूम क्षार इति। अम्ल निस्रुतमिति, अम्ले काञ्जिके निःस्रुतं सम्यक् परिस्रुतम्, अम्लपरिस्रुतं पूतिकरञ्जक्षारं बिड़लवण पिप्पलीचूर्णं प्रक्षेपेण पिबेदिति चक्रदत्तटीकायां शिवदासः।

क्षारं वा विड्कृष्णाभ्यां पूतिकस्याम्बु निस्रुतं ।
यकृत् प्लीह प्रशान्त्यर्थं पिवेत् प्रातर्यथाबलं ॥

नाटा करञ्ज क्षारोदक २ तोला, विटलोण ३२ रति, पिप्पलीचूर्ण ३२ रति मिश्रयित्वा पेयं ।

भल्लातकाभयाजाजी गुड़ेन सहमोदकः ।
सप्तरात्रान्निहन्त्येष प्लीहानमतिदारुणम् ॥

भल्ला १ पल, हरीतकी १ पल, आजनि १ पल, गुड़ ३ पल मोदकं ।

प्लीहजिच्छरपुङ्खाया कल्कस्तक्रेण सेवितः ।
शरपुङ्खैव सञ्चर्व्य जग्ध्वा पेया भुजाथवा ॥

शरपुङ्खामूल १ तोला वटि तक्रपलैकं पेयं । अथवा शरपुङ्खामूल मचर्व्वंय खादित्वा, अथवा भस्मीकृत्य प्रसृतोदकेन आहारं कर्त्तव्यं ।

पिप्पली-नागरं दन्ती समांशं द्विगुणाभया ।
चूर्णं पीत विड़ार्द्धांश प्लीहघ्नमुष्णवारिणा ॥

पिप्पली, शुण्ठी, दन्ती एषां प्रति चूर्ण २ तोला, हरीतकाचूर्ण ४ तोला, विट्लोण १ तोला एकीकृत्य, अतो १ तोला उष्णोदकेन पेयं ।

## पिप्पलीवर्द्धमानानि

क्रमवृद्धया दशाहानि दशपिप्पलिकं दिनं ।
वर्द्धयेत् पयसा सार्द्धं तथैवापनयेत् [ ह्रासयेत् ] पुनः ॥

प्रथम १ टा, २य २ टा, ३य ३ टा, एवं क्रमेण दशदिन पर्य्यन्ते वढ़ाव ।

## पिप्पलीचित्रकघृतम्

पिप्पलीचित्रकान्मूलं पिष्ट्वा सम्यग् विपाचयेत् ।
घृतं चतुर्गुणं क्षीरं यकृत्प्लीहोदरापहम् ॥

घृत ३ सेर, गोदुग्ध १२ सेर, कल्क पिप्पलीमूल ४ पल, चितामुल ४ पल पिष्ट्वा दत्वा पक्तव्यम् ।

## [ स्वल्प ] रोहितक घृतम्

रोहितकत्वचः श्रेष्ठाः पलानां पञ्चविंशतिः ।
कोल द्विप्रस्थसंयुक्तं कषायमूलकल्पयेत् ॥

पलिकैः पञ्चकोलैश्च तैः सर्व्वैश्चापि तुल्यया ।
रोहितकत्वचा पिष्टैर्घृतप्रस्थं विपाचयेत् ॥
प्लीहाभिवृद्धिं शमयेदेतदाशु प्रयोजिताम् ।
तथा गुल्मोदरश्वास-क्रिमि-पाण्डुत्वकामलाः ॥

घृत ३ सेर, क्काथ जरथ छाल २५ पल, शुखानवगरी ३२ पल, जल ४८ सेर, शेष १२ सेर, कल्क पञ्चकोल ५ पल । जरथ छाल ५ पल दत्वा सिद्धम् ।

## प्लीहारिरसः

पारदं गन्धकं टङ्कं विषं व्योषं फलत्रिकम् ।
तोलकस्य समापेतं जैपालञ्च तदर्द्धकं७ ॥
किंशुकस्य रसेनैव याममात्रन्तु मर्द्दयेत् ।
गुञ्जामात्रां वटीं कृत्वा च्छायायां शोषयेत्ततः ॥
वटिकैका प्रदातव्या शृङ्गवेररसेन च ।
गुदाङ्कुरे गुल्मशूले प्लीहशोथे कफात्मके ॥
उदावर्त्ते वातशूले श्वासकासज्वरेषु च ।
रसः प्लीहारिनामायं कोष्ठामयविनाशनः ॥
आमवातगदे चैव सर्व्वाजीर्णविनाशनः ॥

रस १ तोला, गन्धक १ तोला, सुवगा १ तोला, विष १ तोला, त्रिकटु ३ तोला, त्रिफला ३ तोला, जयपाल शोधित ५ तोला, एतत् सर्व्वं पलाशस्य रसेन प्रहरं मर्द्दयित्वा गुञ्जाप्रमाणा वटिका कार्य्या, छायाशुष्कां कारयेत् । एकमाद्रकरसेन पीत्वा विरेके जाते प्रहरद्वयान्तरम् तक्रस्य मलशोषश्चेत् किञ्चिद् भोजनादिकं दद्यात् ॥

**इति वैद्यकसारोद्धारे प्लीह-यकृदधिकारः ॥**

## ४४ । अथ शोथ-चिकित्सा

लङ्घनं पाचनं शोथे शिरः कार्य्यविरेचनम् ।
वमनञ्च यथासन्नं यथादोषं प्रकल्पयेत्८ ॥

---

७ । अत्र सर्व्वेषामर्द्धं जयपालम् ।

८ । स्नेहोऽथ वातिके शोथे बद्धविट्के निरूहणम् ।
पयोघृतं पैत्तिकेतु कफजे रुक्षणक्रमः ॥ —इति चक्रदत्ते अधिकः पाठः

सर्व्वाङ्ग शोथत लङ्घन, जीर्णाहार, शिरो विरेचन बोले। नाके उजोवा नस्य, विरेचन, वान्ति इसव करिव, आचरिव, यिसव आचरिले शोथ जन्मे ताक परिव।

शुण्ठीपुनर्णवैरण्ड-पञ्चमूलीशृतं जलम्।
वातिके श्वयथौ शस्तं पानाहारपरिग्रहे॥

आदा, पुनर्णवा, एरयड, मातघिला, वेल, गमारी, पारलि, गणियरी एषां मिलि २ तोला, जल ४ पल, शेष १ पल, एषामष्टानां मिलि १ तोला, मुद्ग ८ तोला, जल ३ सेर, शेष ३ पोवा एवं यूषं खादेत्।

पृश्नीपर्णीवलोदीच्य शुण्ठीसिद्धश्च पैत्तिके।

पिठानी, वरियाल, सुगन्धवाला, शुयठी एषां मिलि १ तोला, मुग ८ तोला, जल ३ सेर, शेष ३ पोवा एवं पित्ते यूषं पेयम्।

श्लैष्मिके पिप्पलीमूल-दारुनागर-चित्रकैः।

पिप्पलीमूल, उबै, आदा, चिता एषा मिलि १ तोला, मुग ८ तोला, जल ३ सर, शेष ३ पोवा पुर्व्ववत् पेयं।

दशमूलं सदा शस्तं वातिके च विशेषतः।

वात शोथत दशमूल काथ खाव।

पिवेद् गवां मूत्रविमिश्रितञ्च फलत्रिकाच्चूर्णमथाक्षमात्रम्।

त्रिफलाचूर्ण १ तोला, गोमूत्र पलैः पेयं।

त्रिदोषे—अभयादारुमधुकं तिक्तादन्ती-र्मपिप्पली।
पटाल चन्दन दार्व्वी त्रायमानेन्द्रवारुणी॥
एषां काथःससर्पिष्कः श्वयथुज्वरदाहहा।
वीसर्पतृष्णासन्तापसन्निपातविषापहः६॥

शिलिखा, उबै, यष्टिमध, कटकातिता, दन्ती, पिप्पली, पटाल, रक्तचन्दन, आचुकाठ, नायकल्प, काटावेङेना एषां मिलि २ तोला, काथ जल, घृत ३२ रति दत्वा पेयं।

अजाजिपाठाघनपञ्चकोल-व्याघ्रीरजन्यः सुखतोयपीताः।
शोथं त्रिदोषं चिरजं प्रवृद्धं निघ्नन्ति भूनिम्ब-महौषधं च॥

आजनि, आकलविन्धि, मथा, पिप्पलीमूल; पिप्पली, चविक, चित्रक, आदा, कण्टकारी, हालधि एषां समभागचूर्णं उष्णेन तोयेन पेयं। माहतिता, आदा समभागचूर्णं उष्ण जलमनुपेयं।

---

६। सर्पिः तृष्णा-ससन्ताप-सन्निपात-विषापहः, —इति मूले।

पुनर्णवानिम्बपटोलशुण्ठी-तिक्तामृतादार्व्वभयाकषायः ।
सर्व्वाङ्गशोथोदरकासशूलश्वासान्वितं पाण्डुगदं निहन्ति ॥

पुनर्णवा, निम्ब, पटोल, आदा, कटकीतिता, आचुकाठ, शिलिखा एषां मिलि २ तोला क्वाथः पेयः ।

आर्द्रकस्य रसः पीतः पुराणगुड़मिश्रितः ।
अजाक्षीराशिनां शीघ्रं सर्व्वशोथहरो भवेत् ॥

आदारस १ पल, पुराण गुड़ १ तोला, पीत्वा, छागी क्षीरेरे भात खाव ।

विल्वपत्ररसं पूतं शोषणं श्वयथौ त्रिजे ।
विट्सङ्गे चैवदुर्नाम्नि विदध्यात् कामलास्वपि ।

विल्वपत्र रस १ पल, मरिचचूर्ण ३२ रति दत्वा पेयं ।

गुड़ार्द्रकं वा गुड़नागरं वा गुड़ाभयां वा गुड़पिप्पली वा ।
कर्षाभिवृद्ध्या त्रिपलप्रमाणं खादेन्नरः पक्षमथापि मासम् ॥
शोथ-प्रतिश्याय गलास्य रोगान् सश्वासकासारुचिपीनसादीन् ।
जीर्णज्वरार्शो ग्रहणीविकारान् हन्यात् तथान्यान् कफवातरोगान् ॥

आदारस १ पल, गुड़ १ तोला, खादेत् । शुण्ठीचूर्ण १ तोला, पुराण गुड़ २ तोला खादेत् । शिलिखाचूर्ण २ तोला, पुराण गुड़ ८ तोला खादेत् । पिप्पलीचूर्ण १ तोला, पुराण गुड़ २ तोला, खादेत् । प्रथम दिने शुण्ठीचूर्ण १ तोला, पुराण गुड़ १ तोला खादेत् । द्वितीय दिने २ तोला ३२ रति, तृतीयदिने ३ तोला, चतुर्थे ३ तोला ३२ रति, पञ्चमे ४ तोला, षष्ठे ४ तोला ३२ रति, सप्तमे ५ तोला, अष्टमे ५ तोला ३२ रति, नवमे ६ तोला, दशमे ६ तोला ३२ रति, एकादशे ७ तोला, द्वादशे ७ तोला ३२ रति, त्रयोदशे ८ तोला, चतुर्दशे ८ तोला ३२ रति, पञ्चदशे ९ तोला षोड़शे ९ तोला ३२ रति एवं क्रमेण त्रिंशद्दिने पलेवृद्धिः । एवं पक्षद्वयेऽपि त्रिपलमुपयोज्यं ।

गुड़पिप्पलीशुण्ठीनां चूर्णं श्वयथुनाशनं ।
आमाजीर्ण प्रशमनं१० शूलघ्नं वस्तिशोधनं ॥

पिप्पलीचूर्ण ४ तोला, शुण्ठी ४ तोला, गुड़, १६ तोला, उष्णजलेन तोलकद्वयमुपयोज्यं ।

## पुनर्णवाद्यं घृतम्

पुनर्णवाचित्रकदेवदारु-पञ्चोषणक्षारहरीतकीनां ।
कल्केन पक्वं दशमूलतोये घृतोत्तमं शोथनिसूदनञ्च ॥

घृत ३ सेर, दशमूल मिलित्वा ( क्वाथ ) ६४ पल, जल ४८ सेर, शेष १२ सेर, कल्क पुनर्णवा, चिता, दवैकाठ मिलित पञ्चकोल, यवक्षार, हरिद्रा एषां प्रत्येकं पलं ।

१० । "अर्शोऽजीर्णप्रशमन" —इति मूले

## पुनर्णवाद्यं घृतम्—पञ्चकोलाद्यं घृतम्

पुनर्णवाक्काथ कल्कसिद्धं शोथहरं घृतं ।
रसे विपाचयेत् सर्पिः पञ्चकोलकुलत्थयोः ॥

घृत ३ सेर, क्काथ पञ्चकोल कुलत्थ प्रति ६४ पल। जल ४८ सेर, शेष १२ सेर; कल्क पञ्चकोल कुलत्थ प्रति ३ पोवा। पञ्चकोलाद्यं घृतम।

## मानकघृतम् ११

मानकक्काथकक्काथकल्काभ्यां घृतप्रस्थं विपाचयेत्।
एकजं द्वन्द्वजं शोथं त्रिदोषञ्च व्यपोहति ॥

घृत ३ सेर, क्काथ मानमूल ६४ पल, जल ४८ सेर, शेष १२ सेर; कल्क मानमूल ३ पोवा दत्वा पक्तव्यं।

## शोथारिमण्डुरम्

गोमूत्र-शुद्धमण्डुरं निर्गुण्डीरसभावितम्।
मानकाद्रककन्दानां रसेष्वपि च भावयेत् ॥
व्योषत्रिफलाचव्यानां चूर्णं कर्षद्वयं पृथक्।
चूर्णाद्द्विगुणमण्डुरं गोमूत्रेऽष्टगुणे पचेत् ॥
सिद्धे चूर्णं क्षिपेच्छीते मधुनश्च पलद्वयम्।
निहन्ति सर्व्वजं शोथं सर्व्वाङ्गोत्थं न संशयः ॥

सप्तधा गोमूत्र शोधित मण्डुर ७ पल, पचतियार रसत ३ दिन एवं कोटकरा मूल, रसेरे (मानककन्द रसेर) ३ दिन, आदार रसेरे ३ दिन, वनओलर रसेर ३ दिन एवं सर्व्वरसेन आतपे त्रिधा त्रिधा भावयेत्। पाकार्थ गोमूत्र १६ पल पक्त्वा, दार्व्वी प्रलेपेसति। त्रिकटु, त्रिफला, चविक एइ प्रत्येक चूर्ण ४ तोला, शीते मधु २ पल दत्वा खादेत्। १ तोला, पुनर्णवा क्काथमनुपिवेत्।

## शोथशार्द्दूलतैलम्

धुस्तूरोदशमूलञ्च सिन्धुवारोजयन्तिका।
पुनर्णवाकरञ्जश्च क्षुण्णमाढ़कमाहरेत् ॥

११। मानकघृते मानकक्काथार्थमष्टगुणं जलं देयं। मानकन्दञ्च आद्रमेव गृह्णन्ति वृद्धाः। अन्येतु तन्द्रासारदर्शनात् मानकन्दस्य पलशतं तोयद्रोणे पक्ता गृह्णन्ति।

जलद्रोणे विपक्तव्यं ग्राह्यं पादावशेषितम् ।
प्रस्थञ्च कटुतैलस्य कल्कान्येतानि दापयेत् ॥
रास्नापुनर्णवादारुमूलकं नागरं कणा ।
सिद्धं तैलवरं ह्येतन्नाशयत्यस्य सेवनात् ॥
शोथं सुदारुणं घोरं वातपित्तकफोद्भवम् ।
असाध्य सर्व्वदेहस्थं सन्निपात-समुद्भवम् ॥
श्लीपदञ्च ज्वरं पाण्डुं क्रिमिदोषं विनाशयेत् ।
क्लिन्नव्रण-प्रशमनं नाड़ीदुष्ट-व्रणापहम् ।
शोथशार्द्दूलकं तैलं बलवर्णाग्निदीपनं ॥

धुस्तूरा दशमूल, पचनीया, जयन्तीफल, पुनर्णवा, लाटा करञ्जमूल एषां मिलित्वा ५ सेर, जल ४८ सेर, शेष १२ सेर, कटुतैल ४ सेर, [३ सेर] कल्क कपीठारि, पुनर्णवा, उच्चैकाठ मूला, आदा, पिप्पली एषां ३ पोवा दत्वा सिद्धं ।

## शुष्कमूलाद्यं तैलम्

शुष्कमूलक-वर्षाभू दारुरास्ना-महौषधैः ।
पक्वमभ्यञ्जनात्तैलं सशूलं श्वयथुं जयेत् ॥

तिल तैल ३ सेर, जल १२ सेर, कल्क शुष्क मूला, पुनर्णवा, उच्चैकाठ, कपीठारि, शुण्ठी एषां मिलित्वा ३ पोवा दत्वा सिद्धम ।

## पुनर्णवावलेहः

पुनर्णवामृतादारु दशमूलरसाढ़के ।
आर्द्रकस्वरसप्रस्थे गुड़स्य तु तुलां पचेत् ॥
तत्सिद्धं व्योषपत्रैलात्वक् चूर्णैः कार्षिकैः पृथक् ।
चूर्णीकृतैः क्षिपेच्छीते मधुनः कुड़वं लिहेत् ॥
लेहः पौनर्णवो नाम शोथशूलनिसूदनः ।
श्वासकासारुचिहरो बलवर्णाग्निवर्द्धनः ॥

पुनर्णवा, गुड़ूची, उच्चै, दशमूल एषां मिलि ४ सेर, जल ४८ सेर, शेष १२ सेर, आद्रक रस ३ सेर, पुराण गुड़ ५ सेर. एषां गोलयित्वा पचेत् । सिद्धे प्रक्षेपः—त्रिकटु, त्रिसुगन्धि, चविक एषां प्रति २ तोला, शीते मधु ८ पल. अतो भक्ष्यं १ तोला. तप्त जलमनुपेयं ।

## त्रिनेत्राख्यो रसः

टङ्कनं शोधितं गन्धं मृतशुल्वायसं रसम् ।
दिनैकमाद्रकद्रावैर्म्मर्द्दयं लघुपुटे पचेत् ॥
त्रिनेत्राख्यो रसो नाम त्वासाध्यं श्वयथुं जयेत् ।
माषमात्रं[वल्लमात्रं] पिवेच्चानु एरण्डशिखरीरसम् ॥

सुवगा, गन्धक, ताम्र, लोहा, रस प्रत्येकक २ तोला, सर्व्वमार्द्रकरसेन दिनं १ विमर्द्य लघु-पुटन्दद्यात् । अतो रक्तिकाद्वयं घृत-मधुभ्यां लीढ्वा, एरण्डवनपटाभ्यां क्वाथमनुपेयं ।

## एकादशायः गुटिकाः

त्रिदोषे—मृतायः पुरुषः शुल्वं खसो दरदगन्धकाः ।
गगनं पुष्परागञ्च शैलेयं चेश्वरो रसः ॥
विडङ्गत्रिफलाहिङ्गुयमानीजीरकद्वयं ।
सार्जफलं वचाशृङ्गीमरीचं पिप्पलीद्वयं ॥
चविदुरालभा वह्निः शुण्ठ्याः क्वाथेन मर्द्दयेत् ।
[अण्डचालश्च वृद्धिश्च वृच्छुन्दरक कुक्कुटं] ॥
सर्व्वशोथोद्भवं शोथं सर्व्वोपद्रवसंयुतम् ।
ये चैवान्त्रगता रोगाः तान् सर्व्वानपकर्षति ॥

लौह, रस, ताम्र, स्वर्णमाक्षिक, हिङ्गुल, गन्धक, अभ्र, रसाञ्जन शिलाजतु, सुवर्णजारण, सीसभस्म, विडङ्ग, त्रिफला, हिङ्गु, यमानी, जीरकद्वय, बोलगुलि, वच, काकटाशृङ्गी, मरिच, पिप्पली, गजपिप्पली, चविक, कुष्ठलता, चित्रक एषां प्रत्येक १ तोला, आर्द्रक क्वाथेन मर्द्दयित्वा मापक प्रमाणा वटिका कार्य्या । यथा व्याध्यनुपानैकां भक्षयेत् ।

## दशमूलहरीतकी

दशमूलकषायस्य कंसे पथ्या शतं पचेत् ।
तुलां गुडाद् घने दद्याद् व्योषक्षारं चतुःपलम् ॥
त्रिसुगन्धं सुवर्णांशं प्रस्थार्द्धं मधुनो हिमे ।
दशमूलहरीतक्यः शोथान् हन्युः सुदारुणान् ॥
ज्वरारोचक-गुल्मार्शो मेहपाण्डूदरमयान् ।
प्रत्येकमेव कर्षांशं त्रिसुगन्धमितोभवेत् ॥

कंसहरीतकी चैषा चरके पठ्यतेऽन्यथा ।
एतन्मानेन तुल्यत्वं तेन तत्रापि वर्ण्यते ॥

दशमूल मिलित ६४ पल, जल ४८ सेर, शेष १२ सेर, हरीतकी गोट १०० पाके देयः, हरीतकी भर्ज्जनार्थं तिलतैल ४ पल, पुराण गुड़ १०० पल, पक्वा घनीभूते, त्रिकटु यवक्षार एषां प्रति १ पल, त्रिसुगन्धि, नागेश्वर एषां प्रति २ तोला, सोणारु वीजचूर्ण ८ तोला, प्रक्षिप्य शीते मधु ८ पलं दत्वा विमथ्य भाण्डे स्थापयेत । अतो भक्ष्यं उष्णोदकेन एकां हरीतकीं लिहेत ॥

**इति वैद्यकसारोद्धारे शोथाधिकारः ॥**

## ४५ । अथ वृद्धिब्रध्न-चिकित्सा

तत्रादितो वातवृद्धो निग्धं स्निग्धमारुत ।
स्वेदयित्वा यथा न्याय पाययेत् स्निग्ध-रेचनं ॥

वातर परा अण्डवृद्धि हले, शिरा बलधरा सेतु दिव । तैलादियेर मृदु रेचन कराव ।

पानेवस्तौ रुवोस्तैलं पेयं वा दशकम्भमा ।

दशमूल मिलि २ तोला, क्वाथ करि एरण्ड तैल १ तोला दि खाव ।

वाताधिके—गुग्गुलं रुबुतैलं वा गोमूत्रेण पिवन्नरः ।
वातवृद्धिं निहन्त्याशु चिरकालानुबन्धिनीम् ॥

गोमूत्र २ पल, एरण्ड तैल १ तोला, गुग्गुलु १ तोला प्रक्षेप पेयं । गोमूत्र २ पल, एरण्ड तैल १ तोला पेयं । रक्तजे तेज कटाव ।

पित्तजे—चन्दनं मधुकं पद्ममुशीरं नीलमुत्पलम ।
क्षीरपिष्टैः प्रदेहः स्याद्दाहशोथरुजापहः ॥

रक्तचन्दन, यष्टिमध, पद्मकेशर, विरिणामूल, नीलगोट एतैदुग्ध-पिष्टैर्लेपः ।

पञ्चवल्कलकल्केन मघृतेन प्रलेपनम् ।
सर्व्वं पित्तहरं कार्य्यं रक्तजे रक्तमोक्षणम् ॥

आहत, बट, जरि, थैकर, डिमरु एतेषां बल्कलं पिष्ट्वा घृतेन लेपः ।

श्लेष्मवृद्धिन्तूष्णवीर्य्यैर्मूत्रपिष्टैः प्रलेपयेत् ।

त्रिकटु पिष्ट्वा गोमूत्रेण लेपः ।

पीतदारु-कषायञ्च पिबेद् वा मूत्रसंयुतम् ।

जर्ने काठ काथ करि गोमूत्र दि खाव ।

शिरोविरेकद्रव्यैर्व्वा सुखोष्णैर्मूत्रसंयुतैः ॥

सैन्धव, पिप्पली, मरिच वा विड् मोगजीरा एतैः पिष्ट्वा लेपः ।

रास्नायष्ट्यमृतैरण्ड-बलागोक्षुरसाधितः ।
क्वाथोऽन्त्रवृद्धिं हन्त्याशु रुवुतैलेन मिश्रितः ॥

रास्ना, यष्टिमधु, गुड़ूची, एरण्ड, वरियाल, गोक्षुर एषां मिलि २ तोला, काथ प्रक्षेप एरण्ड तैल १ तोला पेयं ।

तैलमेरण्डजं पीत्वा बलासिद्धपयोऽन्वितम् ।
आध्मानशूलोपचिता-मन्त्रवृद्धिं जयेन्नरः ॥

गव्यदुग्ध २ पल, वाट्यालमूल २ तोला, जल, ४ पल दुग्धावशेष प्रक्षेप एरण्ड तैल २ तोला पेयं

ऐन्द्रीमूलभवं चूर्णं रुवुतैलेन मर्द्दितम् ।
त्र्यहाद् गोपयसा पीतं सर्व्ववृद्धिनिवारणम् ॥

काटा वेङ्गेनामूल चूर्ण १ तोला, एरण्ड तैल १ तोला, दुग्ध पलेन पेयं ।

गव्यं घृतं सैन्धव-समप्रयुक्तं शम्बुकभाण्डे निहितं प्रयत्नात् ।
सप्ताहमादित्यकरैर्व्विपक्वं हन्यात् कुरण्डं चिरजं प्रवृद्धम् ॥

शाह गुल्लोबा शम्बुक, गोघृत ४ तोला, सैन्धव १ तोला, सप्त दिनानि रौद्रे शुष्कं तैल लेपनं ।

वचासर्षपकल्केन लेपो वृद्धिविनाशनः ।

बच श्वेत सर्षप जलेन पिष्ट्वा लेप. ।

लज्जा१२गृध्रमलाभ्याञ्च लेपोवृद्धि-हरः परः ।

नागिनी मूरबन्धा आलु, गृध्र विष्ठा द्वयोर्ल्लेपः ।

## शतपुष्पाद्यं घृतम्

शतपुष्पामृता-दारुचन्दनं रजनीद्वयं ।
जीरके द्वे वचानाग-त्रिफलागुग्गुलुत्वचः ।

---

१२ । लज्जा, बराहक्रान्ता ।—इति शिवदास: ।

मांसीं कुष्ठं पत्रकैला-रास्ना-शृङ्गीः सचित्रकाः ।
क्रिमिघ्नमश्वगन्धाञ्च शैलेयं कटुरोहिणीं ॥
सैन्धवं तगरं पिष्ट्वा कुटजातिविषे समे ।
एतैश्च कार्षिकैः कल्कैर्घृतप्रस्थं विपाचयेत् ॥
वृषमुण्डितिकैरण्ड-निम्बपत्रभवं रसं१३ ।
कण्टकार्य्यां रसप्रस्थं क्षीरप्रस्थ विपाचयेत् ॥
सिद्धमेतद् घृतं पीतं अन्त्रवृद्धिमपोहति ।
वातवृद्धिं पित्तवृद्धिं मेदोवृद्धिञ्च दारुणाम ॥
मूत्रवृद्धिं श्लीपदं वा यकृत् प्लीहानमेव च ।
शतपुष्पाघृतं रोगान् हन्यादेव न संशयः ॥

घृत ३ सेर, क्वाथ वासक, मुरफुला, एरगड, निम्ब, कगटकारी एषां रस ३ सेर, क्षीर ३ सेर, कल्क शुल्फा, गुड़ूची, उभैकाठ, रक्तचन्दन, रजनीद्वय, जीराद्वय, वच, नागेश्वर, त्रिफला, गुग्गुल, दालचिनि, जटामांसी, कूर, तेजपत्र, एलाचि, रास्ना, काकराशृङ्गी, चित्रक, विड़ङ्ग, अश्वगन्धा, शैलज, कटकीतिता, सैन्धव, तगर, इन्द्रयव, आतैच प्रत्येके २ तोला ।

**इति वैद्यकसारोद्धारे वृद्धयधिकारः ॥**

## ४६ । अथ व्रध्न उच्यते

अवीक्षीरेण गोधूम-कल्कं कुन्दुरुकस्य च ।
प्रलेपनं सुखोष्णं स्याद व्रध्नशूलहरं परं ॥

गोधूमचूर्णं छागीदुग्धेन लेप । एवं कुन्दुरुटी कल्केन छागीदुग्धेन तप्तं कृत्वा लेपः ।

मृतमात्रे तु वैकाके विशस्ते संप्रवेशयेत् ।
व्रध्नं मुहूर्त्तं मेधावी तत्क्षणादरुजं भवेत् ॥

मृत मात्रस्य काकस्य कोष्ठं विदार्य्य तत्र व्रध्नयुक्ताण्डं प्रवेश्य बद्धा दण्डद्वयं तिष्ठेत ।

अजाजी हवुषा कुष्ठं गोधूमं वदराणि च ।
काञ्जिकेन समं पिष्ट्वा कुर्य्याद् व्रध्न प्रलेपनम् ॥

आजनि, हवुषा, कूर, गोधूम, वदरी एतान् काञ्जिकेन पिष्ट्वा व्रध्ने लेपः ।

१३ । निम्बपत्र-भवं रसमित्यत्र, विल्वपत्र-भवं रसमिति वा पाठः ।

घृतं सौरेश्वरं योज्यं अन्त्रवृद्धिनिवृत्तये ।

सौरेश्वर घृत दिव ।

इति वैद्यकसारोद्धारे अन्त्राधिकारः ॥

## ४७ । अथ गलगण्ड-चिकित्सा

पथ्य—यवमुद्गपटोलानि कटुरुक्षञ्च भोजनं ।
छर्दिं मरक्तमुक्तिञ्च गलगण्डे प्रयोजयेत् ॥

यवमुद्ग, पटोल, जला, शुष्क द्रव्य इसव भोजन करिव । वान्ति, रक्तमोक्षण गलगण्डेर एइ क्रिया करिव ।

तण्डुलोदकपिष्टेन मूलेन परिलेपितः ।
हस्तिकर्णपलाशस्य गलगण्डः प्रशाम्यति ॥

हस्तिकर्ण, पलाशर शिपा, तण्डुलोदकेन पिष्ट्वा प्रलेपयेत ।

सर्षपान् शिग्रुवीजानि शणवीजातसीयवान् ।
मूलकस्य च वीजानि तक्रेणाम्लेन पेषयेत् ॥
गण्डानि ग्रन्थयश्चापि गलगण्डाः सुदारुणाः ।
प्रलेपात् तेन शाम्यन्ति विलयं यान्ति चाचिरात् ॥

सेवा सरियह, चजिनागुटी, शणगुटी, अतसी, यवागु, मनागुटी एतैः सममागैः अम्लतक्रेण पिष्ट्वा लेपः ।

जीर्ण-कर्कारुकरमो विड्सैन्धवसंयुतः ।
नस्येन हन्ति तरुणं गलगण्डं न संशयः ॥

पक्क तिता लाउर रस ३ महा प्रक्षेप विट् सैन्धव अनयोर्नस्यं ।

कट्फलचूर्णान्तर्गलघर्षो गलगण्डमपहरति ।

कट्फल चूर्णेनान्तर्गलघर्षणं ।

घृतमिश्रं पीतमिव श्वेतगिरिकर्णिकामूलम् ।

श्वेतापराजितामूलं पिष्ट्वा घृतमिश्रं पिवेत् ।

उपर्य्युपरि तच्छिन्द्याद् गलगण्डे शिरात्रयं ।

गलगण्ड होबा गलत उपराउपरि, शिरसकल नरणिंग खुचा मारि पत्रे दशदिने तेज गुचाव ।

### तुम्बीतैलम्

विडङ्ग-क्षार-सिन्धूत्था रास्नाग्निव्योषदारुभिः ।
कटुतुम्बीफलरसे कटुतैलं विपाचयेत् ॥
चिरोत्थमपि नस्येन गलगण्डं विनाशयेत् ॥

कटुतैल ३ सेर, तिता लाउफल रस १२ सेर, कल्क विडङ्ग, यवक्षार, सैन्धव, बच, रास्ना, चित्रक, त्रिकटु, उपकाठ एषां मिलित्वा ३ पोया ।

## ४८ । अथ गण्डमाला-चिकित्सा

माक्षिकाढ्यः सकृत् पीतः क्वाथोवरुणमूलजः ।
गण्डमालां हरत्याशु चिरकालानुबन्धिनीं ॥

वरुणमूल २ तोला, जल ४ पल, शेष १ पल मधु दत्वा पेयम ।

आरग्वधशिफां क्षिप्रं पिष्ट्वा तण्डुलवारिणा ।
सम्यङ्नस्य प्रलेपाभ्यां गण्डमालां समुद्धरेत् ॥

सोणारु मूल तण्डुल जलेन पिष्ट्वा मधु दत्वा लेपः । सोणारु मूल जलेन पिष्ट्वा नस्यम् ।

गण्डमालामयार्त्तानां नस्य कर्म्मणि योजयेत् ।
निर्गुण्ड्याश्च शिफा सम्यग्वारिणा परिपोषताम् ॥
कोषातकीनां स्वरसेन नस्यं तुम्ब्यास्तु वा पिप्पली संयुतेन ।
तैलेन वाऽरिष्टभवेन कुर्य्याद् वचोपकुल्ये सह माक्षिकेण ॥

घोषाया: कटु लाउर स्वरसेन, पिप्पली युक्तेन नस्यम् । निम्बरस तैलेन नस्यम । बच पिप्पली द्वयोश्चूर्णं माक्षिकेण पेयम ।

### निर्गुण्डी तैलम्

निर्गुण्डी स्वरसेनाथ लाङ्गलीमूल कल्कितम् ।
तैलं नस्यान्निहन्त्याशु गण्डमालां सुदारुणाम् ॥

तैल ३ सेर, पचतीया क्वाथ वा रस १२ सेर, कल्क लाङ्गलीया मूल ८ पल ।

## ४६ । अपचीव्याधौ

वनकार्पासिका मूलं तण्डुलैः सह योजितम् ।
पक्त्वा तु पूपिकां खादेदपचीनाशनाय च ॥

तण्डुल ३ पल, वनकपाहर मूल १ पल. पिष्टकं पक्त्वा खादेत् ।

शोभाञ्जनं देवदारु-काञ्जिकेन तु पेषितम् ।
कोष्णं प्रलेपतो हन्यादपचीमतिदुस्तराम् ।

शिग्रुमूल, उग्रैकाठ काञ्जिकेन पिष्ट्वा लेपः ।

सर्षपारिष्ट पत्राणि दग्ध्वा भल्लातकैः सह ।
छागीमूत्रेण संपिष्टमपचीघ्नं प्रलेपनम् ॥

सेवा सरियह, निमपात, भल्लागुटी, एतान् स्थाल्या दग्ध्वा छागीमूत्रेण लेपः ।

### व्योषाद्यं तैलम्

व्योषं विडङ्गं मधुकं सैन्धवं देवदारु च ।
तैलमेभिः शृतं नस्यात् कृच्छ्रामप्यपचीं जयेत् ।

तैल ३ सेर, जल १२ सेर, कल्क त्रिकटु, विडङ्ग, यष्टिमधु, सैन्धव, उग्रैकाठ मिलित्वा ३ पोवा ।

### चन्दनाद्यं तैलम्

चन्दनं साभयालाक्षा वचा च कटुरोहिणी ।
एभिस्तैलं शृतं पीतं समूलामपची जयेत् ॥

तैल ३ सेर, जल १२ सेर, कल्क रक्तचन्दन, शिलिखा, लाक्षा, वच, कटकीतिता मिलित्वा ३ पोवा, कोष्ठानुरूपं पेयं ।

## ५० । अथ ग्रन्थिव्याधि-चिकित्सा

ग्रन्थिष्वामेषु कुर्व्वीत भिषक् शोथप्रतिक्रियाम् ।
पक्वानुत्पाट्य [पक्वानापाट्य] संशोध्य रोपयेद् व्रण भेषजैः ॥

अपक ग्रन्थि रोगत शोथर प्रक्रिया करिव, पकनि औषध दि पूय गुचाइ शुकनि औषध दि शुकाव ।

[illegible]रोहिण्यमृता च भार्गी श्योनाकविल्वागुरु-कृष्णगन्धाः ।
गोमूत्र [गोपित्त] पिष्टाः सहतालपर्ण्या ग्रन्थौ विधेयोऽनिलजे प्रलेपः ॥

कूर, कटकीतिता, गुड़ची, अकलविर, मातघिला, वेल, आगरकाठ, सोणारु, एषा गोमूत्रेण लेपः ।

जलौकसः पित्तकृते हितास्तु क्षीरोदकाभ्या परिषेचनञ्च ।

पित्तग्रन्थित जोक खुवाव, तेन गुचाव, क्षीरोदकेर धुव ।

द्राक्षारसेनेक्षुरसेन वापि चूर्णं पिवेद्वापि हरीतकीनां ।

शिलिखाचूर्णं १ तोला, द्राक्षा, तदभावे गमारीगटो २ तोला, जल ४ पल, शेष १ पल, तैल पेयं, तथा इक्षुरसेन पेयं ।

हृतेष दोषेषु यथानुपूर्व्या ग्रन्थौ भिषक् श्लेष्म-समुत्थिते तु ।
स्विन्ने तु विम्लापनमेव कुर्य्यादङ्गुष्ठ वेणुदशदीसुतैश्च ॥

श्लेष्म दूषित ग्रन्थित शुचि नरणियेरे विन्धिव, तैल लेप दिव ; आङ्गुलियेरे, वाहरचुङ्गारे, दशदीसूत, शिलापुत्रेरे नरुणं कृत्वा स्वेदः, शनैः शनैः पीड़नं ।

विकङ्कतारग्वध काकपन्ती, काकादनी तापसवृक्षमूलैः१५ ।
आलेपयेदेनमलावुभार्गी, करञ्जकालामदनैश्च विद्वान् ॥

विकङ्कतो, सोणाग्गुटी, कोवामातुरी, दन्ती, केन्दु, पुत्रवन्ती, तिता लाउ अकलविर, लाटामूल, तगरमूल एभिः समभागैः पिष्ट्वा लेपः ।

## ५१ । अथार्व्वुदचिकित्सा

ग्रन्थ्यर्व्वुदादिजिल्लेपो मातृवाहक कीटजः१६ ।

माटिर भितरत टेमासाजि थाके, तेन पिष्ट्वा लेपः ।

१४ । हिंस्रा, कालाकड़ा । कृष्णगन्धा, कृष्ण शोभाञ्जन ।

१५ । विकङ्कतो वहिश्च वेखर [वैंचि] इति ख्यातः काकपन्ती, गुञ्जा, अस्यामूलम, काकादनी, काकतिन्दुक । तापसवृक्षः, पुत्रजीवकः, अलावु, कटुतुम्बी, काला कालाकड़ा. मञ्जिष्ठा वा ।
—चक्रदत्ते शिवदासः ।

१६ । मातृवाहककीटः मुखासादि भव पईकीट इति ख्यातः । ग्रन्थभेदे तु मातृवाहकः, मुखासादि भवपदकीटः पादगुडांपोक वा पातरापोका । —चक्रदत्तटीकायां शिवदासः ।

स्वर्जिकामूलकक्षारः शङ्खचूर्णसमन्वितः ।
प्रलेपो विहितस्तीक्ष्णो हन्ति ग्रन्थ्यर्ब्बुदादिकान् ॥

स्वर्जिकाक्षार, मूलाक्षार, शङ्खचूर्ण एषा पिष्ट्वा जलेन लेप ।

वातार्ब्बुदे चाप्युपनाहनानि स्निग्धैश्च मांसैरथवेशवारैः ।

मांसं पिष्ट्वा अर्ब्बुदे बध्नीयात ।

स्वेदं विदध्यात् कुशलस्तु नाड्या शृङ्गेन रक्तं बहुशो हरेच्च ।

सेतुदि शृङ्गे न रक्तं हरेत ।

विघृष्य चोडुम्बर-शाकगोजी पत्रैर्भृशं क्षौद्रयुतैः प्रलिम्पेत् ।

डिम्बरुपत्र, गोजिह्वा, दार्व्विक मधुना पिष्ट्वा लेप ।

लेपनं शङ्खचूर्णेन सहमूलक-भस्मना ।
कफार्ब्बुदापहं कुर्यात् ग्रन्थ्यादिषु विशेषतः ॥

शङ्खचूर्ण मूलक भस्म तयोर्ल्लेपः ।

क्रिमिजार्ब्बुदे—निष्पाव १७ पिन्याककुलत्थकल्कैर्मांसैः प्रगाढ़ैर्दधिमर्द्दितैश्च ।
लेपं विदध्यात् क्रिमयो यथात्र मुञ्चन्त्यपत्यान्यथ मक्षिकाश्च ॥

श्वेतशिम्बी, तिलकल्क, कुलत्थ, छागादि मास, दधि एतै सममागैर्लेप । वनपुरैरस तारे पात द्वयोर्ब्बन्धनं अर्ब्बुदे ।

उपोदिका काञ्जिकतक्रपिष्टा तत्रोपनाहो लवणेन मिश्रः ।
दृष्टोऽर्ब्बुदानां प्रशमाय कैश्चिद् दिनैर्दिनेरात्रिषु मर्म्मजानां ॥

पूँइशाक, काञ्जि, अम्ल, तक्र, सैन्धव मिश्रेण रात्रौ लेपः ।

स्नुही गण्डीरिका स्वेदो नाशयेदर्ब्बुदानि च ।

सिजु तपताइ सेकः ।

हरिद्रालोध्रपत्तङ्ग-गृहधूम-मनःशिलाः ।
मधुप्रगाढ़ो लेपोऽयं मेदोऽर्ब्बुदहरः परः ॥

हालधि, लोध्र, रक्तचन्दन, आलान्धु, मनःशिला एषां सममागेन मधु दत्वा लेपः ।

**इति वैद्यकसारोद्धारे गलगण्डगण्डमालापचीग्रन्थ्यर्ब्बुद-रोगाधिकारः ॥**

१७ । निष्पावः श्वेतशिम्बी, पिन्याकः तिलकल्कः

## ५२ । अथ श्लीपद-चिकित्सा

लङ्घनालेपनस्वेदरेचनै रक्तमोक्षणैः ।
प्रायः श्लेष्महरैरुष्णैः श्लीपदं समुपाचरेत् ॥

उपवास, लेप, औषध सेतु दिव, रेचन करिव, तेज कटाव, कफहारक उष्ण क्रिया आचरिव । श्लीपद बोले गोथ, कलागछिया, कलाफुलिया, ए३ सकले इयाक आचरिव ।

धुस्तूरैरण्डनिर्गुण्डी वर्षाभू शिग्रु-सर्षपैः ।
प्रलेपः श्लीपदं हन्ति चिरोत्थमपि दारुणम् ॥

धुस्तूरा, एरयड, पचतीया, पुनर्णवा, चजिना, श्वेतसर्षप एषां पिष्ट्वा लेपः ।

निष्पिष्टमारणालेन कपिकामूलवल्कलं[१८] ।
प्रलेपः श्लीपदं हन्ति बद्धमूलमपि क्षणम ॥

बान्दर केकोवामूलर वल्कल, काञ्जिक पिष्ट्वा लेप ।

हितश्चालेपने नित्यं चित्रको देवदारु वा ।
सिद्धार्थ शिग्रु-कल्को वा सुखोष्णोमूत्रपेषितः ॥

चित्रक, उभै काठ मूत्रेण पिष्टा लेपः । तथा सर्षप सोणाम्मूल मूत्रेण लेपः ।

स्नेहस्वेदोपनाहाश्च श्लीपदेऽनिलजे भिषक् ।

तैलघर्षण, सेक, औषधे लेप करिव ।

मञ्जिष्ठां मधुकं रास्ना सहिंस्रां सपुनर्णवाम् ।
पिष्ट्वारणालैर्लेपोऽयं पित्तश्लीपद-शान्तये ॥

मजाठि, यष्टिमधु, कपौठारि, कलियाकदा, पुनर्णवा एषां काञ्जिकेन पिष्ट्वा लेपः ।

पूतिकरञ्जार्द्ध-पलं रसम्वापि यथावलम् ।
पिवेत् सर्षपतैलेन श्लीपदानां निवृत्तये ॥

लाटागुटी रस ४ तोला, सर्षपतैल २ तोला उष्णं कृत्वा पेयं ।

अनेनैव विधानेन पुत्रञ्जीवकजं रसं ।

पुत्रवन्ती रस ४ तोला सर्षप तैलेन पेयम् ।

१८ । निष्पिष्टमारणालेन रूपिकामूल-वल्कलम् । —इति चक्रदत्ते पाठः ।
रूपिका अर्कमूलमिति शिवदासेन व्याख्यातम् ।

काञ्जिकेन पिवेच्चूर्णं मूत्रैर्व्वा वृद्धदारजम् ।

वृद्धदारकचूर्णं काञ्जिकेन पिवेत् ।

रजनीं गुड़संयुक्तां गोमूत्रेण पिवेन्नरः ।
वर्षोत्थं श्लीपदं हन्ति दद्रु-कुष्ठं विशेषतः ॥

हरिद्राचूर्णं, पुराण गुड़ गोमूत्रेण पिवेत् ।

गन्धर्व्वतैलभृष्टां हरीतकीं गोमूत्रेण[गोजलेन] यः पिवति ।
श्लीपदवन्धनमुक्तो भवत्यसौ सप्तरात्रेण ॥

परगाछतैलभृष्ट हरीतकी, गोमूत्र पलेन पेयम् ।

## पिप्पल्याद्यं चूर्णम्

पिप्पली-त्रिफलादारु-नागरं सपुनर्णवम् ।
भागैर्द्वि पलिकैरेषा तत्समं वृद्धदारकं ।
काञ्जिकेन पिवेच्चूर्णं कर्षमात्रं प्रमाणतः ।
जीर्णे चापरिहारं स्याद् भोजनं सार्व्वकामिकं ॥
श्लीपदं वातरोगांश्च हन्यात् प्लीहानमेव च ।
अग्निञ्च कुरुते घोरं भस्मकञ्च नियच्छति ॥

पिप्पली, त्रिफला, उबै काठ, आदा, पुनर्णवा एषां चूर्ण २ पल, दुकरीया लतार चूर्ण २ पल काञ्जिक पलेन २ तोला पेयं ।

## कृष्णाद्योमोदकः

कृष्णाचित्रकदन्तीनां कर्षमर्द्धपलं पलम् ।
द्वात्रिंशश्च हरीतक्याः गुड़स्य तु पलद्वयम् ·६ ॥
मधुना मोदकं खादेत् श्लीपदं हन्ति दुर्जयं ॥

पिप्पली २ तोला, चितामूल ४ तोला, दन्ती ८ तोला, शिलिखाचूर्ण ३२ तोला, पुराण गुड़ १६ तोला, मधुना मोदकं कृत्वा खादेत ॥

१९ । विंशतिश्च हरीतक्यो गुड़स्य तु पलद्वयम । —इति चक्रदत्ते पाठः । व्याख्यातञ्च शिवदासेन ।
विंशतिश्च हरीतक्य, इत्याकृति मानात् ।
मध्वत्र, मोदककरणोचितं देयम् ।

## विडङ्गाद्यं तैलम्

विडङ्गमरिचार्केषु नागरे चित्रके तथा ।
भद्रदार्व्वेलकाख्येषु सर्व्वेषु लवणेषु च ॥
तैलं पक्कं पिवेद्वापि श्लीपदानां निवृत्तये ॥

तिलतैल ३ सेर, जल १२ सेर, कल्क विड़ङ्ग, मरिच, अर्कमूल, शुगठी, चितामूम, उभैकाठ, एलाचि, पञ्चलवण एषां मिलि ३ पोवा, अनः पिवेत् १ तोला ।

## नित्यानन्दरसः

हिङ्गुलसम्भवं सूतं गन्धकं लोहताम्रकं ।
कांम्यं रङ्गं हरितालं तुत्थं शङ्खं वराटकं ॥
त्रिकटुत्रिफलामुस्तं विड़ङ्गं पटुपञ्चकं ।
चविशिम्वीकणामूलं हवुषा च वचा तथा ॥
शठीपाठादेवदारु-एलाचवृद्धदारकम् ।
एतानि समभागानि संचूर्ण्य वटिकां कुरु ॥
हरीतकीरसं दत्त्वा पञ्चगुञ्जामितां शुभां ।
एकैकां भक्षयेद् रोगी शीतं वारि पिवेदनु ॥
श्लीपदं कफ-वातोत्थं मांसरक्ताश्रितञ्च यत् ।
मेदोगत धातुगतं हन्ति तत्र न सशयः ॥
अर्व्वुदं गण्डमालाञ्च अण्डवृद्धिं चिरन्तनी ।
वातपित्ते वातकफे गुदरोगं क्रिमिन्तथा ॥
श्रीमद्‌गहणनाथेन निर्म्मितो विश्वसम्पदे ।
नित्यानन्दरसश्चायं श्लीपदव्याधि-शान्तये ॥

शोधित हिङ्गुल रस १ तोला, गन्धक १ तोला, लोहा १, ताम्र १, कांम्य १, राङ्ग १, हरिताल १, शोधित तुतिया १, शङ्खचूर्ण १, कड़िचूर्ण १ तोला, त्रिकटु ३, त्रिफला ३, मथा १, विड़ङ्ग १, पञ्चलोण ५, चविक १, शुकशिम्वी १, पिप्पलीमूल १, हवुषा १, वच १, केतुरो १, उभैकाठ १, एलाचि १. टुकरीया लता १ तोला । एषां समभाग चूर्णानि मिलित्वा रसेरे मर्द्दित्वा रतिदा वड़ि करि शीतजलेन एकां खादेत् ।

**इति वैद्यकसारोद्धारे श्लीपदाधिकारः ॥**

## एकादशः परिच्छेदः

# विद्रधि-व्रणोपदंशचिकित्सोपदेशः

## ५३ । अथ विद्रधि-चिकित्सा

नारेङ्गा, बाहोमफोहोरा, विहफोहोरा ६ सकलके विद्रधि बोले ।

जलौकापातनं शस्तं सर्व्वस्मिन्नेव विद्रधौ ।
मृदुर्व्विरेकोलघ्वन्नं स्वेदः पित्तोद्भवं विना ॥

जोंक मेलि तेज गुचाव, सकलो विद्रधित मृदु·चन, लघुभोजन, आखै, यूष, मयड, सेक, इसब आचरिब । पित्त विद्रधित स्वेद निदिव ।

वातघ्न मूलकल्कैस्तु वसातैल घृतप्लुतैः ।
सुखोष्णो वहलो लेपः प्रयोज्यो वातविद्रधौ ॥

विद्रधि घृतादिभिरभिषिच्य, वातघ्नैर्भद्रदार्व्यादिभिर्दशमूल सहितैः पिष्ट्वा वचाछागमांसादिभिः तैल घृत परिप्लुतैरुष्णैर्वहलोलेपः ।

स्वेदोपनाहाः कर्त्तव्याः शिग्रुमूलसमन्विताः ।
यव-गोधूम-मुद्गैश्च सिद्ध पिष्टैः प्रलेपयेत् ॥
विलीयते क्षणेनैवमपक्वश्चैव विद्रधिः ।

यव, गोमधान, मुद्ग पिष्ट्वा पोटलं बद्ध्वा, तप्तं कृत्वा तेन स्वेद, एष बहुलमतः स्वेदः जलौकमित्यादि ।

जलौकषस्य दोषगुणमाह—

जलौका द्वादशप्रोक्ता सविषा निर्व्विषास्तथा ।
शस्ताः पीतोदरास्थूला श्यामावृत्ताकषायिका ॥
तासु शस्तासितक्रोरा काञ्जिके वा परिप्लुते ।
जले च प्लाविता योज्या चीरसर्पिरसृक्च्युतैः ॥

पेट हालधं या, गा डाङर, छुटि, कपिलवर्णा हले प्रशस्त । तस्य शोधनं अल्प उष्ण जलत १ बार, काञ्जित १ बार परा आनि, जलेरे प्रक्षालन करि लगाव ।

त्याज्या रक्ता सिता कृष्णा रोमशास्थूलपिच्छिलाः ।

रक्ता, वगा, कृष्णा, रोमयुक्ता, अतिडाङर, अति पिच्छिल इसब दूषित ।

कुर्य्युस्ताः श्वयथुं दाहं ज्वरं कण्डूं वमिं भ्रमम् ।

तस्योपशममनमाह—शिरीषकटभीपार्थशेलुक्षीरद्रुमत्वचः ।

विषं जलौकषं हन्ति प्रयुक्तां तस्य लेपतः ॥

शिरीषगुटी, कटकीतिला, अर्ज्जुन, ओदाल, वर आहत जरि एषां पिष्ट्वा लेपः ।१

## पुनर्णवादिः

पुनर्णवादारुविश्व-दशमूलाभयाम्भसा ।

गुग्गुलुं रुवुतैलं वा पिबेन्मारुतविद्रधौ ॥

पुनर्नवा, उजैकाठ आदा, दशमूल, शिलिखा, एषां मिलि २ तोला, काथ करि चाकिलै, प्रक्षेप गुग्गुल ८ रति अथवा एरण्ड तैलं दत्वा पेयं ।

पैत्तिके शर्करालाजामधुकैः सारिवायुतैः ।

प्रदद्यात् क्षीरपिष्टैर्वा पयस्योशीरचन्दनैः ॥

शर्करा, आखै, यष्टिमधु, श्यामालता, एतै समभागैः क्षीरपिष्टैर्ल्लेप । अथवा क्षीरकाकोली, विरिणा, रक्तचन्दन एतैः क्षीरपिष्टैर्ल्लेपः ।

पिबेद्वा त्रिफलाक्वाथं त्रिवृत्कल्काक्षसंयुतम् ।

पञ्चवल्कलकल्केन घृतमिश्रेण लेपनम् ॥

त्रिफला क्वाथ ? पल, त्रिवृत्चूर्ण १ तोला प्रक्षिप्य पेयम । वट, अश्वत्थ, जरि, डिमरु, थैकर एतैः क्षीरपिष्टैर्ल्लेपः ।

यष्ट्याह्वसारिवा दूर्व्वा नलमूलैः सचन्दनैः ।

क्षीरपिष्टैः प्रलेपस्तु पित्तविद्रधिशान्तये ॥

यष्टिमधु, शीताभेदेली, दूर्व्वा, नलमूल, रक्तचन्दन, एतैः क्षीरपिष्टैर्ल्लेपः ।

इष्टका सिकता लोह-गोशकृत्तुषपांशुभिः ।

मूत्रपिष्टैश्च सततं स्वेदयेत् श्लेष्मविद्रधिं ॥

इटा, वालुका, लौहचूर्ण, गोवर, तुष, धुना एषां चूर्णानि गोमूत्रेण मिश्रयित्वा एरण्डपत्रैर्व्वेष्टयित्वा तप्तं कृत्वा स्वेदयेत् लेपो वा ।

१। टोपाखलु, खुद खजुर औषध । तुतिया १ गन्धक १ मरिच १ आकणर पकापात १ शुंसुञ्ञियालतार पकापात १ डंपाइ तितार शिपा १ एइ छय द्रव्यक खुन्दि केचा तेलत मारि ३ दिन थै गात घहिब ।

त्रिफलाशिग्रुवरुण-दशमूलाम्भसा पिवेत् ।
गुग्गुलुं मूत्रयुक्तं वा विद्रधौ कफसम्भवे ॥

त्रिफला, सजिनाछाल, वरुणछाल, दशमूल, एषां २ तोला, जल ४ पल शेष १ पल, परयड तैल पिष्टित गुग्गुल ३२ रति, गोमूत्र तोलकेन पेयम् ।

पित्तविद्रधिवत् सर्व्वां क्रियां निरवशेषतः ।
विद्रध्योः कुशलः कुर्य्याद् रक्तागन्तु निमित्तयोः ॥

रक्तज विद्रधित, आगन्तु विद्रधित पित्त विद्रधिर क्रिया करिव ।

शोभाञ्जनकनिर्य्यूहो हिङ्गुसैन्धवसंयुतः ।
अचिराद् विद्रधीन् हन्ति प्रातः प्रातर्निषेवितः ॥

शिग्रुमूल २ तोला, जल ४ पल, शेष १ पल, हिङ्गु २ रति, सैन्धव १६ रति पेयं ।

शिग्रुमूलं जले धौतं दरपिष्टं प्रगालयेत्[२] ।
तद्रसं मधुना पीत्वा हन्त्यन्तर्विद्रधिं नरः ॥

शिग्रुमूलं जलप्लुतं आपोथ्य पीड़यित्वा, रसमाकृष्य रसं गृहीत्वा १ पलं, मधु तोलकेन पेयं ।

श्वेतवर्षाभुवोमूलं मूलं वरुणकस्य च ।
जलेन क्वथित पीतमपक्वं विद्रधिं जयेत् ॥

बगा पुनर्णवा वरुणछालद्वयोः क्वाथः ।

शमयति पाठामूलं चौद्रयुतं तण्डुलाम्बुनापीतम् ।
अन्तर्भूतं विद्रधिमुद्धतमाश्वेव मनुजस्य च ॥

आकलविन्धि मूल १ तोला, मधु १ तोला, तगडुलोदकेन पलेन पेयम् ।

## वरुणादिक्काथः

वरुणादिगणक्काथमपक्वेऽभ्यन्तरोत्थिते ।

अन्तर विद्रधि नपकि यदि केचाइ थाके सि सकलत वरुणादि काथ खुवाव । बाहले तुलि पकनि लेपदि पकाव, पूय निवृत्त्यर्थे ।

वरुणादिगणमाह—वरुणार्त्तगलः शिग्रु-जयन्तीमधुशिग्रुकाः ।
मेषभृङ्गीकरञ्जास्तु विम्बाग्निमन्थमोरटाः ॥

---

२ । शिग्रुमूलमित्यादौ दरपिष्टं, ईषत् पिष्टं । —इति शिवदासेन व्याख्यातम् ।

सैरीयोवशिरो दर्भोवरी वेल्लकचित्रकौ ।
विल्वश्चैवाजशृङ्गी च बृहतीद्वयमेव च ॥
वरुणादिगणो ह्येष कफमेदोनिरोधनः ।
निहन्ति च शिरःशूलं गुल्माभ्यन्तरविद्रधिं ॥

वरुण १, नीलझिंटी १, सोणा १, सोणारुगुटी, जयन्तीफुल, चजिना, मेषशृङ्गी, लेटागुटी, कोवामातुरी, भातघिला, पीतझिंटी, बरियाल, कुशमूल, शतमूल, हातीपिप्पली, चित्रक, बेल, अजाशृङ्गीभेदः, कण्टकारी, भेकुरि एषां मिलि २ तोला, जल ४ पल, शेष १ पल ।

प्रियङ्गुधातकीलोध्रं कट्फलं तिनिशत्वचम् ।
एतैस्तैलं विपक्तव्यं विद्रधौ रोपणं परम् ॥

कटु तैल ३ सेर, जल १२ सेर, कल्क वनमाला, धाइफुल, भृमरति, काउफल, आचुकाठ एषां मिलित्वा ३ पोवा ।

**इति वैद्यकसारोद्धारे विद्रध्यधिकारः ॥**

## ५४ । अथ व्रणशोथ-चिकित्सा

आदौ विम्लापनं कुर्य्याद् द्वितीयमवसेचनम् ।
तृतीयमुपनाहञ्च चतुर्थीं पाटनक्रियाम् ॥
पञ्चमं शोधनञ्चैव षष्ठं रोपणमिष्यते ।
एते क्रमा व्रणस्योक्ताः सप्तमो वैकृतापहः ॥३

प्रथम, द्वितीय, तृतीयत लेपादि पकाव । चतुर्थत पूय हले चारण करिव, पञ्चमत पूयस्राव करिव, षष्ठत शुकनि दि घा शुखाव, सप्तमत सवर्णाकरण लेपादि वर्णा कराव ।

धुस्तूरमूलं सलवणं व्रणस्थित्यारम्भे ।
दत्तं लेपान्नियतं व्रणशोथ हरति बहुदुष्टम् ॥

कृष्णधुस्तूर मूलं पिष्ट्वा सैन्धवं दत्वा, किञ्चिदुष्णं कृत्वा लेपः ।

३ । आदौ विम्लापनमित्यादि सुश्रुतस्य । अनेन च वाक्येन चिकित्सितस्थान वक्ष्यमाण षष्ट्युपक्रमाणामन्तर्भावेन सप्तत्वं सुखावबोधार्थं सूत्रस्थाने सुश्रुतेनोच्यते, तेन विम्लापनमिह न केवल-मङ्गुष्ठादि मर्द्दनमात्रे परिभाषितं ग्राह्यं, किन्तु विम्लाप्यते अनेनेति व्युत्पत्त्या वहिः परिमार्जनरूपे शमने शोथविलयन करे । प्रलेप परिषेकाभ्यङ्गादावपि वर्त्तते ॥ —इति चक्रदत्ते शिवदासः ।

मातुलुङ्गाग्निमन्थौ च भद्रदारु-महौषधम् ।
अहिंस्रा४ चैव रास्ना च प्रलेपो वातशोथहा ॥

सोलङ्गमूल मातघिला, उषैकाठ, आदा, कूर, कपौठारि समभाग कृत्वा लेपः ।

दूर्व्वा च नलमूलञ्च मधुकं चन्दनं तथा ।
शीतलाश्च गणाः सर्व्वे प्रलेपः पित्तशोथहा ॥

दूर्व्वामूल, नलमूल, यष्टिमधु, रक्तचन्दन एतानि पिष्ट्वा जलेन लेपः ।

न्यग्रोधोडुम्बराश्वत्थप्लक्षवेतसवल्कलैः ।
समर्पिष्कैः प्रलेपः स्याच्छोथ-निर्व्वापणः स्मृतः ॥

बट, डिमरु, आहत, जरि, थैकर एतान् पिष्ट्वा घृतेन लेपः ।

न्यग्रोधोडुम्बराश्वथप्लक्षवेतसशेलुभिः ।
चन्दनद्वय मञ्जिष्ठा-यष्टि-पुराणगैरिकैः ॥
शतधौत घृतोन्मिश्रो लेपो रक्तप्रसादनः ।
दाहपाकरुजास्राव-शोथ-निर्व्वापणः परः ॥

बट, डिमरु, आहत, जरि, थैकर, ओदाल, रक्तचन्दन, जातिचन्दन, सोलङ्गमूल, मजाठि, यष्टिमधु, गेरोवामाटि एतैः समभागैः शतधौत घृतैर्लेपः । १०० वार धोवा घृतेरे लेप ।

आगन्तौ शोणितोत्थे च एष एव क्रियाक्रमः ।

अजकदा दोषर मरातेजर परा शोथ हने एइ क्रिया करिव ।

अजगन्धाश्वगन्धा च कालासरलया सह ।५
एकेशिकाजशृङ्गी च प्रलेपो श्लेष्मशोथहा ॥

वनयनी, अश्वगन्धा, कलियाकदा, सरलकाठ, तेड़ियाधुना, काकटाशृङ्गी, एभिः समभागैर्लेपः ।

## चतुर्दशाङ्गलेपः

पुनर्णवादारुशिग्रुदशमूल-महौषधैः ।
कफवातकृते शोथे लेपः कोष्णो विधीयते ।

पुनर्णावा, उषैकाठ, चजिना, दशमूल, आदा एतैर्जलपिष्टै र्लेपः ।

४। अहिंस्रा कुड़कराणि कालाकड़ाभेदः। —इति शिवदासः।

५। अजगन्धा, छागलगन्धा, इति भानुमती, अन्ये क्षेत्रयमानिकेत्याहु.। काला, अहिंस्रा, कालाकड़ाभेदः, सरला सरल एव। एकेशिका त्रिवृदिति, भानुमती। अजशृङ्गी कर्कटशृङ्गीति भानुमती चन्द्रिका च। —इति चक्रदत्तटीकायां शिवदास ।

न रात्रौ लेपनं दद्याद्दत्तञ्च पतितं तथा ।
न च पर्य्युषितं शुष्यमानं नैवाव-धीरयेत् ॥

रात्रि लेप निदिव, शुकाइ सरि परे । तस्य दृष्टान्तमाह । रात्रि अन्धकारत नदैले । निद्रात चिन नापाइ वस्त्रादित लागे । कुमारे पागशाल ओपर लिपि, अभ्यन्तरत अग्नि दिले शुकाइ शुकाइ माने थाके, अग्निशिखा वाढ़िव नोवारे ; शुकाले बोका सरि परे, तापो वाहिर हय, अतएव ताप वाहिर हले व्रण पाक नापाइ वस्त्रादित लागे । वर्त्तुलिं कृत्वा दद्यात , पूय पीड़नार्थं ।

रक्तावसेचनं कुर्य्यादादावेव विचक्षणः ।

व्रणर आदिते रक्त गुचाव ।

शोथे महति संरब्धे वेदनावति वा व्रणे ।
यो न याति शम लेप-स्वेदसेकापतर्पणैः ॥
सोऽपि नाशं व्रजत्याशु शोथः शोणित-मोक्षणात् ॥६

यि व्रणत महाशोथ उसहे, ज्वर, दाह, ताप, अति वेदना करे । लेपादित, स्वेदत औषधत, इसकल क्रियात यि व्रण शाम्य नहय सेइ कालत शोणित गुचाइ क्रिया करिव ।

तस्योपनाहैः पक्वस्य पाटन हितमुच्यते ।

दिवसत पकनि लेपदि, औषध म्याइ बन्धन करि थव नेत्रे पके ।

## व्रणचातुर्भद्रकम्

पटोलपत्र-विश्वाब्द-पर्पटस्य सृतं जलं ।
दीपनं व्रणपाकः स्यात् कफकण्डूरुजापहं ॥

पटोल, आदा, मथा, पितकपरा एषां मिलि २ तोला, जल ४ पल, शेष १ पल, कोष्णं पेयं ।

इति वैद्यकसारोद्धारे व्रणशोथाधिकारः ॥

## ५५ । अथ दग्धव्रणे

न प्रशाम्यति यः शोथः प्रलेपाद् रक्तमोक्षणात् ।
द्रव्याणि पाचनीयानि दद्यात्तत्रोपनाहनैः ॥

यि व्रण शाम्य नहइ रक्तमोक्षण करि, औषध बान्धि पकाव ।

६ । पक्वतश्च क्रियाः सर्व्वा रक्तमोक्षणमेकतः ।
निवारणाय पाकस्य वेदनोपशमाय च ।
अचिरोत् पतिते शोथे कार्य्यं शोणितमोक्षणम् ॥ —इति चक्रदत्तः ।

तैलेन सर्पिषा वापि ताभ्यां वा शक्तुपिण्डिका ।
सुखोष्णा शोथ पाकार्थं उपनाहः प्रशस्यते ॥

यवचूर्ण तिल तैलेरे मिहलाइ खोलात किञ्चित् उष्ण करि शोथ व्रणत वान्धिव । पाक करे, वाते । अतएव सर्पिषा यवचूर्णं मिश्रयित्वा, सुखोष्णमुपनाह लेप. ।

पित्ते—सतिला-सातसीवीजा दध्यम्लाशक्तुपिण्डिका ।
सकिण्व७कुष्ठलवणा शस्ता स्यादुपनाहने ॥

यवचूर्ण, तिल, अतसीफुलर गुटी, किण्व, कुर, सैन्धव, सममाग पिष्ट्वा अम्लदधि युक्त उपनाह लेपः ।

वालवृद्धासहक्षीण-भीरूणां योषितामपि ।
मर्म्मोपरि च जाते तु पक्वे शोथे च दारुणे ॥

बाल, वृद्ध, सहिव नोवारा, वलक्षीण, भययुक्त स्त्रीलिङ्गत, कुत्सित, उरुत, अपक्कत, कठिन, टान महन्त उसहा ।

अस्योपायः—गवां दन्तं जले पिष्टं [घृष्टं] विन्दुमात्र-प्रलेपनात् ।
अत्यर्थं कठिने चापि शोथे पाचनभेदनं ॥

गोदन्त जलत पिहि राति लेप दिव ।

कटुतैलान्वितैर्लेपात् सर्पनिर्म्मोकभस्मभिः ।
चयः शाम्यति गण्डस्य प्रकोपः स्फुटति द्रुतम् ॥

सापर कलप पुरि भस्मकरि तिल तैलेन लेपः । अनेक विष व्रणक पूय स्राव करे ।

द्रव्याणां विहितानान्तु त्वङ्मूलानि प्रदापयेत्८ ।
यवगोधूममाषाणां चूर्णानि च समासतः ॥

वरियाल मूल, छाल, यव गोमधान, चूर्ण पिष्ट्वा पूय पीड़नार्थो लेपः ।

ततः प्रक्षालनं क्वाथः पटोलनिम्बपत्रजः ।
निम्बपत्रतिलैः कल्को मधुना क्षतशोधनः ॥

निमपात, पटोलमूल क्वाथ करि धुव । निमपात तिलवाटि मधु दत्वा लेपः ।

७ । किण्वं सुरावीजमिति शिवदासः चक्रदत्ते ।

८ । द्रव्याणां पिच्छिलानान्तु, त्वच्मूलानि निपीड़नम् । पीड़न द्रव्याययाह द्रव्याणामित्यादि पिच्छिलानामिति शेलु-शाल्मली प्रभृतीनामित्यादि । —चक्रदत्ते पाठः ।

तिलकल्कः सलवणो द्वे हरिद्रे त्रिवृद्घृतम् ।
मधुकं निम्बपत्राणि लेपः स्याद् व्रणशोधनः ॥

कृष्णतिल, हरिद्रा, आवुकाठ, तेड़ियाधुना, यष्टिमधु, निम्बपत्र एतैः सममागैः सैन्धव घृत पिष्टै लेंपः ।

निम्बपत्रं तिला-दन्ती त्रिवृत् सैन्धव-माक्षिकम् ।
दुष्ट व्रण-प्रशमनो लेपः शोधन-केशरी ॥

निम्बपत्र, तिल, दन्ती, तेड़िया समं पिष्ट्वा सैन्धव मधु मिश्रैर्लेपः ।

एकं वा सारिवामूलं सर्व्वं व्रण-विशोधनम् ।

श्वेतमेदेली मूल लेपः ।

मधुयुक्ता शरपुङ्खा सर्व्वव्रण-रोपणी कथिता ।

चकुसिया लतामूल मधु दत्वा लेप. ।

पञ्चवल्कलचूर्णैर्व्वा शुक्तिचूर्णसमायुतैः ।
धातकीचूर्ण-लोध्रैर्व्वा तथा रोहन्ति ते व्रणाः ॥
व्यायामञ्च न सेवेत भग्नोऽस्वान्नमेव च ॥ इति वर्ज्ज्यं ।

**इति वैद्यकसारोद्धारे [भग्नाधिकारः] व्रणाधिकारः ॥**

## ५६ । अथ नाड़ीव्रण-चिकित्सा

नाड़ीनां गतिमन्विष्य शस्त्रेणापाट्य कर्म्मवित् ।
सर्व्वव्रणक्रमं कुर्य्याच्छोधनं रोपणादिकम् ॥

नाड़ीव्रण इन्दुरियाके बोले । नरगिरे खुचा मारि तेज गुचाइ सकलो क्रिया व्रणर करिव । पूय गुचाव, लेपदि शुकाव ।

नाड़ीं वातकृतां साधुपाटितां लेखयेद् भिषक् ।

वातिक नाड़ीव्रणत खुचा मारि लेप दिव ।

प्रत्यक् पुष्पीफलयुतैस्तिलैः पिष्टैः प्रलेपयेत् ।

अपामार्ग बीज तिल समं पिष्ट्वा तु लेपः । केचिदत्र सैन्धवं प्रक्षिपन्ति ।

पैत्तिकीं तिलमञ्जिष्ठा-नागदन्ती-निशाद्वयैः ।

तिल, मजाठि, हातीशुरीया, हरिद्राद्वयं पिष्ट्वा लेपः ।

श्लैष्मिकी तिलयष्ट्याह्व-निकुम्भारिष्ट-सैन्धवैः ॥

तिल, यष्टिमधु, सोन्दर परवाल, निम, सैन्धव, एतैर्लेपः ।

शल्यजां तिलमध्वाज्यैर्लेपयेच्छिन्न-शोधिताम् ।

तिल मधु घृत एतैर्लेपः ।

जात्यर्कसम्पाककरञ्जदन्ती-सिन्धूत्थसौवर्च्चलयावशूकैः ।
वर्त्तिः कृता हन्त्यचिरेण नाड़ीं स्नुक्क्षीरपिष्ट्वा सह चित्रकेण ॥

जाइपत्री, आकण, सोणारुपात, लेटागुटी, दन्तीमूल, सैन्धव, सौवर्च्चल, यवक्षार, एतैः सममागैः पिष्ट्वा किञ्चिज्जलं दत्वा [ पक्त्वा ] वर्त्तिः कार्य्या ।

## सप्ताङ्गगुग्गुलुः

गुग्गुलुस्त्रिफलाव्योषैः समांशैराज्ययोजितः ।
नाड़ीदुष्टव्रणैः शूलभगन्दरविनाशनः ॥

गुग गुलु ४ तोला, त्रिफलाचूर्ण ४ तोला, त्रिकटुचूर्ण ४ तोला, वटीकरणयोग्यं घृतं दत्वा वटिकाः कार्य्याः । अतो मद्यं तप्तोदकमनुपेयम ।

## भल्लातकतैलम्

भल्लातकार्कमरिचैर्लवणोत्तमेन सिद्धं विड़ङ्गरजनीद्वयचित्रकैश्च ।
स्यान्मार्कवस्य च रसेन निहन्ति तैलम् नाड़ी कफानिलकृतामपचीं व्रणांश्च ।

तिलतैल ३ सेर, भृङ्गराज रस १२ सेर, कल्क भल्ला, आकण, मरिच, सैन्धव, विड़ङ्ग, हरिद्राद्वय, चितामूल एषां मिलि ३ पोवा, अत्र निर्गुण्डी तैलं योज्यं ।[१]

नालुका १, तिता मोलरगुटी ॥०, रक्ता एरार शिपा १, तिनिक बाटि केउफाले लिपि दिब ।

## इति वैद्यकसारोद्धारे नाड़ीव्रणाधिकारः ॥

१ । निर्गुण्डीतैलम्—समूलपत्रां निर्गुण्डीं पीड़यित्वा रसेन तु ।
तेन सिद्धं समं तैलं नाड़ीदुष्टव्रणापहम् ॥
हितं पामापचीनान्तु पानाभ्यञ्जन नावनैः ।
विविधेषु च स्फोटेषु तथा सर्व्वव्रणेषु च ॥ —इति चक्रदत्तः ।
हंसपादीतैलम—हंसपाद्यरिष्ट—पत्रं जातिपत्रं ततो रसैः ।
तद् कल्कैश्च पचेत् तैलं नाड़ीव्रणविशोधनम् ॥ —इत्यपि चक्रदत्तः

## ५७। अथ भगन्दर-चिकित्सा

गुदस्य श्वयथुं दृष्ट्वा विशोष्य शोधयेत् ततः।
रक्तावसेचनं कुर्य्याद् यथापाकं न गच्छति॥

लङ्घन करि शुद्ध करिव, विरेचन करिव, तेज कराव, एतैर्व्विशोधयेत।

वटपत्रेष्टकाशुण्ठी गुडूच्यः सपुनर्णवाः।
सुपिष्टाः पिड़कारम्भे लेपः शस्तो भगन्दरे॥

वरपात, इटा, गुड़ूची पुनर्णवा, एतैः सममागैः पिष्ट्वा लेपः।

कुष्ठ त्रिवृत् तिलादन्ती-मागध्यः सैन्धवं मधु।
रजनी-त्रिफलातुत्थ हितं व्रणविशोधनम्॥

कुर, तेड़ियाधुना, तिल, सोन्दर पलाल, पिप्पली सैन्धव, मध, हरिद्राद्वय, त्रिफला, तुतिया एतैः सममागैः पिष्ट्वा शोधनार्थो लेपः। पूय निर्गमनम्।

तिलाभया[कुष्ठ]लोध्रमरिष्टपत्रं निशेवचालोध्रमल्लारधूमः।
भगन्दरे नाड्युपदंशयोश्च दुष्टव्रणे शोधन रोपणोऽयं १०॥

तिल, शिलिग्वा, भूमरति, निमपात, हरिद्राद्वय एतैर्लेपः। वच, भूमरति, आलान्धु एतैर्लेपः।

खराश्वपक्क[भूनाग]भूरोह-चूर्णलेपो भगन्दरे।

गर्द्दभरक्त पक्क केंचु चूर्णेन लेपः।

हन्ति दन्त्यग्न्यतिविषा लेपस्तद्वच्छुनोऽस्थिवा।

दन्ती, चिता, आतैच, त्रिफला रसेन लेपः। कुक्कुरर अस्थि त्रिफला रसेन लेपः।

त्रिफलारस-सम्पिष्टं विड़ालास्थि-प्रलेपनम्।
भगन्दरं निहन्त्याशु दुष्टव्रणहरं परं॥

त्रिफला रसेन मार्ज्जारास्थि लेपनं।

### नवकार्षिकगुग्गुलुः

त्रिफला पुर-कृष्णानां त्रिपञ्चैकांशयोजिता।
गुड़िकाशोथगुल्मार्शो भगन्दरवतां हिता॥

१०। तिल इत्यादौ कुष्ठस्थाने लोध्रपाठे, लोध्रद्वयं शावर, पट्टिकाख्य भेदाद् ग्राह्यमिति।
—शिवदासः चक्रदत्ते।

त्रिफलाचूर्ण ६ तोला, गुग्गुल १० तोला, पिप्पलीचूर्ण २ तोला, घृतेन पिष्ट। अतो अष्टमाषाश्च तप्तजलेन पिबेत्।

जम्बुकमांसं भक्षयेत् प्रकारैर्व्यञ्जनादिभिः।

## विष्यन्दनतैलम्

चित्रकार्कौ त्रिवृत् पाठे मलपूहयमारकौ।
सुधां वचां लाङ्गलिकी हरितालं सुवर्च्चिकाम्॥
ज्योतिष्मतीञ्च संहृत्य तैलं धीरो विपाचयेत्।
एतद्विष्यन्दनं नाम तैलं दद्याद् भगन्दरे।
शोधन रोपणञ्चैव सवर्ण-करणं तथा॥

तिलतैल ३ सेर, जल १२ सेर, कल्क चिता, आकण आठा, तेड़िया, आकलविन्धि मूल, डिमरु, करवीर, सिजु आठा, वच, लाङ्गलिया, हरिताल, सर्जिकाक्षार, लता फुटुकि वा चै एषां मिलि ३ पोवा।

## करवीराद्यं तैलम्

करवीर-निशा-दन्ती-लाङ्गली-लवणाग्निभिः।
मातुलुङ्गार्कवत्साह्वैः पचेत् तैलं भगन्दरे॥

तिलतैल ३ सेर, जल १२ सेर, कल्क करवीर, दन्ती, हरिद्रा, लाङ्गलिया, सैन्धव, चित्रक, सोलङ्गमूल, अर्कक्षीर एषां मिलि ३ पोवा।

## निशाद्यं तैलम्

निशार्कक्षीरसिन्ध्वग्नि-पुराश्वहनवत्सकैः।
सिद्धमभ्यञ्जने तैलं भगन्दर-विनाशनम्॥

तिलतैल ३ सेर, जल १२ सेर, कल्क हालधि, आकण आठा, सैन्धव, चित्रक, गुग्गुल, अश्वघ्न, करवीर, तस्य क्षीरं कुटज एषां मिलि ३ पोवा।

## कालाग्निरुद्रोरसः

शुद्धसूतं समं गन्धं मृतनागं सतुत्थकं।
जीरकं सैन्धवं तुल्यं तिक्त-कोषातकीद्रवैः॥

पिष्टं तल्लेपनाद्धन्ति भक्षणाच्च भगन्दरं ।
रसः कालाग्निरुद्रोऽयं गुञ्जैकं मृत्युजिद् भवेत् ॥

शोधित रस १ तोला, शोधित गन्धक १ तोला, सीसभस्म १ तोला, शोधित तुतिया १, मोगजीरा १, सैन्धव १, तितालाउ रसे मर्दि आद्रक रसेन १ रतिके खाव, लेप दिव ।

व्यायामं मैथुनं युद्धं पृष्ठयानं गुरूणि च ।
सम्वत्सरं परिहरेदुपरूढ़-व्रणो नरः ॥

**इति वैद्यकसारोद्धारे भगन्दराधिकारः ॥**

## ५८ । अथोपदंश-चिकित्सा

उपदंश मामरिक बोलं । तारे अनेकविध, लिङ्गत, अगडत, गुह्यत सकलो शरीरे हय । शिर मेलाव, जोक मेलाव । शोणित गुचाइ क्रिया करिव ।

पटोल-निम्ब-त्रिफला-गुड़ूचीक्वाथं पिबेद्वा खदिरासनाभ्याम् ।
सगुग्गुलुं वा त्रिफलायुतं वा सर्व्वोपदंशापहरः प्रयोगः ॥

पटोल, निम्ब, त्रिफला, गुड़ूची एषां मिलि २ तोला, जल ४ पल, शेष १ पल । एवं खदिरासनयोः गुग्गुलुं प्रक्षिप्य पेयं । अथवा त्रिफला क्वाथे गुग्गुलुं प्रक्षिप्य पेयं ।

वातिके—प्रपौण्डरीकं मधुकं रास्ना कुष्ठ पुनर्णवा ।
सरलागुरुभद्राख्यैर्वातिके लेप सेचने ॥

पद्ममूल, मधुयष्टि, कपौठारि, कूर, पुनर्णवा, सरल, आगर, उर्ज्जकाठ एतान् पिष्ट्वा लेपः । अथवा क्काथं कृत्वा प्रक्षालयेत् ।

पित्ते—गैरिकाञ्जन-मञ्जिष्ठा मधुकोशीरपद्मकैः ।
सचन्दनोत्पलैः स्निग्धैः पैत्तिकं सम्प्रलेपयेत् ॥

गेरुमाटी, ( अञ्जन ) रसाञ्जन, मजाठि, यष्टिमधु, विरिणामूल, पद्मकाष्ठ, रक्तचन्दन, भेटमूल, एभिः समभाग पिष्टैः घृतेन लेपः ।

कफे—आरग्वधादि-क्वाथेन परिषेकञ्च कारयेत् ।
त्रिफलायाः कषायेण भृङ्गराजरसेन वा ।
व्रणप्रक्षालनं कुर्य्यादुपदंशप्रशान्तये ॥

त्रिफला क्वाथेन अथवा भृङ्गराजरसेन प्रक्षाल्यम् ।

दहेत् कटाहे त्रिफलां साममी-मधुसंयुता।
उपदंशे प्रलेपोऽयं सद्यो रोपयति व्रणम्॥

त्रिफला चम्त पुरि सेइ छाइ ( भस्म ) मधु दत्वा लेपः।

रसाञ्जनं शिरीषेण पथ्यया वा समन्वितम्।
सक्षौद्रं वा प्रलेपेन सर्व्वलिङ्गगदापहम्॥

शिरीष बल्कलं पिष्ट्वा किञ्चिद् रसाञ्जनं दत्वा लेपः। एवं हरीतकीं पिष्टा, रसाञ्जनं दत्वा मधु दत्वा लेपः।

लेपः पूगफलेनाश्वमारमूलेन वा तथा।
सेवेन्नित्यं यवान्नञ्च पानीयं कौपमेव च॥

यव चाउलर अन्न खाव, कुपर जल खाव।

## करञ्जकाद्यं घृतम्

करञ्जनिम्बार्जुनशालजम्बूवटादिभिः कल्ककषायसिद्धम्।
सर्पिर्निहन्यादुपदंशदोषं सदाह-पाकं श्रुतिरागयुक्तम्॥

घृत ३ सेर काथ, लेटागुटी, निमपात, अर्ज्जुन, शालमज्जा, जम्बूछाल, वट, आहत, जरि, डिमरु, थैकर एषां मिलित ५ सेर, जल २४ सेर, शेष ६ सेर, एषां कल्क ३ पोवा मद्यं।

## आगारधूमाद्यं तैलम्

आगारधूम११ रजनी-सुराकिण्वञ्च तैस्त्रिभिः।
भागोत्तरैः पचेत् तैलं कण्डूशोथरुजापहम्॥
शोधनं रोपणञ्चैव सवर्णकरणं तथा।

११। आगारधूमेति—आगारधूमोऽन्न-धूमः। किण्वं मुराबीजं। भागोत्तरैरिति तैलप्रस्थे तिलतैल ४ सेर।

| | | | | |
|---|---|---|---|---|
| आगारधूमञ्च | १ पल, | १ कर्ष, | ५ माषा, | ३ रक्ति |
| हरिद्रा | २ ,, | २ ,, | १० ,, | ६ ,, |
| सुराबीज | ३ ,, | ३ ,, | १५ ,, | ९ ,, |

एवं स्नेह-पादिकत्वं कल्कस्य, पाकस्तु जलेनैव। —शिवदासः।
अर्शसां छिन्न-दग्धानां क्रिया कार्य्योपदंशवत्॥ —इति चक्रदत्तः।

व्याधिवारणस्य उपायः—दयादानं द्विजार्च्चा च अतिथीनाञ्च पूजनं ।
अर्च्चनञ्चैव देवानां ग्रहाणां प्रिणनं तथा ॥
ग्रहानुद्दिश्य होमश्च रुद्राध्यायनमेव च ।
गवां शुश्रूषणञ्चैव गुरूणामतिसेवनं ॥
इत्यादि पुण्ये विहिते व्याधिशान्तिः प्रजायते ।
कुलत्थाकृतयः केचित् केचित् पद्मदलोपमाः ॥
रुजादाहार्त्ति बहुलाः कण्डुदाहसमन्विताः ।
स्त्रीणां पुंसाञ्च जायन्ते उपदंशाः सुदारुणाः ॥

## भैरवोरसः

अथास्य चिकित्सामाह—शुद्धसूतं ग्रहीतव्यं रक्तिका शतमात्रकम् ।
द्विगुणां [त्रिगुणां] शर्करां लौहे निम्बदण्डेन मर्द्दयेत् ॥
याममात्रं तत्र दद्याच्छ्वेतं खदिरचूर्णकम् ।
सूततुल्यं ततः कुर्य्यान्मर्द्दनात् कज्जलोपमम् ॥
विंशतिर्व्वटिकाः कार्य्याः स्थाप्या गोधूमचूर्णके ।
निःशेष निःसृता ज्ञात्वा पिड़कास्ताः कलेवरे ॥
भैरवं देवमभ्यर्च्च्य वलिं तस्मै प्रदाय च ।
विधाय योगिनीपूजां दुर्गामभ्यर्च्च्य यत्नतः ॥
वटिकास्ताः प्रयोक्तव्या भिषजा जानता क्रियाम् ।
दिवम त्रितयं दद्यात् तिस्रस्तिस्रो विजानता ॥
चतुर्थाहात् समारभ्य एकामेकां प्रयोजयेत् ।
एवं चतुर्द्दशदिने नीरोगो जायते नरः ॥
पथ्यं शर्करया मार्द्धमुष्णान्नं घृतगन्धि च ।
कुर्य्यात् शकांत्तमुत्थानं सकृद्भोजनमिष्यते ॥
जलपानं जलस्पर्शं कदापि च न कारयेत् ।
दुःसहायान्तु तृष्णायामिक्षु-दाड़िमकादिकम् ॥
शौचकार्य्येऽप्युष्णवारि वाससा प्रोञ्छनं द्रुतम् ।
वातातपादि-सम्पर्कं दुरतः परिवर्जयेत् ॥
मेघागमे वा शीते वा कार्य्यमेतद् विजानता ।
मुखरोगे तु सञ्जाते मुखरोगहरी क्रिया ॥

श्रमाध्वभाराध्ययन-स्वप्नालस्यान् विवर्ज्जयेत् ।
ताम्बूलं भक्षयेन्नित्यं कर्पूरादि सुवासितम् ॥
क्रिया श्लेष्महरीयुक्ता वातपित्ताविरोधिनी ।
लवणं वर्ज्जयेदम्लं दिवानिद्रां तथैव च ॥
रात्रौ जागरणञ्चैव स्त्रीमुखालोकनन्तथा ।
सप्ताहद्वयमुत्क्रम्य स्नानमुष्णाम्बुनाचरेत् ॥
पथ्यं कुर्य्याद्धितमिदं जाङ्गलानां रसादिभिः ।
व्यायामाद्यं वर्ज्जनीयं यावन्न प्रकृतिर्भवेत् ॥
एवं कृतविधानस्तु यः करोत्येतदौषधम् ।
स एव पापरोगस्य पारं याति जितेन्द्रियः ॥
पिड़का विलयं यान्ति बलं तेजश्च वर्द्धते ।
रुजा च प्रशमं याति ग्रन्थिशोथश्च शाम्यति ॥
अस्थां भवति दार्ढ्यञ्च आमवातश्च शाम्यति ।
भैरवेण समाख्यातो रसोऽयं भुविदुर्लभः ॥
[ भैरवेण ममाख्यातो रसोऽयं भैरवः स्वयम् ] ॥

विधि शोधित रस १०० रति, चिनि २०० रति [ चिनि ३०० रति ], खदिरचूर्ण १०० रति सर्व्वमेकीकृत्य लौहपात्रे निम्वदण्डेन प्रहरमात्रं मर्द्दयित्वा, विंशति वटिका बध्नीयात। गोधूमचूर्णोपरि स्थापयेत्। शुभदिने उक्त देवार्च्चन पूर्व्वकं, दिनत्रयं तिस्रस्तिस्रो वटिकाः खाद्याः। गलाभ्यन्तरे दत्वा गिलेत्, न दन्तेन चर्व्वनं एकादशमिर्हिनैः एकादश एवं सप्ताह द्वयं कुर्य्यात। शर्करया सहोष्णान्नं अल्प घृतगन्धि एकवारं भुञ्जीत। इक्षु, दाड़िम, कर्पूरादिभिस्तृष्णां शमयेत। अग्नितापादि वर्ज्जनं सर्व्वमन्यदयुक्तं न कर्त्तव्यम।

## कुष्ठोपदंशहरो धूमः

रसं वङ्गञ्च खदिरं हरीतक्याश्च भस्मकम् ।
कोमलकदलीभस्म गुवाकफलभस्म च ॥
एतत् तोलकमानं स्याद्धिङ्गुलं हरितालकम् ।
गन्धकं तुत्थकञ्चापि पद्मकं सरलं तथा ॥
द्वे चन्दने देवदारु पत्तोङ्गं काष्ठमेव च ।
तथा केशर-काष्ठञ्च माषमानं प्रकल्पयेत् ॥

एकीकृत्य चूर्णयित्वा सर्व्वं चाङ्गेरिकाद्रवैः ।
तुलसीपत्रजरसैः पुरातन-गुड़ेन च ॥
घृतेन सह षट् कार्य्या वटिका मन्त्ररक्षिताः ।
वेदनायामुत्कटायां चतस्रः शुक्लवाससा ॥
वेष्टयित्वा च निर्धूमाङ्गारोपरि च दापयेत् ।
तं धूपं परिगृह्णीयान्नरो वस्त्रादिवेष्टितः ॥
मुखनासाकर्णवहिर्निश्वासस्य निरोधतः ।
स्वेदे जातेऽस्य नैरुज्यं सायं प्रातर्दिनत्रयम् ॥
मासमात्रन्तु पथ्याशी शाकाम्लदधिवर्ज्जनम् ।
गुर्वन्न पायसादीनि अपथ्यानि विवर्जयेत् ॥
दिनत्रये व्यतीते तु स्नानमुष्णाम्बुनाचरेत् ।
एवं धूमे कृते शान्ति व्रणाश्च पीड़का अपि ॥
तथा शोथश्चामवातः खञ्जता पङ्गुतापि च ।
कुष्ठोपदंशशान्त्यर्थं भैरवेण प्रकीर्त्तितः ॥

शोधित रस, राङ्गभस्म श्वेतखदिर, हरीतकीभस्म, कोमल कदलीफल भस्म, गुवाक फलभस्म एषां प्रत्येक १ तोला, हिङ्गुल, हरिताल, देवदारु, गन्धक, तुतिया, पद्मकाष्ठ, सरल, जातिचन्दन, रक्तचन्दन, देवदारु, वकमकाठ, नागेश्वर काष्ठ एषां प्रति ८ रतिके, रसगन्धौ कज्जलीपूर्व्वकं सर्व्वमेकीकृत्य, लौहपात्रे निम्बदण्डेन चाङ्गेरी रसेन तुलसी पत्ररस, पुराणगुड़, घृत, मात्रया दत्वा मर्दयित्वा षट् वटिकां कुर्य्यात् । प्रातसे शुक्ल वाससा सम्वेष्ट्य निर्धूमाङ्गारोपरि दत्वा, मुखनासिकाकर्णव्यतिरेकेन, सर्व्वाङ्गं परिधाय, धूमं गृह्णीयात् । एवं प्रात:, सायमपि त्रीणि दिनानि पीड़ाधिक्ये द्वे द्वे कृत्वा चतस्रोऽपि कुर्य्यात् ।

इति वैद्यकसारोद्धारे उपदंशाधिकारः ॥

## ५६ । अथ शूकदोष-चिकित्सा

हितञ्च सर्पिषः पानं पथ्यञ्चापि विरेचनं ।
हितः शोणितमोक्षश्च यच्चापि लघुभोजनम्
सर्षपां लिखितां सूक्ष्मैः कषायैरवचूर्णयेत् ।
तैरेवाभ्यञ्जनं तैलं साधयेद् व्रणरोपणम् ॥

**कषायमाह**—वच, वासक, पटोल, निमछाल, प्रियङ्गु एषां पञ्चाना चूर्णविचूर्णनम्। अनेन क्वाथ कल्केन हितेन तैलाभ्यञ्जनं। शूकदोषत ओक मेलि तेज गुच्छाव। शतपोनक शूकदोषत रसायन क्रिया करिव। व्रणशोथर व्रणर। रक्तज शूकदोषत रक्तज विद्रधि क्रिया करिव।

सर्व्वेषां शूकदोषाणां क्रिया व्रणवदाचरेत्।
उपदंशाधिकारोक्तमौषधं शूकदोषहृत्॥

सकलो शूकदोषत, सकलो व्रणर क्रिया करिव। उपदंशर क्रिया शूकदोषत करिव।

दार्व्वी-स्वरस-यष्ट्या च गृहधूम-निशायुतैः।
तैलमभ्यञ्जने पक्वं मेढ्रोगं निवारयेत्॥

तिलतैल ३ सेर, जल १२ सेर, आचुकाठर क्वाथ १२ सेर, कल्क यष्टिमधु, आलान्धु हरिद्राद्वय एषां मिलि ३ पोवा दत्वा सिद्धं।

## इति वैद्यकसारोद्धारे शूकदोषाधिकारः॥

द्वादशः परिच्छेदः

# कुष्ठरोगचिकित्सोपदेशः

## ६० । अथ कुष्ठ-चिकित्सा

वातोत्तरेषु सर्पिर्वमनं श्लेष्मोत्तरेषु कुष्ठेषु ।
पित्तोत्तरेषु मोक्षोरक्तस्य विरेचनञ्चाग्रम् ॥

वातदूषित कुष्ठत तिलतैलादि अभ्यङ्गवस्तिरिति । कफदूषित कुष्ठत वान्ति कराव, पित्तदूषित कुष्ठत तेज कटाव । अग्निसेक दिव । वमनं ।

**पञ्चकषायः**

वचावासा-पटोलानां निम्बस्य फलिनीत्त्वचः ।
कषायो मधुना पीतो वान्तिकृन्मदनान्वितः ॥

वच, वाहक, पटोल, निम, प्रियङ्गु तदभावे वनमाला एषां मिलि २ तोला, जल ३ सेर, शेष ३ पोवा कोटकराचूर्ण १ तोला, मधु २ तोला, आलोड्य पीत्वा वमेत । विरेचनमाह । विरेचनन्तु कर्त्तव्यं त्रिवृद्दन्ती फलत्रिकैः । तेडिया, सोन्दरपखाल, त्रिफला एषां मिलि २ पल, जल ८ पल, शेष २ पल प्रातःपीत्वा रेचयेत् ।

मनःशिलाले मरिचानि तैल-मार्कं पयः कुष्ठहरः प्रदेहः ।

मनःशिला, हरिताल जालुक, अर्कक्षीर, कटुतैलेन लेपः ।

करञ्जवीजैडगजः सकुष्ठो गोमूत्र पिष्टश्च वरप्रदेहः ।

लाटागुटी, मेदेलुवागुटी, कूर एतानि गोमूत्र पिष्टानि लेप ॥

पर्णानि पिष्ट्वा चतुरङ्गुलस्य तक्रेण पत्रान्यथ काकमाच्याः ।
तैलाक्त गात्रस्य नरस्य कुष्ठान्युद्वर्त्तयेदश्वहनच्छदैश्च ॥

सोणारुपात, काकमाचीपात, करवीर पत्र एतानि सममागानि अम्लतक्रेण पिष्ट्वा तैलेन वा घर्षणीयम । अथवा कोबाखुटि पत्राणि पिष्ट्वा कटु तैलेन घर्षणीयम ।

एडगजकुष्ठ-सौवीरक-सैन्धव-सर्षपैः क्रिमिघ्नैश्च ।
क्रिमिसिध्म दद्रुमण्डल कुष्ठानां नाशनो लेपः ।

मेदेलुवागुटी, कूर, सैन्धव सेवा सरियह, विडङ्ग एतैः सममागैः काञ्जिकेन पिष्ट्वा लेपः ।

मनःशिलात्वक् कुटजात् सकुष्ठा सलोमशः सैडगजः करञ्जः ।
ग्रन्थिश्च भौर्ज्जः करवीर-मूलं चूर्णानि साध्यानि तुषोदकेन ॥

पलाश-निर्दाहरसेन वापि कर्षोद्धृतान्याढ़क-सन्मितेन ।
दर्व्वीप्रलेपं प्रवदन्ति लेपमेतत् परं कुष्ठविनाशनाय ॥

मनःशिला, कुटजछाल, कूर, जटामांसी, मेदेलुवागुटी, लेटागुटी, भुर्जपत्र, गाठियन, करवीरमूल एषां सममाग चूर्ण १८ तोला, अम्लकाञ्जि १२ सेर, पक्त्वा दर्व्वी प्रलेपनेन लेपः। अथवा पलाशक्षारस्य क्षारोदकेन पक्त्वा कर्कशपत्रेण लेपन्दद्यात् ।

धात्र्यक्ष-पथ्याक्रिमि-शत्रुवह्नि-भल्लातकावल्गुज-लोहभृङ्गैः ।
भागाभिवृद्धैस्तिलतैलमिश्रैः सर्व्वाणि कुष्ठानि निहन्ति लेपः ॥

आमलकी १ माग, मोमोरा २ माग, शिलिखा ३ माग, विड़ङ्ग ४ माग, चित्रक ५ माग, भल्ला ६ माग, मिरिमाइ ७ माग, जारित लौह ८ माग भृङ्गराज ९ माग एतानि पिष्ट्वा तिलतैल मिश्रैर्लेपः ।

## दद्रुगजेन्द्रसिंहोलेपः

तुल्योरसः शालतरोस्तुषेण सचक्रमर्द्दोऽप्यभयाविमिश्रं ।
पानीयभक्तेन तदम्बुपिष्टो लेपः कृतो दद्रुगजेन्द्रसिंहः१ ॥

धुना, मेदेलुवागुटी, शिलिखा एतैः पिष्टैरम्लकाञ्जिकैर्लेपः ।

आरग्वधस्य पत्राणि आरणालेन पेषयत् ।
दद्रुकिटिमकुष्ठानि हन्ति सिध्मानमेव च ।

सोनारु पत्रं काञ्जिकेन पिष्ट्वा लेपः ।

विड़ङ्गैड़गजाकुष्ठ-निशासिन्धूत्थसर्षपैः ।
धान्याम्लपिष्टैर्लेपोऽयं दद्रुकुष्ठरुजापहः ॥

विड़ङ्ग, मेदेलुवागुटी, कूर, हालधि, सैन्धव, मेवासरियह एषां काञ्जिक पिष्टैर्लेपः ।

काममर्द्दकमूलन्तु सौवीरेण प्रपेषितं ।
दद्रुकिटिम कुष्ठानि जयेदेतत् प्रलेपनात् ॥

अकलविर मूल काञ्जिकेन पिष्ट्वा लेपः ।

शिखरिरसेन२ सुपिष्टं मूलकवीजं प्रलेपतः सिध्म ।

मूलावीज अपामार्ग रसेन पिष्ट्वा लेपः ।

---

१। तुल्य इत्यादौ शालतरो रसः धूनकः, तुषेणेति, धान्यत्वचा, धूनकादीनां पानीय-भक्तान्तानां समो भागः। तदम्बुपिष्ट इति पानीयभक्त जलेन पिष्टः। इति चक्रदत्तटीकायां शिवदासः।

२। क्षारेण वा कदल्या रजनी-मिश्रेण नाशयति ॥ चक्रदत्ते पाठः।

गन्धपाषाणचूर्णेन यवक्षारेण पेषितम् ।
सिध्मनाशं व्रजत्याशु कटुतैलयुतेन वा ॥

गन्धकचूर्णं कटुतैलेन लेपः ।

पत्रकोषण-कासीसतैले ताप्या मनःशिला ।
सप्ताहमुषिताः कार्य्याः कुष्ठश्वित्रविनाशनाः ॥

तेजपत्र, मरिच, धातुकासीस [रसाञ्जन मनःशिला], समभागं पिष्ट्वा सार्षप तैलेन मिश्रयित्वा कांस्य पात्रे सप्ताहमाच्छाद्य स्थापयेत, अनेन लेपः ।

बीजानि वा मूलक-सर्षपाणां लाक्षारजन्यौ प्रपुनाड़बीजम् ।
श्रीवेष्टकव्योषविड़ङ्ग कुष्ठं पिष्ट्वा च मूत्रेण तु लेपनं स्यात् ॥
दद्रूणि सिध्म-किटिमानि पामां कापाल कुष्ठं विषमञ्च हन्यात् ।

मूलाबीज, सेवासरियह, लाक्षा, हरिद्राद्वय, चेदेलुवाघुटी, श्रीवेष्ट, त्रिकटु, विड़ङ्ग, मथा एतानि पिष्ट्वा मूत्रेण लेपः ।

## एड़गजादि लेपः

एड़गजातिल-सर्षप-कुष्ठ मागधिका-लवणत्रयमस्तु ।
पूतिकृतं दिवसत्रयमेतद्धन्ति विचर्च्चिकदद्रु-सकुष्ठम् ॥

चेदेलुवाघुटी, तिल, श्वेतसर्षप, कुर, पिप्पली, सैन्धव सौवर्च्चल, विट एतानि समभागानि दधिमस्तुना पिष्ट्वा दिनत्रयं स्थाप्य पुतिं कृत्वा लेपन्दद्यात् ।

विचर्च्चिकायां स्नुक्काण्डे सर्षपात् कल्कः कुकूलानलपाचितः३ ।
लेपाद् विचर्च्चिकां हन्ति रागवेग इव त्रपाम् [ वायुरेव यथा द्रुमान् ] ॥

सिजु चुङ्गात सर्षप बाटि मराइ गोमयाग्नौ दग्ध्वा कटुतैलेन पिष्ट्वा लेपः ।

कच्छे—आमलक्याः पलाष्टेन मूत्रे सप्तवारान् भावयित्वा ततः पश्चात कच्छ लिप्तं प्रशाम्यति ।

आमलकीचूर्णं ८ पल गोमूत्रे सप्तदिने सप्तवारं भावयित्वा लेपः ।

---

३ । स्नुक्काण्ड इत्यादि वाग्भट्टस्य !

कुकूलानलः करीषाग्निः ।

स्नुक्काण्डमध्ये गर्त्तं कृत्वा, पिष्ट श्वेतसर्षपेन तत प्रपूर्य्य स्नुहीकाण्डान्तरेणाच्छाद्य, कुशादिभिर्व्बद्ध्वा मृत्तिकया प्रलिप्य गोमयाग्निना दहेत् । —इति चक्रदत्ते शिवदासः ।

प दस्फोटे—नारिकेलोदरे न्यस्त तण्डुलः पूतितां गतः ।
लेपाद् विपादिकां हन्ति चिरकालानुबन्धिनीम् ॥

जलयुक्त नारिकेलर भितरत शालि तण्डुल चूर्ण प्रक्षेप दिनत्रय स्थाप्य पूतित्वे लेपः ।

सर्ज्जरससिन्धुसम्भव-गुड़मधु-महिषाक्ष-गैरिकं सघृतम् ।
सिकथमेतत् पक्वं पादस्फुटनापहं सिद्धम् ॥

धूना, सैन्धव, कूर, मधु, गुग्गुलु, गेरुमाटि एतानि समभागानि पानीयं दत्वा पिष्ट्वा पाकं कृत्वा लेपं दद्यात् ।

## उन्मत्ततैलम्

उन्मत्तकस्य बीजेन मानकक्षारवारिणा ।
कटुतैलं विपक्तव्यं शीघ्रं हन्याद् विपादिकाम् ॥

कटुतैल ३ सेर, मानक ( कोटकरार ) क्षार ४८ सेर, जल ४८ सेर, शेष १२ सेर, कल्क धुस्तूर बीज ८ पल ।

कच्छ्रमाह—अवल्गुजं कासमर्दं चक्रमर्दं निशायुतम् ।
मानिमन्थेन तुल्यांशं मस्तुकाञ्जिकपेषितम् ॥
कच्छ्रं कण्डूं जयत्युग्रां सिद्ध एष प्रयोगराट् ।

सेदेलुवा,गुटी, अकलविर, मिरिमाह, हरिद्राद्वय, सैन्धव, अम्लदधि काञ्जिभ्या लेप ।

कोमल-सिंहास्य दलं सनिशं सुरभीजलेन सपिष्टम् ।
दिवस त्रयेण नियतं क्षपयति कच्छ्रं विलेपनतः ॥

कोमल वासकपत्र हरिद्रा गोमूत्रेण पिष्ट्वा लेपः ।

हरिद्रा कल्कसंयुक्तं [ चूर्णसयुक्तं ] गोमूत्रस्य पलद्वयम् ।
पिवेन्नरः कामचारी कच्छ्रु-पामा-विनाशनम् ॥

हरिद्राचूर्ण २ तोला, गोमूत्र २ पल, आलोड्य पेयम ।

विषवरुणहरिद्राचित्रकागारधम-
मनलमरिचदूर्व्वाः क्षीरमर्क-स्नुहीभ्याम् ।
दहति पतितमात्र कुष्ठजातीरशेषाः ।
कुलिशमिव सरोषाच्छक्रहस्ताद् विमुक्तम् ॥

विष, बरुण छाल, हालधि, चित्रक, आलान्धु, मल्ला, जालुक, दूर्व्वा, अर्कक्षीर, सिजुक्षीर, एषां पिष्ट्वा लेपः ।

यः खादेदभयारिष्टमरिष्टामलकानि च ।
स जयेत् सर्व्वकुष्ठानि मासादुर्द्धं न संशयः ।।

शिलिखाचूर्ण १ तोला, निमपातचूर्ण १ तोला उष्णोदकेन पेयम । अथवा निमपातचूर्ण १ तोला, आमलकीचूर्ण १ तोला उष्णोदकमनुपिवेत् ।

वायस्येडगजाकुष्ठ-कृष्णाभिर्गुड़िका कृता ।
वस्तुमूत्रेण संपिष्ट्वा लेपाच्छ्वित्र विनाशिनी ।।

कोवाकुटि लता, मेदेलुवागुटी, कूर, पिप्पली एषां जलेन पिष्टा गुटिका कर्त्तव्या । पुनः छागीमूत्रेण पिष्ट्वा लेपः ।

गर्जाचत्रव्याघ्रचर्म्म-मसीतैलविलेपनात् ।
श्वित्रं नाश व्रजेत् किम्वा पूतिकीट-विलेपनात् ।।

हस्तिछाल, व्याघ्रछाल, दग्धभस्म कटुतैलेन लेपः । अथवा पुतिकीट वोल्त पदापस्वा, पिष्ट्वा लेपः ।

पुतीकार्कस्नुड् नरेन्द्रद्रुमाणा मूत्रैः पिष्ट्वाः पल्लवाः सौमनाश्च ।
लेपाच्छ्वित्र घ्नन्ति दद्रु व्रणांश्च कुष्ठ्यान्यर्शांस्युग्रनाड़ी-व्रणाश्च४ ।।

नेगागुटा, आकणछाल, सिजु, नरेन्द्रद्रुमः (सोणारु छाल), मालतीफुलर मूल एषां गोमूत्रैः पिष्ट्वा लेप ।

शङ्खेन्दुधवले—धात्रीखदिरयोः क्वाथं पीत्वा वल्गुजसयुतम् ।
शङ्खेन्दुधवलं श्वित्रं तूर्णं हन्ति न संशयः ।।

आमलकी, खयेर मिलित २ तोला, जल ४ पल, शेष ½ पल । सिसिमाहर चूर्ण ३२ रति प्रक्षेपः ।

## एकविंशतिको गुग्गुलुः

कुष्ठे—चित्रकं त्रिफला-व्योपमजाजी कारवी वचा ।
सैन्धवातिविषे कुष्ठ चव्यैला-यावशूकजम् ।।
विड़ङ्गान्यजमोदाश्च मुस्तान्यमरदारु च ।
यावन्त्येतानि सर्व्वाणि तावन्मात्रन्तु गुग्गुलुम् ।।
संक्षुद्य सर्पिषा सार्द्धं गुड़िकां कारयेद् भिषक् ।
प्रातर्भोजनकाले च भक्षयेत्तु यथाबलम् ।।

४ । पुतीकेत्यादि सुश्रुतस्य । पुतीको लाटाकरञ्जः ; नरेन्द्रद्रुमः आरग्वधः । एषां पल्लवा इत्यन्वयः ।

हन्त्यष्टादश कुष्ठानि क्रिमीन् दुष्टव्रणानपि ।
ग्रहण्यर्शोविकारांश्च मुखामयगलग्रहान् ।।
गृध्रसीमथभग्नञ्च गुल्मञ्चापि नियच्छति ।
व्याधीन् कोष्ठगतांश्चान्यान् जुयेद् विष्णुरिवासुरान् ।।

चित्रकचूर्ण १ मद्दा, त्रिफला ३ मद्दा त्रिकटु ३ मद्दा, जीरकद्वय २ मद्दा, वच्च १ मद्दा, सैन्धव १ मद्दा, आतैच १ मद्दा, चविक १ मद्दा, एलाचि १ मद्दा, यवक्षार १ मद्दा, विड़ङ्ग १ मद्दा, आजनि १ मद्दा, मथा १ मद्दा, उजैकाठ १ मद्दा एषां चूर्ण सर्व्वसम गुग्गुल धृताद्धेंन पिष्ट्वा ८ रति प्रमाणे वटिका कर्त्तव्या तप्तजलमनुपेयम् ।

## पञ्चतिक्तकं घृतम्

निम्बं पटोलं व्याघ्रीञ्च गुड़ूची वासकन्तथा ।
कुर्याद्दशपलान् भागानेकैकस्य सुकुट्टितान् ।।
जलद्रोणे विपक्तव्यं यावत् पादावशेषितम् ।
घृतप्रस्थं पचेत्तेन त्रिफलागर्भसंयुतम् ।।
पञ्चतिक्तमिदं ख्यातं सर्पिः कुष्ठविनाशनम् ।
अशीतिं वातजान् रोगांश्चत्वारिंशच्च पैत्तिकान् ।।
विंशतिं श्लैष्मिकाञ्चैव पानादेवापकर्षति ।
दुष्टव्रण-क्रिमीनर्शः पञ्चकासांश्च नाशयेत् ।।

घृत ३ सेर, क्वाथ निम्ब १० पल, कण्टकारी १० पल, आमरिलता १० पल, वासक १० पल, जल ४८ सेर, शेष १२ सेर, कल्क त्रिफला मिलित्वा ८ पल ।

## महाभल्लातकगुड़ः

निम्बं गोपारुणाकट्वी त्रायन्ती त्रिफला घनः ।
पर्पटावल्गु-जानन्ता वचाखदिरचन्दनम् ।।
पाठाशुण्ठीशठीभार्गीवासाभूनिम्बवत्सकम् ।
श्यामेन्द्रवारुणीमूर्व्वा विड़ङ्गेन्द्रविषानलम् ।।
हस्तिकर्णामृताद्रेका पटोलं रजनीद्वयं ।
कणारग्वधसप्ताह्व कृष्णवेत्रोच्चटाफलम् ॥
भूकन्दं तृणपर्णञ्च जिङ्गीपद्माटमूषली ।
विश्वकसेना च कैटर्य्यं शरपुङ्खाथ कञ्चुकी ।।

एषां द्विपलिकान् भातान् जलद्रोणे विपाचयेत् ।
अष्टभागावशिष्टन्तु कषायमवतारयेत् ॥
[भल्लातक सहस्राणि त्रीणि छित्त्वाम्मर्मणेऽम्भगि ।
चतुर्भागावशेषन्तु कषायमवतारयेत् ॥
तौ कषायौ समादाय वस्त्रपूतौ च कारयेत् ।
गुड़स्य तु तुलां ताभ्यां कषायाभ्यां पचेद् भिषक् ॥ ]
भल्लातक-सहस्राणां मज्जानं तत्र दापयेत् ।
त्रिकटुत्रिफलामुस्तसैन्धवानां पलं पलम् ॥
दीप्यकस्य पलञ्चैव चातुर्जातं पलांशिकम् ।
सचूर्ण्य प्रक्षिपेदत्र गन्धकञ्च चतुष्पलम् ।
स्निग्धभाण्डे विनिःक्षिप्य स्थापयेत् कुशलो भिषक् ।
प्राणिनाञ्च हितार्थाय कथितोऽयं विशेषतः ॥
श्वेतमौडुम्बरं कुष्ठं ऋष्यजिह्वं सकाकणम् ।
पुण्डरीकदलं चर्म्म-विस्फोटं मण्डलं तथा ॥
कापाल-दद्रुपामाणां वातरक्तं विपादिकां ।
अर्शांसि सर्व्वकुष्ठानि कासं श्वास भगन्दरं ॥
समभ्यासेन पलितमामवातं सुदुर्ज्जयं ।
कुरुते परमां कान्तिं दीपयेज्जठरानलम् ॥
अनुपानं प्रयोक्तव्य छिन्ना क्वाथं पयोऽथवा ।
भोजने च सदा योज्यमुष्णमन्नं विशेषतः ॥
[ भोजने च सदा त्याज्यमुष्णद्रव्यं विशेषतः ] ।
नियमो न पुनः कश्चित् सर्व्वद्रव्येषु शस्यत ॥
वातातपौ विरोधात्तु वर्ज्जनीयौ प्रयत्नतः ।
कुलत्थ दधि शुक्तानि स्नानाभ्यङ्गानि सेवनं ।
वल्गुरु शुष्कमांसञ्च व्यायामं स्त्रीनिसेवनं ।
सर्व्वरोगविनाशाय महादेवेन निर्म्मितः ॥

निमछाल, श्यामालता, तेड़िया, कटकीतिता, वट, गुग्गु, त्रिफला, मथा, चेत्रपर्पटी, जगन्नाथ तितागुटी (सरेतितार गुटी वा सोमराजी) अनन्तमूल, वच, सरोर, रक्तचन्दन आकलविन्धि, आदा, वेतुरो, अकलविर, वासक, माहतिता, इन्द्रयव, टुकरोयामूल, कटावेङ्गेना, बनरिठा, विड़ङ्ग, गुड़ूची, मृणाल, चितामूल, हस्तिकर्ण पलाश, गुड़ूची सत्त्व, महानिम, पटोल पत्र, हरिद्राद्वय, पिप्पली, सोणाञ्जुटी, चतोयना छाल, जवथगुन्ति, बनओल, चिछावन, मजाठि, मार्गीवीज, नागिनी, मूरवान्धा, कायफल, काइटीयामथा,

चन्कुसियावन, क्षीरकञ्चुकी एषां प्रति २ पल, जल ४८ सेर, शेष १२ सेर, पक्व भल्लातक गोट छित्त्वा ३०००, जल ४८ सेर, शेष १२ सेर, दुयो क्वाथ चेकिलै बहाव, पुरातन गुड़ १० सेर दिव। भला ३००० हाजारर मज्जा लै ताते दिव, सर्व्वमेकीकृत्य पचेत्। सिद्धे प्रक्षेप त्रिकटु, त्रिफला, कूर, सैन्धव, यमानी प्रत्येक १ पल चातुर्य्यात प्रति २ तोला शोधित गन्धक ४ पल पाकः।

## रुद्रवटी

कान्तलौहं मृतं ताम्रं मृतमभ्रञ्च तालकम्।
गन्धकं गुग्गुलुं शुद्धं विडङ्गं त्रिफलापि च ॥
व्योषाग्नि-देवदारुञ्च अहिफेनं निशाद्वयं।
गिरिकर्णि-पुनर्णवामूलचूर्णं समं समम् ॥
भृङ्गराज-द्रवैर्मर्द्यं दिनान्ते वटकी कृतं।
माषमात्रं निहन्त्याशु सर्व्वकुष्ठकुलानि च ॥
इयं रुद्रवटी नाम, चानुपानन्तु पूर्व्ववत्।

लौहभस्म, अभ्रभस्म, ताम्र, हरिताल, रसगन्धक, गुग्गुलु, विडङ्ग, मिलित त्रिफला, त्रिकटु, चितामूल, देवदारु, काफिङ्ग, हरिद्राद्वय, श्वेतापराजिता, पुनर्णवा एषां प्रतिचूर्ण २ तोला भृङ्गराज रसेन दिनं विमर्द्य माषमात्रां वटी कुर्य्यात्। एकां भृङ्गराजरसेन पीत्वा, निम्बपत्र, निम्बफूल, निम्बछाल, निम्बफल, निम्बमूल, एषां सममागचूर्णात् घृतमधुभ्यामनुपेयम।

## महालेपः

चर्म्मचित्रे—महालेपं प्रवक्ष्यामि सर्व्वकुष्ठविनाशनं।
सामान्यशोधनात् शुद्धं पलमात्रन्तु पारदं ॥
गृहीत्वा पूर्व्ववत् शङ्खक्षारञ्च पलमात्रकं।
अपामार्गभवं क्षारं तिलक्षारञ्च लोचनं ॥
पुनर्णवाभवक्षारं क्षारं वासकसम्भवम्।
पटोलक्षारमेरण्डक्षार-सर्व्वाङ्गसम्भवम्।
यवक्षारं टङ्कनञ्च सर्जिकाक्षारमेव च ॥
चर्म्मारनरसारञ्च गन्धकं रुचकं तथा।
लोणं विड़ं सिन्धुजञ्च कटुशाकं सकुष्ठकं ॥
त्रिकटुतिन्विड़ीमूल-द्विकरञ्जत्वचं तथा।
लाङ्गली च हरिद्रा च वत्सकण्डञ्च शूरणम् ॥

एतान् मूलवृषक्षारं क्षारं शुक्तिसमुद्भवम् ।
मुण्डिक्षारं चार्ज्जुनञ्च रेणुक्षारञ्च पैप्पलं ॥
राजिकामर्षपञ्चैव सिन्दूरञ्च शिलाजतु ।
काम्पिल्लमानलोध्रञ्च मषली तुम्बुरु तथा ॥
आनर्कमूलवीजञ्च तद्भवक्षारमेव च ।
प्रत्येकं पलमानञ्च सर्व्वमेतत् समाहरेत् ॥
एकत्र मर्द्दयित्वाथ गोमूत्र महिषीभवं ।
अश्वमूत्रैश्छागमूत्रैर्हस्तिमूत्रोष्ट्रमूत्रकैः ॥
मर्द्दयेदम्लवर्गेण निम्बजम्बीरलुङ्गकैः ।
पारावतैश्च नारङ्गैः रसैश्च चनकोद्भवैः ॥
नीरैश्च वीजपूरैश्च सिग्रुमूलरसैस्तथा ।
सप्तधान्यसमुद्भूत काञ्जिकैर्माचिकैस्तथा ।
अम्लवर्गैर्गोजातैश्च जीर्णकुष्माण्डजैरसैः ।
समुद्रनीरैः सम्मर्द्द्य स्थापयेत्ताम्रभाजने ॥
त्रिसप्तदिवसात् पश्चात् तेन कल्केन लेपयेत् ।
कुष्ठानि मण्डलान्येवं गजकृचिमपामकं ॥
सिध्मानि पुण्डरिकानि काकणं श्वित्रमेव च ।
दद्रुकिटिमकुष्ठञ्च चर्म्मग्रन्थिमनेकधा ॥
गण्डमाला विसर्पञ्च अर्शांसि च विचर्च्चिका ।
अशीतिं वातजान् रोगानाढ्यवातं प्रलेपनात् ॥
इत्येवमादिकं दोषं सर्व्वं हन्यात् रसेश्वरः ।
माषमात्र-प्रयोगेन महाकुष्ठानि सप्त च ।
हन्यानि यान्यसाध्यानि व्रणानि विविधानि च ।
तानि सर्व्वाणि नश्यन्ति रसेन्द्रस्य प्रसादतः ॥
महाप्रलेप नामोऽयं रसेन्द्रो लेपकर्म्मणि ।
दृष्टः प्रभाव सृष्टोऽत्यं कुष्ठजातिनिवृत्तये ॥

रस, शङ्खचूर्ण, अपामार्गक्षार, तिलक्षार, हिज्जलक्षार, पुनर्णवाक्षार, शिखिवाक्षार, वासकक्षार, पटोलक्षार, एरगडक्षार, यवक्षार, सज्जिकाक्षार, सुवर्णचूर्ण, नचादर (निशादल), गन्धक, सौवर्च्चल, विट्, सैन्धव, लाङ्शाक, कूर, त्रिकटु, तेंतेलीमूलर क्षार, लाटाकरञ्ज, वृक्षकरञ्ज, लाङ्गलिया, विष, हालधि, सिजु, वनतुलसी, वाहकमूल, शुक्तिक्षार, मूरफुलाक्षार, अर्ज्जुनक्षार, वंशक्षार, आहतक्षार, राजिका सर्षपक्षार, सिन्दूर, शिलाजतु, जवयगुन्ति, कोटकरा, भूमलति, नागिनी, मूरवान्धाक्षार, धनीया, अर्कक्षीर, अर्कमूलक्षार,

एषां प्रति १ पल रस, गन्धक, कज्जली पूर्व्वकमेकीकृत्य, लौहपात्रे गो, महिषी, छाग, अश्व, गज, उष्ट्र, एषां प्रत्येक मूत्रैर्म्मर्द्दयेत्। ततो निम्ब, जम्बीर, नारङ्ग, चनक, सोलङ्ग रसैर्म्मर्द्दयेत्। तथा सिग्रुमूलरसैः, नाना-धान्यककाञ्जिकैः तथा मधुभि. अम्लदधिमस्तुभिः, वृद्ध कुष्माण्ड रसैः समुद्रनीरैः एभिः प्रत्येकं पर मर्द्दयित्वा, पश्चाद् भैरवपूजां कृत्वां कुष्ठस्थानं लिम्पेत्।

## वृहद् व्रणराक्षसतैलम्

कुडवं सार्षप तैल तदर्द्धं गोघृतस्य च।
एकीकृत्य पचेत् तत्तु सूर्य्यपत्ररसेन तु॥
तस्य पत्र पलं कल्कं [चित्रपत्र पलं कल्कं] दत्वा तत्र विपाचयेत्।
तत् कल्कं चालयित्वा तु [सार्यत्वा] चूर्णमेषां विनिःक्षिपेत्॥
गन्धकं शुद्धसिन्दूरं हरितालं मनःशिला।
हरिद्रा गैरिकं राजी कर्पार्द्धं प्रतिभागिकम्॥
भागार्द्धं पारदश्चापि कज्जलीकृत्य मिश्रयेत्।
सुतप्ते मिश्रयित्वा तु तप्तं कृत्वा प्रलेपयेत्॥
कण्डू विचर्च्चिकां पामां क्लेदं कुष्ठं सुदुस्तरम्।
वातरक्तं व्रणान सर्व्वान्, विषविस्फोटदद्रुकम्।
निहन्त्याशु महाश्वित्र तैलन्तु व्रणराक्षसम्॥

सर्षपतैल ३२ तोला, गोघृत १६ तोला, आकणपत्र रस ३२ तोला, कल्क आकणपत्र ८ तोला (अथवा चिनारपत्र ८ तोला) सिद्धे अवतार्य्य पवित्रं कृत्वा अस्य चूर्णकं दद्यात, गन्धक २ महा, सिन्दूर २ महा, हरिताल २ महा, मन.शिला २ महा, हलदि २ महा, गेरमाटि २ महा, लाइगुटी २ महा, रस १ महा कज्जली कृत्वा मिश्रयेत।

इति वैद्यकसारोद्धारे कुष्ठाधिकारः॥

### त्रयोदशः परिच्छेदः

# पित्तरोग-चिकित्सोपदेशः

## ६१। अथ शीतपित्तोदर्द्दकोठ-चिकित्सा[1]

अभ्यङ्गः कटुतैलेन सेकश्चोष्णाम्बुभिस्ततः।
ऊर्द्धगे वमनं कार्य्य पटोलारिष्टवारिणा॥

शीतपित्ते सार्षप तैल घर्षिव। उष्ण जलरे सेक दिव। ऊर्द्धग शीतपित्त हले वान्ति कराव।

तस्यौषधमाह—शीतपित्ते तु वमन पटोलारिष्टवारिणा।

पटोलपत्र, निम्बपत्र अनयोर्मिलि २ तोला, जल ८ पल, शेष २ पल उपदेशात् मदन फलं पिष्ट्वा ३२ रति दत्वा [illegible] पीत्वा वमेत्।

त्रिफलापुरकृष्णाभिर्व्विरेकश्च प्रशस्यते।

त्रिफला ८ तोला, जल ८ पल शेष २ पल, शोधित गुग्गुलु चूर्णं २ तोला, पिप्पली १० रति, द वा पेयं रेचयेत।

सिता मधुकसंयुक्ता गुडमामलकैः सह।
सगुडं दीप्यकं यस्तु खादेत् पथ्यान्नभुक् नरः॥
तस्य नश्यन्ति सप्ताहादुदर्द्दः सर्व्वदेहजः॥

चिनि, यष्टिमधु, पिष्ट्वा पेय, आमलकीरस गुड़ेन पेयं। यवानी चूर्णं गुड़ेन खादेत्।

१। तथाच भावप्रकाशे शीतपित्तस्य लक्षणमाह—

सकण्डूतोदबहुलश्छर्द्दिज्वरविदाहवान्।
वाताधिकतमं विद्याच्छीतपित्तमिमं भिषक्॥

उदर्द्दस्य लक्षणमाह— सोत्सङ्गैश्च सरागैश्च कण्डूमद्भिश्च मण्डलैः।
शैशिरः श्लेष्मबहुल उदर्द्द इति कीर्त्तितः।

कोठोत्कठयोर्लक्षणमाह—असम्यग्वमनोदीर्णैः पित्तश्लेष्मान्ननिग्रहैः।
मण्डलानि सकण्डूनि रागवन्ति बहूनि च॥
सानुबन्धस्तु स प्राज्ञैरुत्कोठ इति कथ्यते।
सः कोठः॥

सिद्धार्थ रजनीकल्कै प्रपुन्नाटतिलैः सह ।
कटुतैलेन सम्मिश्रमेतदुद्वर्त्तनं हितम् ॥

सेवा सरियह, हालधि पिष्ट्वा, सर्षप तैलेन लेपः । मेदेलुवागुटो कटुतैलेन लेपः ।

दूर्व्वानिशायुतो लेपः कच्छूपामाविनाशनः ।
क्रिमिदद्रुहरश्चैव शीतपित्तापहः स्मृतः ॥

दूर्व्वा हरिद्राद्वय लेप ।

अग्निमन्थभवं चूर्णं पिष्टं पीतञ्च सर्पिषा ।
शीतपित्तोदर्द्दकोठान् सप्ताहादेव नाशयेत् ॥

मानघिला मूल, छाल बटि घृतमिश्रं खाद्यं । कुष्ठर क्रिया, अम्लपित्तर क्रिया, उदर्द कोठ शीतपित्त करिव ।

## हरिद्राखण्डः

हरिद्रायाः पलान्यष्टौ षट्पलं हविषस्तथा ।
क्षीराढकेन संयुक्तं खण्डस्यार्द्धतुलां तथा ॥
एकीकृत्य पचेत् पश्चात् भाजने मृन्मये दृढे ।
व्योषं त्रिजातकञ्चैव क्रिमिघ्नं त्रिवृतं तथा ।
त्रिफलाकेशरं मुस्तं प्रत्येकञ्च पलं पलं ।
संचूर्ण्य प्रक्षिपेत्तत्र पलमेकन्तु भक्षयेत् ॥
कण्डूविस्फोटदद्रूणां नाशनं परमौषधम् ।
स्वर्णकोकनदाभासो देहो भवति नान्यथा ॥

हरिद्राचूर्ण ८ पल, पुराण घृत ६ पल, गोक्षीर १६ सेर, खगड १।० सेर एकीकृत्य पाकः । प्रक्षेपः त्रिकटू ३ पल, एलाचि, तेजपात, दारचिनि, प्रत्येक १ पल, विड़िया १ पल, त्रिफला ३ पल, नागकेशर १ पल एषां चूर्णानि प्रक्षिप्य मायडे स्थाप्यं । अत उष्णोदकेन पलैकं भक्षयेत ॥

इति वैद्यकसारोद्धारे शीतपित्तोदर्द्दकोठाधिकारः ॥

## ६२ । अथाम्लपित्त-चिकित्सा

ऊर्द्ध्वंग वमनैर्धीमानधोगं रेचनैर्हरेत् ।
तिक्तभूयिष्ठमाहारं पानं वापि प्रकल्पयेत् ॥

ऊर्द्ध्वगत अम्लपित्त वान्ति कराव, अधोगत अम्लपित्त रेचन कराव, सेवनत तिक्तसंयोग करिव ।

यवगोधूमविकृतीस्तीक्ष्णसंस्कारवर्जिताः।
यथास्वं लाजशक्तून् वा सितामधुयुतान् पिवेत् ॥२

## शुण्ठीपटोलं

पटोलं नागरं धान्यं क्वाथयित्वा जलं पिवेत्।
कण्डूपामार्त्तिशूलघ्नं कफपित्ताग्निमान्द्यजित् ॥

पटोल, आदा, धनीया मिलि २ तोला, जल ८ पल, शेष १ पल।

## पटोलचतुष्टयं

पटोलविश्वामृतरोहिणीकृतं जलं पिवेत् पित्तकफोच्छ्रये तु।
शूलभ्रमारोचकवह्निमान्द्यदाहज्वरच्छर्दिनिवारणं तत् ॥

पटोल पत्र, आदा, गुड़ूची, कटकीतिता मिलि २ तोला, जल ८ पल शेष १ पल।

पटोलशुण्ठीयवपिप्पलीकाः क्वाथावशिष्टा मधुना विमिश्राः।
सर्वाम्लपित्तं विनिहन्ति कुर्य्याद्वश्वह्निं भुजयोर्बलञ्च ॥

पटोलपत्र, आदा, यवधान्य, पिप्पली एषां मिलि २ तोला, जल ८ पल, शेष १ पल, शीते मधु दत्वा पेयं।

यवकृष्णापटोलानां क्वाथं क्षौद्रयुतं पिवेत्।
नाशयेदम्लपित्तञ्च अरुचिञ्च वमिं तथा ॥

यवधान्य, पिप्पली, पटोलपत्र मिलि २ तोला, जल ८ पल, शेष १ पल, शीतं मधु दत्वा पेयं।

## दशाङ्गक्वाथः

रास्नामृतपर्पटक-निम्बभूनिम्बमार्कवैः।
त्रिफलाकुलकैः क्वाथः सक्षौद्रश्चाम्लपित्तहा ॥

२। अम्लपित्त रोगत यव एवं गोधूमर द्वारा, कटु अम्ल ओ लवणादि तीक्ष्ण द्रव्य विरहित, पेय प्रभृति प्रस्तुत करि पान करिव। अथवा, चिनि वा मधुसंयुक्त खैर धात दोषर संसर्गादि विवेचना-पूर्व्वक, तत्तद्दोषनाशक द्रव वस्तुर सहित पान करिव।

वासकपत्र, गुड़ूची, क्षेत्रपर्पटी, निम, माहतिता, भृङ्गराज, त्रिफला कल्कं ( पटोल फलं ) एषां मिलि २ तोला, जल ४ पल, शेष १ पल, शीते मधु दत्वा पेयं ।

## सिंहास्यादिः

सिंहास्यामृतभण्टाकी क्वाथं पीत्वा समाक्षिकम् ।
अम्लपित्तं जयेज्जन्तुः कासं श्वासं ज्वरं वमिम् ॥

वासक, गुड़ूची, कण्टकारी, एषां मिलि २ तोला, जल ४ पल, शेष १ पल, शीते मधु दत्वा पेयं ।

वासाघृतं तिक्तघृतं पिप्पलीघृतमेव वा ।
अम्लपित्ते प्रयोक्तव्यं गुड़कुष्माण्डकं तथा ॥
पक्तिशूलापहायोगास्तथा खण्डामलक्यपि ॥

वासाघृतं रक्तपित्तोक्तं, तिक्तकघृतं कुष्ठोक्तं, पिप्पलीघृतं तिक्त-परिणाम-शूलोक्तं ।

जम्बीरस्वरसः पीतः सायं हन्त्यम्लपित्तकम् ।

जामुर रस सायाह्न खाव ।

## शतावरीघृतम्

शतावरीमूलकल्कं घृतप्रस्थं पयः समम ।
पचेन्मृद्वग्निना सम्यक् क्षीरं दत्वा चतुर्गुणम् ॥
नाशयेदम्लपित्तञ्च वातपित्तोद्भवान् गदान् ।
रक्तपित्तं तृषा मूर्च्छा श्वासं सन्तापमेव च ॥

घृत ३ सेर, गोक्षीर १२ सेर, शतमूल, रस ३ सेर, कल्क शतमूल ८ पल ।

गुड़पिप्पलीपथ्याभिस्तुल्याभिर्मोदकः कृतः ।
पित्तश्लेष्मापहः प्रोक्तो मन्दमग्निञ्च दीपयेत् ॥

पिप्पली चूर्ण २ तोला, शिलिखा चूर्ण २ तोला, गुडेन मोदकं कृत्वा तप्तोदकमनुपेयम् ।

## पञ्चनिम्बादिचूर्णम्

एकोऽंशः पञ्चनिम्बानां द्विगुणो वृद्धदारकः ।
शक्तुर्दशगुणो देयः शर्करामधुरीकृतः ॥

शीतेन वारिणा पीतः शूलं पित्तकफोत्थितम् ।
निहन्ति चूर्णं सक्षौद्रमम्लपित्तं सुदारुणम् ॥

त्वक्पत्र फलमूल पुष्पभेदात् पञ्चनिम्बचूर्णं १ पल, टुकरीयालता मूलचूर्णं ७ पल, आम्रेचूर्णं १० पल मिश्रयित्वा पलद्वयं शीतल जलेन पेयं । चूर्णं वा मधुना ..क्षम ।

## द्राक्षाद्यं घृतम्

द्राक्षामृताशक्रपटोलपत्रैः सोशीरधात्रीघनचन्दनैश्च ।
त्रायन्तिकापद्मकिरातधान्यैः कल्कैः पचेत् सर्पिरुपेतमेभिः ।
युञ्जीत मात्रां सह भोजनेन सर्व्वर्त्तुपानेपि भिषग् विदध्यात् ॥
बलासपित्तग्रहणी प्रवृद्धां कासाग्निसादज्वरमम्लपित्तम ।
सर्व्वं निहन्याद् घृतमेतदाशु सम्यक्प्रयुक्तं अमृतोपमञ्च ॥

घृत ३ सेर, जल १२ सेर, कल्क द्राक्षा तदभावे गमारीगुटी, गुड़ूची, इन्द्रयव, पटोलपत्र, पोलालति, विरिणा, आमलकी, मथा, रक्तचन्दन, नायकल्प, पद्मकाष्ठ, माहनिता, धान्यक मिलि ८ पल ।

## पिप्पलीघृतम्

पिप्पलीक्वाथकल्केन घृतं सिद्धं मधुप्लुतम् ।
पिबेत्तत् प्रातरुत्थाय अम्लपित्तनिवृत्तये ॥

घृत ३ सेर, पिप्पली क्वाथ १२ सेर, कल्क पिप्पली ८ पल ।

## अविपत्तिकरं चूर्णम्

त्रिकटुत्रिफलामुस्तं वीजञ्चैव विड़ङ्गकं ।
एलापत्रञ्च सर्व्वञ्च समभागं विचूर्णयेत् ॥
यावन्त्येतानि चूर्णानि लवङ्गं तत्समं भवेत् ।
सर्व्वचूर्णद्विगुणितं त्रिवृच्चूर्णञ्च दापयेत् ॥
सर्व्वमेकीकृतं यावत्तावच्छर्करयान्वितम ।
सर्व्वमेकीकृतं पात्रे स्निग्धभाण्डे निधापयेत् ॥
भोजनादौ ततोऽन्ते च मध्वाज्याभ्यामिदं शुभं ।
शीततोयानुपानञ्च नारिकेलोदकं तथा ॥

ततो यथेष्टमाहारं कुर्य्यात् क्षीररसाशनः ।
अम्लपित्तं निहन्त्याशु विवद्धमलमूत्रकम् ॥
अग्निमान्द्य भवान् रोगान् नाशयेच्चाविकल्पतः ।
वलपुष्टिकरञ्चैव शूलदुर्नामनाशनम् ॥
प्रमेहान् विंशतिञ्चैव मूत्राघातान तथाश्मरीं ।
अविपत्तिकरं चूर्णमगस्त्यमुनिभाषितम् ॥

त्रिकटु ३ तोला, त्रिफला ३ तोला, मथा १ तोला, विड़ङ्ग १ तोला, एलाचि १ तेला, तेजपत्र १ तोला, लवङ्ग चूर्ण १० तोला, तेड़ियाचूर्ण २० तोला, चिनि ४० तोला, सर्व्वमेकीकृत्य स्निग्धभाण्डे स्थाप्यं, अतो वलावलं वुद्ध्वा, भोजनादौ तथान्ते च तोलकद्वयं शीततोयेन पिवेत् । लघुविवेकः ।

## नारिकेलामृतम्

पञ्चकोलं द्विपलिकं तोयपात्रे विपाचयेत् ।
तेन पादावशेषेण नारिकेलामृतं पचेत् ॥
नारिकेलाम्भसः प्रस्थं तत् शस्यं कुड़वद्वयं ।
घृतस्य कुड़वेनाथ तत् शस्यं परिभर्ज्जयेत् ॥
मानिकाद्वितयं पश्चात् पुरातनगुड़ादपि ।
सिद्धशीते प्रदातव्या मधुनः पलमुत्तमम् ।
कर्षद्वय त्रिकटुकं चातुर्ज्जातञ्च त्यच्चकं ॥
क्षतक्षये रक्तपित्ते पित्तश्लेष्मणि शस्यते ।
उरःक्षते मर्म्मगते राजयक्ष्मणि शोषिते ॥
नातः परतरं श्रेष्ठं श्लेष्मपित्तनिवर्हनम ।
कफपित्ताभिभूतस्य व्याधिसंक्षीणतेजसः ॥
रोषणा पङ्गुराजस्य स्वयम्भूः प्रददौ पुरा ।
अर्द्धरात्रे समासम्यक् शिरोदेशे व्यवस्थिता ॥
मुञ्चत्वं खलु वृत्तित्व ब्रुवन् भैषज्यमुत्तमम् ।
नारिकेलामृतं ह्येतद्वलवर्णाग्निवर्द्धनम ॥

पञ्चकोल मिलि २ पल, जल १२ सेर, शेष ३ सेर, नारिकेल जल ३ सेर, पुरातन गुड़ १६ पल सर्व्वं गुड़ेन मिश्रीकृत्य स्थाप्यं, घृत ४ पल, सशस्य द्रवमेकीकृत्य पचेत् । सिद्धे अवतार्य्य प्रक्षेप त्रिकटु ४ तोला, चातुर्ज्जातचूर्ण २ तोला, सिद्धशीते मधु १ पल, अतो माषकं भक्षयित्वा शीतजल-मनुपेयं ।

## पिप्पलीखण्डः [ खण्डपिप्पली ]

कणाचूर्णस्य कुड़वं षट् पलं हविषस्तथा ।
शतावरीरसस्याष्टौ पलान्यत्र प्रदापयेत् ॥
खण्डप्रस्थं समादाय क्षीरप्रस्थद्वये पचेत् ।
त्रिजातमुस्तधन्याक-शुण्ठीवंशीद्विजीरकम् ॥
अभयामलकञ्चैव चूर्णं द्वादशमाषिकम् ।
तदर्द्धं मरिचं नागं सारं खदिरमेव च ॥
पलत्रयञ्च मधुनः शीतीभूते प्रदापयेत् ।
ततो मात्रां प्रयुञ्जीत अम्लपित्तनिवृत्तये ॥
शूलारोचकहृल्लास-छर्द्दिपित्ताम्लशूलनुत् ।
अग्निमन्दीपनो हृद्यः खण्डपिप्पलीको मतः ॥

पिप्पलीचूर्णं ४ पल, घृत ६ पल, शतमूली रस ८ पल, खगड १० पल, गोदुग्ध ८ सेर मन्दवह्निना पक्तव्यम । ... दालचिनि, एलाचि, तेजपत्र, मथा, धान्याक शुगठी, वंशलोचन, जीराद्वय, शिलिग्वा, आमलकी एषां प्रतिचूर्णं १ तोला, मरिच, नागेश्वर, खदिरकाष्ठ अर्द्ध तोलक, शीते मधु ३ पल, अतो मद्द्यं ३ महा, धान्यपटोल क्वाथोऽनुपेय ।

## आमलक्यादि लौहम्

आमलापिप्पलीचूर्ण-तुल्यया सितया सह ।
रक्तपित्तहरोलौहः योगराजेति विश्रुतः ॥
वृष्योऽग्निदीपनोबल्य अम्लपित्तविनाशनः ।
पित्तोत्थान् वातपित्तोत्थान् निहन्ति विविधान् गदान् ॥

आमलकी चूर्ण २ तोला, पिप्पली चूर्ण २ तोला, चिनि ४ तोला, लोह ८ तोला, अतो मद्द्यं १६ रति ।

## सर्व्वतोभद्रलौहम्

लौहचूर्णं मृतं ताम्रमभ्रकञ्च पलं पलम् ।
शुद्धसूतञ्च कर्षकं गन्धकार्द्धपलन्तथा ॥
माक्षिकस्य विशुद्धस्य कर्षं शुद्धा शिलापरा ।
सार्द्धकर्षं विशुद्धञ्च शिलाजतु तथापरम् ॥

गुग्गुलोश्चापि कर्षैकं शानमानं परस्य च ।
चूर्णं विडङ्गभल्लातवह्निश्वेतार्कमूलजम् ॥
करिकर्णपलाशश्च तालमूलीपुनर्णवा ।
घनामृतानागवलाचक्रमर्द्दकमुण्डिरी ॥
भृङ्गकेशशतावर्य्यो वृद्धदारं फलत्रिकम ।
त्रिकटुश्चापि सर्व्वेषा प्रत्येकञ्च नयेद् भिषक् ॥
सर्व्वमेकत्रसंमर्द्दय घृतेन मधुना सह ।
स्निग्धे भाण्डे विनिःक्षिप्य ततः कुर्य्याद् विधानवित् ॥
माषकादि क्रमेणैव लौहं सर्व्वरसायनम ।
अम्लपित्त जयेच्छीघ्र सर्व्वोपद्रवमयुतम ॥
तद्वदर्शांसि सर्व्वाणि सर्व्वमेव भगन्दरम् ।
पक्तिशूलञ्च शूलञ्च तथामं कुक्षिसम्भवम् ॥
वातरक्तं तथाकुष्ठं पाण्डुरोगं हलीमकम ।
आमवातं तथा शोथमग्निमान्द्यं सुदुस्तरम ॥
कामला वातगुल्मञ्च पिड़कागरगृध्रसीः ।
ये चान्ये वातजारोगाः कफजाः पित्तसम्भवाः ॥
सर्व्वां स्तान्नाशयत्याशु करोति वलरेतसी ।
कासश्वासक्षयहरं वृष्यमेतद्विशेषतः ॥
सर्व्वव्याधिहरं प्रोक्तं यथेष्टाहारसेविनः ।
यक्ष्माण रक्तपित्तञ्च वातरोग विनाशयेत् ॥
न चात्र परिहारोऽस्ति विहाराणा विधौ सदा ।
संज्ञया सर्व्वतोभद्र लौहोह्येष उदाहृतः ॥
यत्र यत्र प्रयुज्येत तत्तदामयनाशनः ॥

लौहजारण १ पल, ताम्र १ पल, अभ्र १ पल, शुद्धसूत २ तोला, गन्धक ८ तोला, स्वर्णमाक्षिक २ तोला, मनःशिला २ तोला, शिलाजतु ३ तोला, गुग्गुलु २ तोला, एतानि यथाविधि शोधितानि। विडङ्ग, मल्ला, चित्रक, हस्तिकर्णपलाश, अर्कमूल, नागिनी, मूरबान्धा, पुनर्णवा, मथा, गुडूची, गरखीया कराइ, मेदेलुवा, मूरफुलावन, भृङ्गराज, केशराज, शतमूल, टुकरीयालता, त्रिफला, त्रिकटु एषां प्रत्येक चूर्णं ३२ रतिकै लव ; सर्व्वचूर्णं पुनश्चिक्कण शिलायां पिष्ट्वा, स्निग्धभाण्डे मृत्तिकादि पात्रे वा स्थाप्यं। अतो ८ रति घृतमधुभ्यां लीढ्वा यथाविध्यनुपानं कुर्यात् लौहान्तरवच्चाचरेत्।

इति वैद्यकसारोद्धारे अम्लपित्ताधिकारः ॥

चतुर्दशः परिच्छेदः

# चर्मरोगचिकित्सोपदेशः

## ६३। अथ विसर्प-चिकित्सा

विरेकवमनालेप-सेचनासृग्विमोक्षणैः।
उपाचरेद् यथादोषं विसर्पानविदाहिभिः॥

विसर्पत वान्ति कराव, उदर चलाव, लेप दिव, सेचन नुवाव, तेज कटाव। दूषित द्रव्य नाग्वाव। विदाहिवस्तु, गाजखरिचा इसव वर्जिव।

पटोलपिचुमर्द्दाभ्यां पिप्पल्यामदले च।
विसर्पे वमनं शस्तं तथैवेन्द्रयवैः सह॥

पटोलपत्र, निमछाल मिलि १ पल, जल ८ पल, शेष २ पल, पिप्पलीचूर्ण ३२ रति प्रक्षिप्यालोड्य, पीत्वा वमेत्।

त्रिफलारससयुक्तं सर्पिस्त्रिवृतया सह।
प्रयोक्तव्यं विरेकार्थे विसर्पज्वरशान्तये॥

त्रिफला मिलि १ पल, जल ८ पल, शेष २ पल, प्रक्षेप घृत, त्रिवृत चूर्ण ६४ रति पीत्वा रेचयेत्।

रसमामलकीनां वा घृतमिश्रं प्रदापयेत्।
तदेव शुद्धकोष्ठाय त्रिवृच्चूर्णयुतं हितं॥

पूर्व्ववदामलकी रस २ पल, घृत ६८ रति कठिन कोष्ठे तेड़ियाचूर्ण ६४ रति दत्वा रेचयेत्।

वातविसर्पे—तृणवर्ज्ज प्रयोक्तव्य पञ्चमूलचतुष्टयं।
प्रदेहसेकसर्पिभिर्विसर्पे वातसम्भवे॥

करञ्ज, गोक्षुर, झिगिट, कूर, कण्टकारी, इदं कण्ठ पञ्चमूलम्, एवं वृहती, कण्टकारी, शालानी, पिठानी, गोक्षुर स्वल्पपञ्चमूलम, बेल, मातघिला, गमारी, पारलि, गणियरी, वृहत् पञ्चमूलमिदम्, भूमिकुष्माण्ड, श्यामालता, हरिद्रा, गुड़ूची, मेदा, सिंही, आकलविन्धि बल्ली पञ्चमूल।

चारियोविध पञ्चमूलेरे वा एको एको पञ्चमूलेन वा लेप दिव। सेतु दिव घृतसाधन एषां योगः। घृतादिसाधनं क्काथ कल्काभ्यां।

## कुष्ठादिलेपः

कुष्ठं शताह्वासुरदारुमुस्ता वाराहिकुस्तुम्बुरुकृष्णगन्धाः ।
वातेके वंशार्त्तगलाश्च योज्याः सेकेषु लेपेषु तथा घृतेषु ॥

कुर, शुल्फा, उशेकाठ, मथा, वका भानकेरेला, धनीया, कृष्णगन्धा ( शोभाञ्जन ) आकणमूल, सिग्रुमूल, वंशलोचन, आगरा तदभावे अर्जुनछाल, एषा लप सेक घृतसाधनेषु योज्य ।

## प्रपौण्डरीकादिलेपः

पित्तविसर्पे—प्रपौण्डरीकमञ्जिष्ठा पद्मकोशीरचन्दनैः ।
सयष्टीन्दीवरैः पित्ते क्षीरपिष्टैः प्रलेपनम् ॥

पद्म, मजाठि, पद्मकाठ, विरिणा, रक्तचन्दन, यष्टिमधु, नीलसेंट एभिः समैर्दुग्धपिष्टै शतधौत घृत-मिश्रैर्लेप ।

न्यग्रोधपादास्तरुणाः कदलीगर्भ एव च ।
विसग्रन्थिश्च लेपः स्याच्छतधौतघृताप्लुतः ॥

वरगच्छर शिपा, पानीमथा, कदलागर्भर थुरिया, मृणालर गाठि, सवाके एकलग वा एकके पिष्ट शतधौत घृतैर्लेप ।

कफविसर्पे— गायत्री सप्तपर्णाब्द वासारग्वधदारुभिः ।
कुटन्नटैर्भवल्लेपो विसर्पे श्लेष्मसम्भवे ॥

खदिरसार, चतायना छाल, मथा, वासक, सोणाम्रपात, उशेकाठ, कवर्तमुस्तक सम पिष्ट लेपः ।

वमनम्—मदनं मधुकं निम्बं वत्सकस्य फलानि च ।
वमनञ्च विधातव्य विसर्पे कफसम्भवे ॥

कोटकरागुटी, यष्टिमधु, निमछाल, एषा मिलि २ पल, जल ८ पल शेष २ पल, कुटजगुटीर चूर्ण प्रक्षेप ३२ रति आलोड्य पीत्वा वमेत ।

त्रिफलापद्मकोशीर-समङ्गाकरवीरकम् ।
नलमूलमनन्ता च लेपः श्लेष्मविसर्पहा ॥

त्रिफला, पद्मकाष्ठ, विरिणामूल, मजाठि, करवीर, नलमूल, एभिः सममागैः पिष्टै र्लेपः ।

### चतुःसमलेपः

शिरीषोशीर-नागाह्व हिंस्राभिर्लेपनाद् द्रुतम् ।
विसर्पाश्च सविस्फोटाः प्रशम्यन्ति न संशयः ॥

शिरीषछाल, विरिणामूल, नागेश्वर, कन्थियाकटामूल सम पिष्ट्वा लेपः ।

### दशाङ्गोलेपः

शिरीषयष्टिनतचन्दनैला मांसीहरिद्राद्वयकुष्ठवालैः ।
लेपो दशाङ्गः सघृतः प्रदिष्टो विसर्पकण्डूज्वरशोथहारी ॥

शिरीषछाल, यष्टिमधु, तगरमूल, रक्तचन्दन, एलाचि, जटामांसी हरिद्राद्वय, कुठ, सुगन्धवाला, सम पिष्ट्वा सघृतोलेपः ।

### नवकषायगुग्गुलुः

अमृतवृषपटोलं निम्बकल्कैरुपेतम् ।
त्रिफलखदिरसारं व्याधिघातञ्च तुल्यम् ॥
क्वथितमिदमशेषं गुग्गुलोर्भागयुक्तं ।
जयति विषविसर्पं कुष्ठमष्टादशाख्यम् ॥

आमरिलता, बासक, पटोल, निम, त्रिफला, खदिर सार, सोणाछाल मिलित्वा २ तोला, जल ४ पल, शेष १ पल, शोधित गुग्गुलु ६४ रति दत्वा पेयं ।

चन्दनं नागपुष्पञ्च तण्डुलीयकसारिवे ।
शिरीषवल्कलं जाती लेपः स्याद्दाहनाशनः ।

रक्तचन्दन, नागेश्वर, चुतगाशाक, श्वेतगेंदेली शिरीष छाल, मालती सम पिष्ट्वा, शतधौतघृतेन लेपः ।

**इति वैद्यकसारोद्धारे विसर्पाधिकारः ॥**

## ६४ । अथ विस्फोट-चिकित्सा

पटोलामृतभूनिम्ब-वासकारिष्टपत्रकैः ।
खदिराब्दयुतः क्वाथो विस्फोटार्त्तिज्वरापहः ॥

पटोल, आमुरिलता, माहतिता, बाहक, निम, क्षेत्रपर्पटी, खयेर, मथा एषां मिलित्का २ तोला, पानी ४ पल, शेष १ पल पेयम ।

कुण्डली-पिचुमर्दाम्बु-खदिरेन्द्रयवाम्बु वा ।
विस्फोटान् नाशयत्याशु वायुर्जलधरानिव ॥

गुड़ूची, निम द्वयोर्मिलित्वा २ तोला, जल ४ पल, शेष १ पल मधु दत्वा पेयं । एवं खदिर इन्द्रयवयोः क्वाथं पेयम् ।

शिरीषपूगमञ्जिष्ठा-चव्यामलकयष्टिकाः ।
सजातीपद्मकक्षौद्रा विस्फोटकवड़ग्रहाः ॥

शिरीषछाल, ताम्बुल, मजाठि, चविक, आमलकी, मधुयष्टि, जाइपत्री, पद्मकाठ, एषामेकेन, मधुयुतेन कवडः ।

मुखजाते विस्फोटे—शिरीषोडुम्बरौ जम्बुः सेकालेपनयोर्हिताः ।
श्लेष्मातकत्वचो वापि प्रलेपाश्च्योतने हिताः ॥

शिरीषछाल, डिमरुछाल, जाम्बुछाल एषां क्वाथ कृत्वा सेकः, एषां पिष्ट्वा वा लेपः । ओदालक्वाथं कृत्वा सेकः, तेन पिष्ट्वा लेप ।

## पञ्चतिक्तकघृतम्

पटोलसप्तच्छदनिम्बवासा फलत्रिक-च्छिन्नरुहाविपक्कम ।
तत् पञ्चतिक्तं घृतमाशु हन्ति त्रिदोषविस्फोटविसर्पकण्डूः ॥

घृत ३ सेर, क्वाथ पटोल, चतीयना, निम, वासक, त्रिफला, आमरिलता । एषां पञ्चानां मिलि १२ पल ६ तोला २४ रति, जल ४८ सेर, शेष १२ सेर, कल्क त्रिफला ८ पल ८ रति, तिक्तपञ्चानां क्वाथः, त्रिफलायाः कल्कः ।

अथ स्नायुरोगे—रोगस्तु स्नायुकाख्योयः विधिस्तत्र विसर्पवत् (विसर्पतुल्यं) ।
गव्यं सर्पिस्त्र्यहं पीत्वा निर्गुण्डीस्वरसं त्र्यहम् ॥
पिबन् स्नायुकमत्युग्रं हन्त्यवश्यं न संशयः ॥

गोघृत ३ दिन खाव । पश्चात् पचनीया रस खाव ३ दिन । सिग्रमूल पत्र काञ्जिकेन पिष्ट्वा सैन्धवेन लेपः ।

हन्ति स्नायुगतं रोगं यद्वा मोचत्वचो लेपः ॥

कदलीपत्रं पिष्ट्वा लेपः ।

**इति वैद्यकसारोद्धारे विस्फोटस्नायुरोगाधिकारः ॥**

## ६५। अथ मसूरिका-चिकित्सा

सर्व्वासां वमनं पथ्यं पटोलारिष्टवासकैः।

सकलो मसूरिकात वान्ति कराव पथ्य। वनमहौषध पटोलपत्र, निमछाल, वाहक मिलित्वा ८ तोला, जल ८ पल, शेष २ पल, मधु ८ तोला, वच, यष्टिमधु, इन्द्रयव प्रक्षेप चूर्ण ३२ रति, मदनफल २ तोला पिष्ट्वा दत्वालोड्य पीत्वा वमेत।

मक्षौद्रं पाययेद् ब्राह्मीरसं वा हैलमोचिकं।

मालमोग, शाकरस ८ तोला, मधु ८ तोला मिश्रयित्वा पीत्वा वमेत। एव हिलमोचिका।

रेचनं— सुरसापत्रनिर्य्यासं हरिद्राचूर्ण संयुतम।

रोमान्ती ज्वरविस्फोटमसूरीशान्तये पिबेत्॥

तुलसीपत्र रस १ पल, हरिद्राचूर्ण ६४ रति पेयं विरेकार्थं।

रुद्राक्षं मरिचैर्य्युक्तं पीतं पर्य्युषिताम्भसा।

त्र्यहात् पापरुजं हन्ति दृष्टं वारसहस्रशः॥

रुद्राक्ष मरिचद्वयोर्वा शीतजलेन पिष्ट्वा पेयम।

शेलुत्वक्कृतशीताम्भः सेकं वा कायशोषणे।

ओदाल छाल काथ करि सेक दिव शुकनि धरे।

वाते—तर्पणं वातजायां प्रागलाजचूर्णैः सशर्करैः।

भोजनं तिक्तयूषैश्च प्रतुदानां रसेन वा।

खैचूर्ण चिनि जलेन मिश्रयित्वा खादेत्। तिक्त यूष बोले पटोल पत्र मुग एतयोर्यूषः। प्रतुद बोले पारावत कपोतादयः।

द्विपञ्चमूलं रास्ना च दार्व्व्युशीरं दुरालभा।

सामृतं धान्यकं मुस्तं जयेद्वात मसूरिथतां॥

दशमूल, कपीठारि, आचुकाठ, विरिणार मूल, कञ्जेलता, गुड़ची, मथा, धनीया एषां मिलित्वा २ तोला, जल ८ पल, शेष २ पल पेयं।

द्राक्षाकाश्मर्य्य-खर्जूर-पटोलारिष्टवासकैः [ सारकैः ]।

लाजामलकदुःस्पर्शैः सितायुक्तन्तु पैत्तिके॥

द्राक्षा तदभावे गमारी गुटी, खर्जूर, पटोल, निम, खदिर [ वासक ] एषां मिलि २ तोला जल ४ पल, शेष १ पल। लाजाचूर्ण शर्करयोः प्रक्षेपः पेयः।

१। सुपवीपत्रनिर्य्यासं हरिद्राचर्णसंयुतम्। —इति चक्रदत्तः।

शिरीषोडुम्बराश्वत्थ-शेलुन्यग्रोधवल्कलैः ।
प्रलेपः सघृतः शीघ्रं व्रणविस्फोटदाहहा ॥

शिरीष छाल, डिमरु छाल, आहत छाल, ओदाल छाल, वरछाल, समभाग पिष्टैः शतधौत घृत-मिश्रैर्दाहे लेपः ।

## निम्बादिः

निम्बं पर्पटकं पाठां पटोलं कटुरोहिणी ।
वासा दुरालभां धात्रीमुशीरं चन्दनद्वयं ॥
एष निम्बादिकः ख्यातः पीतः शर्करया युतः ।
हन्ति त्रिदोषमसूरीं ज्वरविसर्पसम्भवां ॥
उत्थिता प्रविशेद् यातु पुनस्तां वाह्यतो नयेत् ॥

निम, पर्पट, आकलविन्धि, पटोल, कटकी तिता, वाहक, कुत्रं लता, आमलकी, विरिणामूल चन्दनद्वय एषां मिलित्वा २ तोला, जल ४ पल, शेष १ पल चिनि दत्वा पेयं ।

## पटोलादिः

पटोलकुण्डलीमुस्त-वृषधन्वयवासकैः ।
भूनिम्बनिम्बकटुका पर्पटैश्च शृतं जलम ॥
मसूरी शमयेदामां पक्वाञ्चैव विशोषयेत् ।
नातः परतरं किञ्चिद् विस्फोटज्वरशान्तये ॥

पटोल, गुड़ूची, मथा, वाहक, कुत्रं लता, माहतिता, निम, कटकी, पर्पट एषां मिलित्वा २ तोला, जल ४ शेष १ पल पेयं ।

## खदिराष्टकम्

खदिरस्त्रिफलानिम्बपटोलामृतवत्सकैः [ वासकैः ]
क्वाथोऽष्टकाख्यो जयति रोमान्तिकमसूरिकाः ॥
कुष्ठविसर्पविस्फोटकण्ड्वादीनपि पानतः ।

खयेर, त्रिफला, निम, पटोल, गुड़ूची, वाहक, एषां मिलित्वा २ तोला, जल ४ पल, शेष १ पल पेयं ।

अपक्कदाहे— सौवीरेण तु संपिष्टं मातुलुङ्गस्य केशरम् ।
प्रलेपात् पाचयत्याशु दाहश्चाशु नियच्छति ॥

काञ्जि, सोलेङ्गर जिम द्वयमेकीकृत्य लेपं दद्यात् । दाहशान्ति पाकं कुर्य्यात् ।

गुडूचीमधुकं द्राक्षा-मोरटं दाड़िमैः सह ।
पाककाले तु दातव्य भेषजं गुड़संयुतम् ॥
तेन पाकं व्रजत्याशु न च वायुः प्रकुप्यति ॥

गुड़ूची, यष्टिमधु, द्राक्षा, इक्षु, दाड़िम बीज एषां मिलित्वा २ तोला, जल ८ पल, शेष २ पल पुरातन गुड़ेन पेयम् ।

लिह्याद्वा बादरं चूर्णं पाचनार्थं गुड़ेन तु ।
अनेनाशु विपच्यन्ते वातपित्तकफात्मिकाः ॥

बदरी छालर चूर्ण घृतेन पेयम् ।

जातीपत्रं समञ्जिष्ठं दार्व्वीपूगफलं शमीम् ।
धात्रीफलं ममधुकं क्वथितं मधुसंयुतम् ॥
मुखरोगे कण्ठरोगे गण्डूषार्थं प्रशस्यते ।

जातपत्री, मजाठि, आचुकाठ, ताम्बुल शमी, आमलकी, यष्टिमधु, एषां मिलित्वा २ तोला, जल ४ पल, शेष १ पल पेयं ।

## सव्रणकरणक-दुर्गन्धहालेपः

निशाद्वयोशीर-शिरीष-मुस्तकैः सलोध्रभद्रश्रिय-नागकेशरैः ।
सस्वेदविस्फोट-विसर्प कुष्ठ-दौर्गन्ध्यरोमान्तिहरः प्रदेहः ॥

हालधि, आचुकाठ, विरिणामूल, शिरीष, मथा, मूमलति, जातिचन्दन, नाहरफुल एतैः समभाग पिष्टैः लेपः ।

मसूरिकान्ते शोथः स्यात् कूर्परे मणिवन्धके ।
तथा सफलके वापि दुश्चिकीत्स्यः सुदारुणः ॥

मसूरिकाअन्तं मणिवन्ध, वृद्धाङ्गुष्ठर गागठीत शोथ जन्मे, तवे असाध्य हइ ।

**इति वैद्यकसारोद्धारे मसूरिकाधिकारः ॥**

पञ्चदशः परिच्छेदः

# क्षुद्ररोगादिचिकित्सोपदेशः

## ६६। अथ क्षुद्ररोग-चिकित्सा

तत्राजगल्लिकामामां जलौकाभिरुपाचरेत्।
शुक्तिसौराष्ट्रिकाक्षार-कल्कैश्चालेपयेन्मुहुः॥

शुक्तिक्षार, सौराष्ट्र मृत्तिका, यवक्षार, एतैः समभागैर्लेपः।

पादारिमाह— करञ्जवीजं रजनीं काशीश मधुकं मधु।
रोचनाहरितालञ्च लेपोऽयमलसे हितः।

एतैः समभागपिष्टैर्लेपः।

अलसे म्लैश्चिरं सिक्तौ चरणौ परिलेपयेत्।
पटोलारिष्टकाशीश-त्रिफलाभिर्मुहुर्मुहुः॥

काञ्जिकेन पादौ प्रक्षाल्य, पटोलपत्र, निम्वछाल, धातुकाशीश, त्रिफला, एतैः समैः काञ्जिकेन पिष्टैः पादयोर्लेपः।

पादस्फोटे विषधरे, वाट वुलिव नोवारे।

### उपोदिकाक्षारतैलम्

उपोदिका-सर्षपनिम्बमोच-कर्कारुकैर्व्वारुकभस्मतोये।[१]
तैलं विपक्वं लवणांशयुक्तं तत् पाददारी विनिहन्ति लेपात्॥

तैल ३ सेर, कलमौशाक, सेवामरियह, निमछाल, कलम थूना, कुष्माण्डलता, वनचिचिण्डालता एषां मिलित्वा क्षार ६४ पल सराइ लव। (जल ६४ पल शेष १६ पल) कल्क सैन्धव ८ पल दत्वा सिद्धं।

यौवनपिडकामाह—युवानपिडकान्यच्छ नीलिकाव्यङ्गशर्कराः।

शालमन, लोमकण्टक, चेलचोम।

शिराव्यध्येः प्रलेपैश्च जयेदभ्यञ्जनैस्तथा।

शिर मेलाव, लेप दिव, तैल घर्षण क्रिया करिव।

---

१। उपोदिका नालं ग्राह्यम्। मोचकः कदलीकोण्टकः। कर्कारुः कुष्माण्डभेदः, एर्व्वारुः कर्कटी अनयोर्नाडी। एषां क्षारोदके चतुर्गुणे सैन्धव-कल्केन तैलं पक्तव्यम। —चक्रदत्ते शिवदासः।

लोध्रधान्यवचालेपस्तारुण्य पिड़कापहः।

भूम्लति, धनीया, वच समभागैः पिष्ट्वा लेपः।

तद्वद्गोरोचनायुक्तं मरिचं मुखलेपनात्।

गोरोचना मरिच पिष्ट्वा लेपः।

सिद्धार्थकवचालोध्रसैन्धवैश्च प्रलेपनम्।

सेवासरियह, वच, भूमलति, सैन्धव, एतैः पिष्ट्वा लेप।

व्यङ्गे—व्यङ्गेषु चार्जुनत्वग्वा मञ्जिष्ठा वा समाक्षिका।
लेपः सनवनीता वा श्वेताश्वखुरजामसी२॥

आपुनि शुकाइ थका अर्जुनछाल पिष्ट्वा मधुना लेपः। तथा मञ्जिष्ठा पिष्ट्वा मधु दत्वा लेपः।

श्वेताश्वखुरशब्देन श्वेतापराजितेति गौरीयाः।

पुरि छाइ नवनीतेन लेप। शुक्लघोटकखुरमसीति—कामरूपीया।

रक्तचन्दनमञ्जिष्ठा-कुष्ठलोध्रप्रियङ्गवः।
वटाङ्कुरमसूराश्च व्यङ्गघ्ना मुखकान्तिदाः॥

रक्तचन्दन, मजाठि, कुर, भूमलति छाल, वनमाला, व थुरि मसूर एतैः पिष्ट्वा लेपः।

मसूरैः सर्पिषा पिष्टैर्लिप्तमास्यं पयोऽन्वितैः।
सप्तरात्राद् भवेद् वक्त्रं पुण्डरीकदलोपमम्॥

मसूर घृतेन पिष्ट्वा लेपः।

मातुलुङ्गजटासर्पिः शिलागोशकृतोरसः।
मुखकान्तिकरोलेपः पिड़कातिलकालजित्॥

सोलेङ्गरमूल, मन.शिला, गोमयरस पिष्ट्वा घृतेन लेपः। शालमन, लोमकण्टक, चेलुचोम् इसव गुच्छे।

## मञ्जिष्ठाद्यं तैलम्

मञ्जिष्ठा मधुकं लाक्षा [द्राक्षा] मातुलुङ्गं सयष्टिकं३।
कर्षप्रमाणैरेतैस्तु तैलस्य कुडवं तथा॥

२। श्वेता, श्वेतापराजिता, अश्वखुरः, अश्वस्य घोटकस्य खुरः तयोर्मसी भस्म। अन्ये तु धवल-घोटक खुरमसीत्याहुः।

३। मधुकं, सयष्टिकमिति पदद्वयोपादानात् जलस्थलज भेदेन, यष्टिमधु द्वयमिह ग्रहणमिति।
—शिवदासः।

आजं पयस्तद्द्विगुणं शनैर्मृद्वग्निना पचेत् ।
नीलिका-पिडकाव्यङ्गानभ्यङ्गादेव नाशयेत् ।
मुखं प्रसन्नोपचितं वलीपलितवर्जितम् ।
सप्तरात्रप्रयोगेण भवेत् कनकसन्निभम् ॥

तिलतैल ३ पोवा, छागदुग्ध ३ पोवा, कल्क, मञ्जिष्ठा, मधुयष्टि [लाक्षा], गमारीगुटी, सोलेङ्गमूल, यष्टिमधु, प्रत्येक २ तोला ।

## चित्रकाद्यं तैलम्

चित्रकं दन्तीमूलञ्च कोषातकीसमन्वितम् ।
कल्कं पिष्ट्वा पचेत् तैलं केशदद्रुविनाशनम् ॥

तिलतैल ३ पोवा, जल ३ सेर, कल्क चित्रक, दन्तो, कोषातकी एषां पिष्ट्वा ८ तोला ।

## गुञ्जाद्यं तैलम्

गुञ्जाफलैः शृतं तैलं भृङ्गराजरसेन तु ।
कण्डूदारुणहृत् कुष्ठकपालव्याधिनाशनम् ॥

तिलतैल ३ सेर, भृङ्गराज रस १२ सेर, कल्क गुञ्जाफल १ पल ।

हस्तिदन्तमसीं कृत्वा मुख्यञ्चैव रसाञ्जनं ।
लोमान्यनेन जायन्ते नृणां पाणितलेष्वपि ॥

हस्तिदन्त, पुटदग्ध भस्म, रसाञ्जनाभ्यां लेपः ।

हस्तिदन्त मसीं कृत्वा तैलेन सह योजयेत् ।
हस्तेष्वपि च जायन्ते रोमापि नात्र संशयः ॥

हस्तिदन्त भस्म तैलेन लेपयेत् ।

भल्लातक-बृहतीफल-गुञ्जामूल-फलेभ्य एकेन ।
मधुसहितेन विलिप्तं सुरपति लुप्तं समं याति ॥

भल्ला, बृहतीफल, गुञ्जामूल पिष्ट्वा लेपः ।

## मालत्याद्यं तैलम्

मालतीकरवीराग्नि नक्तमालविपाचितम् ।
तैलमभ्यञ्जने शस्तमिन्द्रलुप्तापहं परम् ॥
इदन्तु दुरितं [ त्वरितं ] हन्ति दारुणं नियतं नृणाम् ॥

कटुतैल ३ पोया ४ तोला, जल ३ सेर, कल्क मालतीपत्र, करवीर, चित्र, लेटागुटी मिलित्वा ८ तोला ।

## [ स्वल्प ] भृङ्गराजतैलम्

भृङ्गराजत्रिफलोत्पलशारि लौहपुरिषसमन्वितकारि ।
तैलमिदं पच-दारुणहारि कुञ्चितकेशघनस्थिरकारि ४ ॥

तैल ३ सेर, भृङ्गराज रस १२ सेर, कल्क त्रिफला, नीलोत्पल, अनन्तमूल, लोहाचूर, आम्रबीज एषां प्रत्येकं १ पल २ तोला ६ रति ।

## वटावरोहादित्यपाकतैलम् [ आदित्यपाकगुरुचीतैलम् ]

वटावरोह-केशिन्योश्चूर्णेनादित्य-पाचितम् ।
गुड़ूचीस्वरसे तैलञ्चाभ्यङ्गात् केशरोहणम् ॥

तिलतैल २ सेर, गुड़ूची रस ३ सेर, कल्क वटावरोह, टिकनिवन्धा मूल, द्वयोः चूर्णं प्रक्षिप्य रौद्रे स्थाप्यं, द्रवशोषनं कृत्वा ।

## चन्दनाद्यं तैलम्

चन्दनं मधुकं मूर्व्वा त्रिफला-नीलमुत्पलम् ।
कान्तावटावरोहश्च गुड़ूची-विसमेव च ॥
लौहचूर्णं तथाकेशी सारिबे द्वे तथैव च ।
मार्कव-स्वरसेनैव तैलं मृद्वग्निना पचेत् ॥
शिरस्युत्पतिताः केशा जायन्ते घनकुञ्चिताः ।

४ । भृङ्गराज इत्यादौ, उत्पलं नीलोत्पलम्, सारि सारिवा अनन्तमूलं, समन्वितकारः सहकारः, समन्वितशब्दस्य सहार्थत्वात् अस्य तु फलमध्यं ग्राह्यं, केश्यत्वात् कृष्णीकरणत्वाच्च । —शिवदासः ।

दृढमूलाश्च स्निग्धाश्च तथा भ्रमरसन्निभाः।
नस्येनाकालपलितं निहन्यात् तैलमुत्तमम्॥

तिलतैल ३ सेर, भृङ्गराज रस १२ सेर, कल्क रक्तचन्दन, यष्टिमधु, वनरिहा, त्रिफला, नीलभेट, प्रियङ्गु, तदभावे वनमाला, बटाङ्कुर, गुड़ूची, मृणाल, लौहपता, टिकनिवन्धा, श्यामालता, अनन्तमूल, केचित् सारिवाद्वयं, गन्धभेदेलो शीत भेदेलो गृह्यते। प्रत्येक ४ तोला १३ रति।

## केशकृष्णीकरणम्

त्रिफलानिलिनीपत्रं लौहभृङ्गरजः समम्।
अविमूत्रेण संयुक्तं कृष्णीकरणमुत्तमम्॥

त्रिफला, लोहाचूर्ण, रसपात भृङ्गराजचूर्ण एषां समभागं छागीमूत्रेण पिष्ट्वा तैलेनाप्लाव्य दिनद्वयं त्रयं वा लौहपात्रे निधाय स्थापयेत्। पश्चात शिरोदेशे प्रहरद्वयं श्यम्वा स्थाप्यं।

इति वैद्यकसारोद्धारे क्षुद्ररोगाधिकारः॥

## ६७। अथ मुखरोग-चिकित्सा

ओष्ठ प्रकोपे सेतु दिव, तैल घसिव, घृत तैल पान, लेप दिव।

श्रीवेष्टकं सर्जरसं गुग्गुलुं सुरदारु च।
यष्टीमधुकचूर्णञ्च विदध्यात् प्रतिसारणम्॥

कुन्दुरखुटी, धूना, गुगुल, उर्णकाठ, यष्टिमधुः समभाग चूर्णं ओष्ठे घर्षणं।

त्रिकटु सर्जिकाक्षारः क्षारश्च यावशूकजः।
क्षौद्रयुक्तं विधातव्यमेतच्च प्रतिसारणम्॥

त्रिकटु, सर्जिकाक्षार, यवक्षार, एतैः समभागैः मधुप्लुतैः घर्षणीयं।

हितञ्च त्रिफलाचूर्णं मधुयुक्तं प्रलेपनम्।

त्रिफलाचूर्णं मधु दत्वा लेपः।

## ६८। अथ दन्तरोग-चिकित्सा

शीतदाह बोले, चेचा वस्तु खाले, लले शिरशिराह।

शीतदाहे—शीतादे हृतरक्ते तु तोये नागरसर्षपान्।
निःक्वाथ्य त्रिफलाञ्चापि कुर्य्याद् गण्डूषधारणम्॥

आदा, सर्षप, त्रिफला, समैः क्वाथैः गण्डूषः।

गण्डूषे क्षीरिणो योज्याः सक्षौद्र-घृतशर्करा।

वट, डिमरु, आहत, जरि, थैकर, एषां मिलि १ पल, जल ८ पल, शेष २ पल गण्डूष धारणम्।

शौषिर बोले। दात टेङ्गाह।

शौषिरमाह—शौषिरे हृतरक्ते तु लोध्रमुस्ता रसाञ्जनैः।
मक्षौद्रैः शस्यते चैव गण्डूषे क्षीरिणो हिताः॥

लोध्र मथा, रसाञ्जन, मधुमिश्रैः लेप।

### कुष्ठादिचूर्णम्

कुष्ठं धात्री लोध्रमब्दं समङ्गा-पाठातिक्तातेजनीपीतिका च।
चूर्णं शस्तं घर्षणं तद्द्विजानां रक्तस्रावं हन्ति कण्डूं रुजाञ्च॥

कूर, आमलकी, आन्तुकाठ, मथा, मजाठि, आकलविन्धि, कटुकी, तेजमुइ, हालधि एषां सममागचूर्णं मधुना घर्षणीयं। चलदन्त लरा दात।

चलदन्तस्थिरकरं कुर्य्याद् वकुलचर्व्वणं।
आस्तगल[५]दलक्वाथ गण्डूषो दन्तचालनुत्॥

आर्त्तगला (आगराणां) १ पल, जल ८ पल, शेष २ पल अनेन किञ्चिदुष्णेण गण्डूषधारणम्।

दन्तचाले हितं श्रेष्ठं तिलोग्रा चर्व्वणं सदा।

कृष्णतिल, वच द्वयोश्चर्व्वणम।

दन्तचाले तु गण्डूषो वकुलत्वक् कृतो हितः।

वकुलछाल १ पल, जल ८ पल, शेष २ पल मुखे धार्य्यम्।

५। आर्त्तगलः, हागड़ा ख्याता इति शिवदासः।
आर्त्तगलः नीलझाँटीति। आयुर्व्वेदसंग्रहे देवेन्द्रः।

गण्डूषो दन्तचालघ्नः स्नेहाढ्यो दशमूलितः।

दशमूल मिलित्वा ८ तोला, जल ८ पल, शेष २ पल, तिलतैल १ तोला, घृत १ तोला मुखे धार्य्यं।

अथ दन्तपुटके— दन्तपुप्पुटके कार्य्यं तरुणे रक्तमोक्षणम्।
सपञ्चलवणक्षारः सक्षौद्रः प्रतिसारणम् ॥

सैन्धव, सौवर्च्चल, विट्, कर्कच, पानीलोण, यवक्षार एतैः समभागैः मधुमिश्रैः घर्षणम्।
दन्तविष, कोनवस्तु चोवाइते चके ताके हर्ष वोले।

दन्ततोदहर्षे—दन्तानां तोद हर्षे च वातघ्नाः कवला हिताः।
घृत-यष्टि-तिलक्षौद्र-दुग्ध-गण्डूषधारणम् ॥

यष्टिमधु, तिल, घृत, मधु, दुग्ध समैः मुखे धारयेत्।

माक्षिकं पिप्पली-सर्पिं मिश्रितं धारयेन्मुखे।
दन्तशूलहरं प्रोक्त प्रधानमिदमौषधं ॥

मध २ तोला, पिप्पलीचूर्ण ६० रति, घृत ६० रति आलोड्य मुखे धार्य्यम्।

वृहत्यास्तु फलं पिष्ट्वा सर्पिषा सह दाहयेत्।
तस्य धूमो मुखेनैव धार्य्योदन्तरुजापहः ॥

कण्टकारी फल वा भेकुरि घृतेन पिष्ट्वा दाहयेत्। तद्धूमो मुखे धार्य्यः।
दन्तवेष्ट वोले दन्तर कोखरे रक्तापरि उखहे तेज वहे, विष धरे।

दन्तवेष्टे—विस्राविते दन्तवेष्टे व्रणन्तु प्रतिसारयेत्।
लोध्रपतङ्गमधुकलाक्षाचूर्णैर्मधूत्तरैः ॥

भूमलति, रक्तचन्दन, यष्टिमधु, लाक्षा एषां चूर्णं मधुयुतैः घर्षणं।

कृमिदन्ते—कपालिकाकृच्छ्रसाध्या तत्राप्येषा क्रिया मता।
जयेद् विस्रावणैः स्विन्नमचलं क्रिमिदन्तकम् ॥
तथावपीडैर्वातघ्नैः स्नेहगण्डूषधारणैः।

दन्तकपालिका व्याधि कष्टसाध्य, तवे क्रिया तेज गुचाव, खुचा मारिव, जोंक मेलाइ तैल गण्डूष धरिव।

भद्रदार्व्यादिवर्षाभूलेपैः स्निग्धैश्च भोजनैः।

भद्रदार्व्यादि पुनर्नवा द्वयोर्लेपः।

हिङ्गुंसोष्णन्तु मतिमान् क्रिमिदन्तेषु दापयेत्।

सराहर आगत हिङ्गु तप्त करि क्रिमि दन्तत दिव।

बृहती-भूमिकदम्बक-पञ्चाङ्गुल-कण्टकारिकाक्वाथः ।
गण्डूषस्तैलयुक्तः क्रिमिदन्तक-वेदनानाशनः ॥

भेकुरि, भूमिकदम्ब, एरण्डमूल, कण्टकारी मिलित्वा १ पल, जल ८ पल, शेष २ पल, तैल २ तोला, मिश्रयित्वा गण्डूषधारणं कोष्णं। वरमरमूल, चर्व्वयित्वा मुखेन धार्य्यं । तथा कोवाचुटि चोबाव। तथा सिजुमूल चोबाव ।

चर्व्वयेत् वृषमूलम्वा क्रिमिदन्तकरोगवान् ।

बाह्कमूल चोबाव ।

सप्तच्छदार्क-क्षीराभ्यां पूरणं क्रिमिशूलनुत् ।

चतीयना आठा, आकण-आठाद्वयोः पूरणम ।

## दन्तरोगाशनिचूर्णम्

जातीपत्र-पुनर्णवा तिलकणा-कारण्ड [ कौरुण्ट ] मुस्तावचाः ।
शुण्ठी-दीप्य-हरीतकी च सघृतं चूर्णं मुखे धारयेत् ॥
वातघ्नं क्रिमिकर्णशूलहननं, सर्व्वामयध्वंसनं ।
दौर्गन्ध्यादि समस्तदोषहरणं दन्तस्य रोगाशनिः ॥

जाइपत्रो, पुनर्णावा, तिल, कणा, कारण्ड, मथा, वच, शुण्ठी, यनो, शिलिखा एषां सममागचूर्णो घृतेन मिश्रयित्वा मुखे धारयेत् ।

## मुस्ताद्यं तैलम्

मुस्ता-मधुक-निर्गुण्डी खदिरोशीरदारुभिः ।
समञ्जिष्ठा-विडङ्गैश्च सिद्धं तैलं क्रिमीन् जयेत् ॥

कटुतैल ३ सेर, जल १२ सेर, कल्क मथा, यष्टिमधु, पचतीयामूल, खदिर, विरिणा, उबै, मजाठि, विडङ्ग ८ पल ।

## भद्रमुस्ताद्या-वटिका

भद्रमुस्ताभयाव्योष-विडङ्गारिष्टपल्लवैः ।
गोमूत्रपिष्टैर्गुटिका छायाशुष्कां प्रकल्पयेत् ॥

तां निधाय मुखे सुप्याच्चल-दन्तातुरोनरः ।
नातः परतरं किञ्चिच्चल-दन्तस्य भेषजम् ॥

भद्र, मथा, शिलिखा, त्रिकट, विड़ङ्ग, निमपात, सममागचूर्ण गोमूत्रेण पिष्टा, छायाशुष्का वटिकाः कार्य्याः। तत एका च नदन्त मुखे धार्य्या।

फलान्यम्लानि शीताम्बु रुक्षाणं दन्तधावनं ।
तथाति कठिनं भोज्यं दन्तरोगी न भक्षयेत् ॥

अम्लफल, शीतलजल, रुक्षद्रव्य, दन्तधावन ( दाँतन ) एवं कठिनद्रव्य भक्षण दन्तरोगी वर्ज्जिब।

इति दन्तरोगचिकित्सा ॥

## ६६ । अथ जिह्वारोग-चिकित्सा

जड़जिह्वायां—गृह्णीयात् कवलान् वापि गौरसर्षपसैन्धवैः ।
श्वेतसर्षपचूर्णानि सैन्धवेन मुखे भृतं ॥
पटोलनिम्बवार्त्ताकुक्षारयूषैश्च भोजयेत् ॥

पटोल, निम्बछाल, भेकुरि मिलित्वा क्काथे यवक्षार मिलितैः मुखे धृत. ।
कोटकरागुटी पुरि भस्म लवण मिश्रै जिह्वाघर्षणम, जिह्वाजाड्यं हन्ति ।

उपजिह्वायां उपजिह्वान्तु संलिख्य क्षारेण प्रतिसारयेत् ।

जिह्वार गोर कण्टेरे विन्धि रक्त गुचाव । यवक्षार घसिव । धोवा खाव ।

### व्योषाद्यं तैलं

व्योषक्षाराभयावह्नि चूर्णमेतत् प्रघर्षणम ।
उपजिह्वा प्रशान्त्यर्थमेभिस्तैलं विपाचयेत् ॥

त्रिकटु, यवक्षार, शिलिखा, चित्रक, एषां चूर्णानि उपजिह्वा घर्षणं, तैलपाके तिलतैल ३ सेर, जल १२ सेर, कल्क त्रिकटु, यवक्षार, शिलिखा, चित्रक मिलित्वा ८ पल ।

फलत्रयं जातीपत्रं क्वथितं धारयेन्मुखे ।
पीतं मधुयुतं जिह्वा कण्टकं पाकवर्ज्जितं ॥

त्रिफला, जातपत्री, मिलित्वा २ तोला, जल ८ पल, शेष १ पल, मधु ३२ रति दत्वा मुखे धार्य्यः ।

## ७० । अथ गलरोगे

तालुमूले कफासृग्भ्यां जायते गलशुण्ठिका ।
छित्त्वा तां व्योष-सिन्धुत्थ-वचाक्षौद्रैः प्रसारयेत् ॥

तालुर गुरित कफ तेज प्रकुपित हुइ जन्मे, ताके गलशुण्ठी [गलशुण्ठि] बोले । खुचा मारि निन्धि रक्त गुचाइ त्रिकटु, वच, सैन्धव एषां चूर्णं मधुनालोड्य घर्षयेत् ।

गलशुण्डी [ गलगण्ड ] समं याति वज्रीक्षीरेण लेपिता ।

त्रिकटु, वच, सैन्धव, सिजुक्षीरेण गलगण्डे लेपः ।

कुष्ठोषण-वचासिन्धु-कणापाठाप्लवैः सह ।
सक्षौद्रैर्भिषजा कार्य्यं गलशुण्डी प्रघर्षणम् ॥

कुर, मरिच, वच, सैन्धव, पिप्पली, आकलविन्धि, कैवर्त्तमुस्तक एषां समभागैः चूर्णैः मधुना घर्षणं ।

गलशुण्डी [गलगण्ड] हरं तद्वत् शेफालीमूलचर्व्वणम् ।

शेफाली फुलर शिपा चोवाव ।

## ७१ । अथ कण्ठरोग-चिकित्सा

कण्ठरोगत तेज कटाव । तीक्ष्ण औषध दिव । धूमपान कराव । नाकेरे औषध उजाव ।

कटुकाति-विषादारु-पाठामुस्त-कलिङ्गकाः ।
गोमूत्र क्वथिताः पेयाः कण्ठरोगविनाशनाः [ निसूदनाः ] ॥

कटकी, आतैच, उषै, आकलविन्धि, मथा, कुटजगुटी एषां मिलित्वा १ पल, गोमूत्र ४ पल शेष १ पल मधु दत्वा पेयं ।

पिप्पली-पिप्पलीमूल-चव्यचित्रकनागरैः ।
स्वर्जिकाक्षारतुल्यांशैश्चूर्णोऽयं गलरोगनुत् ।।

पिप्पली, पिप्पलीमूल, चै, चित्रक, आदा एषां समभाग चूर्णे स्वर्जिकाक्षारं दत्वा मधुना घर्षणीयम् ।

यवाग्रजं तेजवतीं सपाठां रसाञ्जनं दारुनिशां सकृष्णां ।
क्षौद्रेण कुर्य्याद् गुडिकां मुखेन तां धारयेत् सर्व्वगलामयेषु ॥

यवक्षार, तेजामुर, आकलविन्धि, रसाञ्जन, आचुकाठ, पिप्पली, एषां समभागचूर्णे मधुना गुडिका कार्य्या तामेकां मुखे धार्य्या ।

### इरिमेदाद्यं तैलम्

इरिमेदत्वक् पलशतमभिनवमापोथ्य खण्डशः कृत्वा ।
तोयाढ़कैश्चतुर्भिर्निक्वाथ्य चतुर्थशेषेण ॥
क्वाथेन तेन मतिमान् तैलस्यार्द्धाढ़कं शनैर्विपचेत् ।
कल्कैरक्षसमांशैर्मञ्जिष्ठा-लोध्रमधुकानाम् ॥
इरिमेद-खदिर-कट्फललाक्षा-न्यग्रोधमुस्त-सूक्ष्मैला ।
कर्पूरागुरुपद्मक-लवङ्गकक्कोल-जातीफलानाम् ॥
पत्तङ्ग-गैरिक-वराङ्ग-गजकुसुम-धातकीनाञ्च ।
सिद्धं भिषग् विदध्यादिदं मुखोत्थेषु रोगेषु ॥
परिशीर्ण दण्डविद्रधि-शौषिर-शीतादहर्षेषु ।
क्रिमिदन्त-दरण चलित-प्रहृष्टमांसावशीर्णेषु ॥
मुखदौर्गन्ध्ये कार्य्यं प्रागुक्तेष्वामयेषु तैलमिदम् ॥

तिलतैल ६ सेर, काथ खदिर काष्ठ ५ सेर, जल ४८ सेर, शेष १२ सेर ; कल्क मजाठि, लोध्र, यष्टिमधु, विट् खदिर, खदिर, काइफल, लाहा, वर, मथा, एलाचि, काफुर, आगर, पद्मकाष्ठ, लवङ्ग, कक्कोल जातिपत्र, जाइफल, रक्तचन्दन, गेरुमाटि, दालचिनि, नागेश्वर, धाइफुल एषां प्रत्येक २ तोला, सिद्धे गालिते कर्पूरचूर्णं प्रक्षिप्यम् ।

### इति वैद्यकसारोद्धारे मुखरोगाधिकारः

## ७२ । अथ कर्णरोग-चिकित्सा

कपित्थ-मातुलुङ्गाम्ल-शृङ्गवेररसैः शुभः ।
सुखोष्णैः पूरयेत् कर्णं कर्णशूलोपशान्तये ॥

और रस उष्णं कृत्वा कर्णं पूरयेत् । एवं आद्रकरस उष्णं कृत्वा कर्णं पूरयेत् ।

शृङ्गवेरञ्च मधुकं सैन्धवं तैलमेव च ।
कदुष्णं कर्णयोर्देयमेतद्वा वेदनापहम् ॥

आद्रारस, यष्टिमधु, सैन्धव, तिलतैल, मिश्रयित्वा किञ्चिदुष्णं कृत्वा कर्णयोर्देयः ।

पीतार्कपत्रमाज्येन लिप्तं वह्नौ प्रदापयेत् ।
तद्रसः श्रवणे क्षिप्तः कर्णशूलहरः परः ॥

घृतत लिप्त अर्कपत्र, अङ्गारामे ताप्य रसं कर्णयोर्देयः ।

अर्कपत्र पुटे दग्ध स्नुहीपत्रभवो रसः ।
कवुष्णः पूरणादेव कर्णशूल-निवारणः ॥

आकणपत्र पुट पाक करि कर्णात दिव । सिजुपात पुट पाक करि रस कर्णात पूरण करिब ।

लशुनाद्रक-शिग्रूणां सुरङ्गया मूलकस्य च ।
कदल्याः स्वरसः श्रेष्ठः कदुष्णः कर्णपूरणे ॥

नहस, आदा, शिग्रु, रक्तशिग्रु, मूला, कदली मूल एषां रसानि उष्णं कृत्वा कर्णौ पूरयेत् ।

## दीपिकातैलम्

महतः पञ्चमूलस्य काष्ठान्यष्ट दशानि च ।
क्षौमेनावेष्ट्य संसिच्य तैलेनादीपयेत्ततः ॥
यत्तैलं च्यवते तेभ्यः सुखोष्णं तत् प्रयोजयेत् ।
ज्ञेयं तद्दीपिकातैलं सद्यो गृह्णाति वेदनां ॥

बेल, भातघिला, गमारी, पारलि, गणियरी एषां सममाग चूर्णानि तैलेरे भिहलाइ, बस्त्रेरे मेराइ अग्नि लगाव, तारे तैल स्रवि परिले, सि तैल कर्णात दिव । कर्णशूल स्राव गुचे ।

तीव्र शूलातुरे कर्णे सशब्दे क्लेदवाहिनी ।
अजमूत्रं क्षिपेत् कोष्णं सैन्धवेनावचूर्णितम् ॥

कर्णात अति विष करे, शब्द करे, तेज पूज वहे, छागीमूत्र, सैन्धव मिश्रयित्वा किञ्चिदुष्णं कृत्वा देयः ।

## हिङ्गुतैलम्

हिङ्गुतुम्बरु-शुण्ठीभिः, साध्यं तैलन्तु सार्षपम् ।
कर्णशूले प्रणादे च पूरणं हितमुच्यते ॥

कटुतैल ३ पोवा, जल ३ सेर, कल्क हिङ्गु, धनोया, आदा, एषां मिलित्वा १२ तोला ।
**कर्णनाद बधिरकर्णे**—कर्णनादे च वाधिर्य्ये कटुतैलेन पूरणं । सार्षप तैलं कर्णौ देयम् ।

पुटपाक-विधिस्विन्न हस्तिविट्-जात-कोण्टकः [ कोरषः ] ।
रसः सतैल-सिन्धूत्थ कर्णस्रावहरः परः ॥

हस्तिपुरिषजात काठफुला पुटपाकेन पक्का निष्पीड्य रस, सैन्धव तैलेन मिश्रयित्वा कर्णां पूरणम् ।

कर्णदुर्गन्धे—मालतिवल्लरस मधुना पूरितमथवा गवां मूत्रैः ।
दूरात् परित्यज्यते श्रवणयुगलं पूतिरोगेण ॥

मालती फुलर पातर रस मधुना गोमूत्रेण वा तैलेन वा कर्णा पूरणम् ।

हरितालयुक्त-गोमूत्रं पूरणं पूतिकर्णजित् ।—सुगमं ।

## शम्बुकतैलम्

शम्बुकस्य तु मांसेन कटुतैलं विपाचयेत् ।
तस्य पूरणमात्रेण कर्णनाड़ी प्रशाम्यति ।

कटुतैल ३ पोवा, शम्बुक मांसरस ३ सेर पक्तव्यं ।

कीटकर्णे—क्रिमिकर्णविनाशाय क्रिमिघ्नं योजयेद्विधिं (सुगमं) ।
वार्त्ताकुधूमश्च हितः सार्षपस्नेह एव च ।

परिणत भेकुरिगुटी, अङ्गारे दत्वा, धूमं कर्णौ दत्वा सार्षप तैलेन कर्णा पूरणं ।

हली-सूर्य्यावर्त्तव्योष-स्वरसेनाभिपूरिते ।[६]
कर्णात् पतति सहसा सर्व्वास्तु क्रिमिजातयः ॥

लाङ्गलीया सूर्य्यावर्त्त मूलर रस त्रिकटुचूर्णा कर्णे पूरणं ।

शतावरीमूलरसं मधुना सह पूरयेत् ।
कर्णात् कर्णाञ्जलिः कर्णकोटरी च विनिःसरेत् ॥

शतमूलरस मधु दत्वा कर्णौ पूरयेत् ।

## शतावरीतैलम्

शतावरी-वाजिगन्धापयस्यैरण्डबीजकैः ।
तैलं विपक्वं सक्षीरं पालीनां पुष्टिकृत् परम् ॥

तिलतैल ३ पोवा, गोदुग्ध ३ सेर, कल्क शतमूल, अश्वगन्धा, क्षीरकाकोली, एरागुटी एवां मिलित्वा १२ तोला। कर्णपालिं मर्दयेत् ।

६। हलीत्यादौ, हली लाङ्गलीया मूलं, हली सूर्य्यावर्त्तयोर्व्योषयुक्त-स्वरसेन कर्णपूरणमित्यर्थः ।
—चक्रदत्ते शिवदासः ।

गुञ्जाचूर्णयुते जाते माहिषे क्षीरउद्गतम्।
नवनीतं तदभ्यङ्गात् कर्णपालि-विवर्द्धनम्॥

रातुलमणिचूर्ण महिष दुग्धत मिहलाइ दधि कृत्वा तस्मात सरमुद्धृत्य, मथित नवनीतं, तेन कर्णपालि मर्द्दनात् वर्द्धते।

मुषलीकण्डचूर्णन्तु माहिषी-नवनीतकैः।
गोलयित्वा क्षिपेत् भाण्डे धान्यराशौ निधापयेत्॥
सप्ताहावद्ध तल्लेपात् कर्णपालिर्विवर्द्धते॥

नागिनीमूरवान्धाचूर्ण महिषीनवनीतेन मिश्रयित्वा कर्णपालिमर्द्दनं।

## अपामार्गतैलम्

बाधिर्य्यकर्णनादयोः७—मार्गक्षारजलेन तत्कृतकल्केन साधितं तिलजं।
अपहरति कर्णनादं व्याधिर्य्यञ्चापि कर्णपूरणतः॥

तिलतैल ३ पोवा, अपामार्गक्षार ८ पल, जल १६ पल, कल्क अपामार्गमूल १२ तोला सिद्धं।

## विल्वतैलम्

विल्वगर्भे पचेत्तैलं गोमूत्राजपयोऽन्वितं।
बाधिर्य्ये पूरयेत्तेन कर्णौ च कफवातजे॥

तिलतैल ३ पोवा, गोमूत्र ३ सेर, छागदुग्ध ३ सेर, अभावे गव्यदुग्ध ३ सेर, कल्क विल्वशस्य १२ तोला सिद्धं।

**इति वैद्यकसारोद्धारे कर्णरोगाधिकारः॥**

# ७३। अथ नासारोग-चिकित्सा

सर्व्वेषु पीनसेष्वादौ निर्व्वातागारगो भवेत्।
स्नेहस्वेद-प्रधमनं धूमगण्डूषधारणम्॥

सकलो नासारोगत बताह नलब, गृहर अभ्यन्तरत थाकिब। घृत, तैल, सेक, ताप, धूमपान, गण्डूषधारण एइ सकल क्रिया करिब।

७। यदा शब्दवहो वायुः स्रोत आवृत्य तिष्ठति।
शुद्धः श्लेष्मान्वितो वापि बाधिर्य्यं तेन जायते॥ —भावप्रकाशे।

## व्योषादिचूर्णम्

व्योषचित्रकतालीश-तिन्तिडीकाम्लवेतसम् ।
सचव्याजाजितुल्यांशमेलात्वक् पत्रपादिकम् ॥
व्योषादिकं चूर्णमिदं पुराण-गुड़संयुतम् ।
पीनसश्वासकासघ्नं रुचिस्वरकरं परं ॥

त्रिकटु, चित्रक, तालीशपत्र, तेतेली, थैकर, चविक, मोगजोरा एषां प्रत्येक १ तोला, एलाचि, दालचिनि, तेजपत्र एषां प्रत्येक १ महाके एकीकृत्य पुराण गुड़ ७ तोला मिश्रयित्वा अर्द्धतोला भक्ष्यं किञ्चिदुष्णोदकं पेयं ।

## गुड़ार्द्रकलेहः

आद्रकस्वरसप्रस्थं तदर्द्धञ्च गुड़ं शुभं ।
कुड़वं बीजपूराम्लरसं संयोजयेत्ततः ॥
मन्दाग्निना च विपचेद् दर्व्यालेपो यथा भवेत् ।
त्रिजातकं त्रिकटुकं त्रिफलायाः तथैव च ॥
विड़ङ्गं जीरकञ्चैव कालिका जीरकाणि च ।
एतेषां कार्षिकान् भागान् चूर्णयित्वा विनिःक्षिपेत् ॥
भक्षयेदक्षमात्रन्तु पोनस-कास-श्वासजित् ।
स्वरक्षयं गलरुजं शिरोगौरव-नाशन ॥
अरुचिं शूलमर्शांसिमन्दाग्निञ्च विनाशयेत् ।
गुड़ार्द्रकमिदं प्रोक्तमश्विभ्यां परिकीर्त्तितं ॥

आदार रस ३ सेर ८ तोला, पुराण गुड़ ६ पोवा ४ तोला, बीजपूरर रस ८ पल मन्दाग्नौ पाकः। लेहीभूते प्रक्षेप, एलाचि, दालचिनि, तेजपत्र, त्रिकटु, त्रिफला, विड़ङ्ग, मोगजीरा, कालजीरा एषां प्रत्येक २ तोला अतो भक्ष्यं १ तोला तप्तोदकमनुपिबेत् ।

सोषणं गुड़संयुक्तं स्निग्धं दध्यम्लभोजनं ।
नवप्रतिश्यायहरं विशेषात् कफपाचनं ॥

पिप्पली चूर्णं गुड़ेन खादेत्। अन्न खाव अम्ल दधिरे ।

प्रतिश्याये नवे शस्तो यूषश्चिञ्चादलोद्भवः ।

तिन्तिड़ी पत्र [रस] १ पल, जल ४ पल, शेष १ पल, हिङ्गु २ रति, मरिच चूर्ण ८ रति प्रक्षिप्य पेयम् ।

पिप्पल्यः शिग्रुबीजानि विडङ्गं मरिचानि च ।
अवपीडः प्रशस्तोऽयं प्रतिश्याय निवारणः ॥

पिप्पली, चजिनागुटी, विडङ्ग, मरिच, एतैः समैः पिष्टैर्वस्त्रे निष्पीड्य नस्यं देयं ।

## कलिङ्गादिः

कलिङ्गहिङ्गुमरिचलाक्षासुरसकट्फलैः ।
कुष्ठोग्रा शिग्रु जन्तुघ्नैरवपीडः प्रशस्यते ॥

कुडजर गुटी (इन्द्रयव), हिङ्गु, मरिच, लाक्षा [पलाश], तुलसी, कट्फल, कूर, वच, चजिनाबीज, विडङ्ग एतैः सममाग पिष्टैर्नस्यं ।

## पाठादितैलम्

पाठाद्विरजनीमूर्व्वा-पिप्पलीजातिपल्लवैः ।
दन्त्या च तैलं संसिद्धं नस्यं सम्पक्कपीनसे ॥

तिलतैल ३ सेर, कल्क आकलविन्धि, रजनीद्वय, बनरिहा, पिप्पली, जातिपत्री, सोन्दरपखाल एषां मिलित्वा २ पल २ तोला नस्यं ।

## व्याघ्रीतैलम्

व्याघ्रीदन्तीवचाशिग्रुसुरसव्योषसैन्धवैः ।
पाचितं नावनं तैलं पूतिनासागदं जयेत् ॥

तिलतैल ३ पोवा, जल ३ सेर, कल्क कण्टकारी, सोन्दरपखाल, वच, चजिना, पलाश, त्रिकटु, सैन्धव एषां मिलित्वा २ पल २ तोला नस्यं ।

## करवीराद्यं तैलम्

नासार्शोरोगे—रक्तकरवीरपुष्पं जात्यशनमल्लिकायाश्च ।
एतैः समन्तु तैलं नासार्शोनाशनं श्रेष्ठम् ॥

तिलतैल ३ पोवा, जल ३ सेर, कल्क रक्तकरवीर पुष्प, जातिफुल, मालतीफुल एषां मिलित्वा २ पल नस्यं ।

### शिखरितैलम्

गृहधूमकणादारुक्षारनक्ताह्वसैन्धवैः ।
सिद्धं शिखरीबीजैश्च तैलं नासार्शसां हितम् ॥

तिलतैल ३ पोवा, जल ३ सेर, कल्क आलान्धु, पिप्पली, उषैकाठ, यवक्षार, करञ्ज बीज, सैन्धव अपामार्ग बीज एषां मिलित्वा २ पल नस्यम् ।

### कफकेतुः

टङ्कनं मागधीशङ्खं वत्सनाभं समं समं ।
सर्व्वतुल्यं शृङ्गवेरं पिष्ट्वा चैव वटी तथा ॥
भक्षयेदाद्रसंयुक्तं पीनसव्याधिनाशनं ।
सपीनसे श्वासकासे प्रतिश्याये ज्वरे तथा ॥

सुवगा १ तोला, पिप्पली, १ तोला, शङ्खचूर्ण १ तोला, विष १ तोला, आदाचूर्ण ४ तोला, सर्व्वं पिष्ट्वा वटी कार्य्या, अतो भक्ष्यं । आद्रकरसेनानुपेयम ।

इति वैद्यकसारोद्धारे नासारोगाधिकारः ॥

## ७४ । अथ नेत्ररोग-चिकित्सा

तेन चक्षुषि देयः । दन्तवर्त्तिः । ८

### पटोलाद्यं घृतम्

पटोलं कटुका दार्व्वीं निम्बं वासां फलत्रिकम् ।
दुरालभां पर्पटकं त्रायन्तीञ्च पलोन्मिताम् ॥

८ । दन्तवर्त्तिः—दन्तहस्ति-वराहोष्ट्र-गवाश्वाजखरोद्भवैः ।
सशङ्ख मौक्तिकाम्भोधि फेनैर्मरिचपादिकैः ।
क्षत शुक्रमपि व्याधिं दन्तवर्त्तिर्निवर्त्तयेत ॥
तथाच भावप्रकाशे—द्वादशव्याधयो ह्यौ तत्रैवान्यौ गदावुभौ ।
कृष्णमार्गे तु चत्वारो दशैकः शुक्लभागजाः ॥
वर्त्मन्येको विंशतिश्च पक्ष्मजौ द्वौ प्रकीर्त्तितौ ।
नवसन्धिषु सर्व्वस्मिन्नेत्रे सप्तदशोदिताः ॥
एवं नेत्रे समस्ताःस्युरष्ट सप्ततिरामयाः ॥
जाता रोगा विनश्यन्ति न भवन्ति कदाचन ।
त्रिफलायाः कषायेण प्रातर्नयनधावनात् ॥

प्रस्थमामलकामाञ्च चतुःषष्टिपले जले ।
पादशेषे रसे तस्मिन् घृतप्रस्थं विपाचयेत् ॥
कल्कैभूनिम्बकुटज-मुस्तयष्ट्याह्व चन्दनैः ।
सपिप्पलीकैस्तत् सिद्धं चक्षुष्यं शुक्रयोर्हितम् ॥
घ्राणकर्णाक्षि वर्त्मत्वङ्मुखरोगव्रणापहम् ।
कामलाज्वर-विसर्प-गण्डमालाहरं परम् ॥

घृत ३ सेर, क्वाथ पटोल, कटुकि, आचुकाठ, निम, वाहक, त्रिफला, कुष्पैलता, पर्पट, नाथकल्प एषां प्रत्येक १ पल जल ४८ सेर, शेष १२ सेर, आमलकी रस १२ सेर, कल्क माहतिता, कुटज बीज, मथा यष्टिमधु, रक्तचन्दन, पिप्पली एषां मिलित्वा ३ पोवा सिद्धं ।

## कृष्णाद्यं तैलम्

कृष्णा-विडङ्ग-मधुयष्टिक-सिन्धुजन्म
विश्वौषधैः पयसि सिद्धमिदं छागल्याः ।
तैलं नृणां तिमिरशुक्र-शिरोक्षिशूल-
पाकात्ययान् जयति नस्यविधौ प्रयुक्तम् ॥

तिलतैल ३ पोवा, छागदुग्ध ३ सेर, कल्क पिप्पली, विडङ्ग, मधुयष्टि, सैन्धव, शुयठी एषां मिलित्वा ५१ तोला, दत्वा सिद्धं ।

अजकायां—सैन्धवं वाजिपादञ्च गोरोचन-समन्वितम् ।
शेलुत्वग्रससंयुक्तं पूरणञ्चाजकापहम् ॥

श्वेतापराजिता, वगा अश्वखुरा, सैन्धव, गोरोचना, ओदाल छाल एतत्त्रयं पिष्ट्वा अजकायां देयं । अजका वुखि, चक्षु वगा हइ, फलर आकृति ।

## शशकघृतम्

शशकस्य शिरः कल्के शेषाङ्ग-क्वथिते जले ।
घृतस्य कुडवं पक्वं पूरणञ्चाजकापहम् ॥

घृत ३ पोवा, शशकमांस ११ पल, जल १२ सेर, शेष ३ सेर, कल्क शशकमुयड १ पल, सिद्धं ; अनेन चक्षु पूरणम् ।

कृष्याज चक्षुर मितरत कलापरि हइ ।

## त्रिफलाद्यं घृतम्

त्रिफलाघृतं मधुयवाः पादाभ्यङ्गः शतावरीमुद्गाः ।
चक्षुष्यः संक्षेपाद्वर्गः कथितो भिषग्भिरयं ॥

घृत ३ पोवा, त्रिफला ३ पोवा, जल १२ पोवा, शेष ३ पोवा, कल्क यष्टिमधु, यव, शतमूल, मुग ३ पल, सिद्धं घृतं तैलं वा चक्षुषि देयः ।

त्रिफलाकषायेण प्रातर्दन्तधावनात् । त्रिफलाकायेन मुख लवण प्रक्षालनं प्रातः बारम्बारं ।

## चन्द्रोदयवर्त्तिः

हरीतकी वचाकुष्ठं पिप्पली मरिचानि च ।
बिभीतकस्य मज्जा च शङ्खनाभिर्मनःशिला ॥
सर्व्वमेतत् समं कृत्वा छागोक्षीरेण पेषयेत् ।
नाशयेत् तिमिरं कण्डुं पटलान्यर्व्वुदानि च ॥
अधिकानि च मांसानि येन रात्रौ न दृश्यते ।
अपि द्विवार्षिकं पुष्पं मासेनैकेन साधयेत् ॥
वर्त्तिश्चन्द्रोदया नाम नृणां दृष्टिप्रसादनी ॥

शिलिखा, बच, कूर, पिप्पली, मरिच, विभीतक फलमज्जा, नाभिशङ्ख, मनःशिला एतैः सममागैः छागदुग्धैः पिष्टै रछायाशुष्कैः बटिका कार्य्या अतः अञ्जयेत् ।

## अपर चन्द्रोदयवर्त्तिः

षड्गुणाभिर्विभीतस्य मज्जा पथ्या मनःशिला ।१
पिप्पलीमरिचं कुष्ठं वचा चेति समांशकं ॥
छागीक्षीरेण संपिष्य वर्त्तिः कुर्य्याद् यथोन्मिता ।
हरेणुमात्रां संघृष्य जलेनाञ्जनमाचरेत् ।

मोमोरारगुटीर मज्जा ६ भाग, हरीतक्यादि वचान्तानां एकैकोभागः । वर्त्ती कुर्य्यात्, अतो रेणुकाजलेन घृष्ट्वा शलाकया अञ्जनं देयम् ।

अग्नीतितिल्लिलपुष्प, मरिच, विभीतक फलमज्जा, नाभिशङ्ख, मनःशिला, एतैः सममागैः छागदुग्धैः पिष्टै रछायाशुष्कैर्वटिकाः कार्य्याः अतः अञ्जयेत् ।

१। शङ्खनाभिर्विभीतस्य मज्जा पथ्या मनःशिला, —इति भावप्रकाशे पाठः ।

## कुमारिकावर्त्तिः

अशीतिस्तिलपुष्पाणि षष्टिः पिप्पलितण्डुलाः ।
जातीकुसुम पञ्चाशत् मरिचानि च षोड़श ॥
एषा कुमारिका वर्त्तिर्गतचक्षुर्निवर्त्तयेत् ॥

तिलपुष्प ८० टा, पिप्पलीतण्डुल ६० टा, मालतीफुल ५० टा, मरिच १६ टा एषां जलेन वटी कार्य्या छायाशुष्का तेनाञ्जयेत् ।

हरीतकी हरिद्रा च पिप्पली-लवणानि च ।
कण्डूतिमिरजिद्वर्त्तिर्न क्वचित् प्रतिहन्यते ॥

शिलिखा, हालधि, पिप्पली, सैन्धव, सौवर्च्चल विट् एषां चूर्णानि जलेन पिष्ट्वा वर्त्तिः तेनाञ्जयेत् ।

## भृङ्गराजतैलम्

भृङ्गराज-रसप्रस्थे यष्टीमधुपलेन च ।
तैलस्य कुड़वं पक्वं सद्यो दृष्टिं प्रसादयेत् ॥
नस्याद्वली-पलितघ्नं मासेनैतन्न संशयः ॥

तिलतैल ४ पोवा, भृङ्गराज रस १६ पोवा, कल्क यष्टिमधु १ पल नस्यं ।

चक्षुपीड़कायां । चक्षुपीड़का-क्षुद्रव्रणे—
विदेही श्वेतमरिचं सैन्धव-नागरं समम् ।
मातुलुङ्गरसैः पिष्ट अञ्जनं पीड़कापहं ॥

पिप्पली, शिग्रुगुटी, सैन्धव, आदा, एषां चूर्णानि पिष्ट्वा जलेन वर्त्ति तेनाञ्जयेत् ।

कचाड़े—कार्पासफलजं आम्रदलोत्थ-स्वरसाञ्जनात् ।
[ मधुशुक्तं ] मधुयुक्तं चिरोत्थञ्च चक्षुस्राव्यं व्यपोहति ॥

वनकपाहर फलर रस, आम्रकोमल पत्ररसद्वयोरञ्जन ।

हिज्जलस्य फलं पिष्ट्वा पानीये नित्यमञ्जयेत् ।
चक्षुःस्रावोपशान्त्यर्थं कार्य्यमेतन्महौषधं ॥

हिज्जलगुटीर रस पिषि जलेरे अञ्जन ।

**वासामृतगुग्गुलुः**

सर्व्वंआयां—वासामृता-निम्ब-पटोलपत्र-फलत्रयाणां विधिवत् कषायः ।
भिषक् पचेत् गुग्गुलुकल्कमाज्यं जेतुं नराणां नयनोत्थरोगान् ॥
नेत्रामयान् सर्व्वसमुत्थितांश्च निहन्ति शीघ्रं नयनाश्रुपातं ।
रागं सशोथं पटलार्व्वुदञ्च मलञ्च कण्डूं तिमिरञ्च काचं ॥
महारुजञ्चैव तथामवातं सर्व्वाणि दुष्टानि च वातरक्तम् ।
रसायन श्रेष्ठमनुत्तमञ्च यथानुपानं भिषजा प्रयोज्यं ॥

घृत ३ सेर, क्वाथ बाहक, गुडूची, निम, पटोल, त्रिफला मिलित्वा ६३ पल, जल ४८ सेर, शेष १२ सेर कल्क गुग्गुलु ८ पल अतो मद्यमुष्णोदकानुपानं ।

**इति वैद्यकसारोद्धारे नेत्ररोगाधिकारः ॥**

## ७५ । अथ शिरोरोग-चिकित्सा

वातिके शिरसो रोगे स्नेहस्वेदान् सनावनान् ।
पानान्नमुपनाहांश्च कुर्य्याद् वातामयापहान् ॥

वातहरं तैलं, घृतादि सेक, नस्य, वातहर कृशरादिकान् उपनाहांश्च वेशवारादिभिर्लेपः ।

कुष्ठमेरण्डमूलञ्च लेपात् काञ्जिक-पेषितम् ।
शिरोऽर्त्तिं वातजां हन्यात् पुष्पं वा मुचुकुन्दजम् ॥

कुर, एरण्डमूल, काञ्जिकेन पिष्ट्वा लेपः । अथवा मुचुकुन्द रसेन लेपः ।

पञ्चमूली१०शृतं क्षीरं नस्यं दद्याच्छिरोगदे ।

स्वल्प पञ्चमूल २ तोला, गोक्षीर १ पल, जल ४ पल ; क्षीरशेष तेन नस्यं ।

पित्तात्मके शिरोरोगे स्निग्धं सम्यग् विरेचयेत् ।

पित्त दूषित शिरोरोगत रेचन कराव ।

१० । पञ्चमूलीवातपैत्तिके स्वल्पा, वातकफे तु महती । —चक्रदत्ते शिवदासः ।

मृद्विका त्रिफलेक्षूणां रसैः क्षीरैर्घृतैरपि ।

द्राक्षा तदभावे गमारीगुटी, त्रिफला, इक्षुमूल, एषां मिलित्वा २ तोला, जल ४ पल, शेष १ पल, तेत्रिवाचूर्णं प्रक्षेप रेचयेत् । एतैः क्षीरैर्घृतैर्वापि त्रिवृच्चूर्णं दत्वा रेचयेत् ।

शतधौतघृताभ्यङ्गः शीतवातादि सेवनम् ।
शीतस्पर्शाश्च संसेव्याः सदा दाहार्त्ति शान्तये ॥

घृत १०० बार धुइ मूरत लव, गात घसिव । शीत वात लव । शीतजलेन स्नानं शीतद्रव्य भोजनं ।

यष्ट्याह्व चन्द्रनानन्ता क्षीरसिद्धं घृतं हितं ।
नावनं शर्करा-द्राक्षा-मधुकैर्वापि पित्तजे ॥

घृत ३ सेर, क्षीर ३ सेर, कल्क यष्टिमधु, वरियाल, व्याघ्रनखि, पद्ममूल, रक्तचन्दन, अनन्तमूल एषां मिलित्वा ७ तोला नस्यं ।

## चन्दनादिलेपः

चन्दनोशीर [ चन्दनोत्पल ] यष्ट्याह्व वलाव्याघ्रनखोत्पलैः ।
क्षीरपिष्टैः प्रदेहः स्यात् शृतैर्वा परिषेचनम् ॥

रक्तचन्दन, भेटमूल अथवा विरिणामूल, यष्टिमधु, वरियाल, व्याघनखि, पद्ममूल एतैः क्षीरपिष्टैर्लेपः शिरसि । अथवा एतैः क्वाथैः अवगाहयेत् ।

रक्तजे—रक्तजे पित्तवत् सर्व्वं भोजनालेपसेचनम् ।
शीतोष्णयोश्च व्यत्यासो विशेषो रक्तमोक्षणं ॥

रक्तज शिरोरोगत भोजन, लेप सेक, शीतक्रिया सकलो पित्तक्रिया करिव, तेज कटाव, व्यत्यसादिभि· शीतक्रिया करि, सेकादि करि पुनः शीतम् ।

कफजे लङ्घनं स्विन्नो [ स्वेदो ] रुक्षोष्णैः पाचनात्मकैः ॥

कफ दूषित शिरोरोगत, लङ्घन, सेक, रुक्ष शुष्क वस्तु क्वाथ तीक्ष्णनस्य तेन शिरो विरेचयेत् । श्लेष्माहरणं इसव आचरिव ।

## कृष्णादिलेपः

कृष्णाब्द शुण्ठीमधुक-शताह्वोत्पलपाकलैः ।
जलपिष्टैः शिरोलेपः सद्यः शूलनिवारणः ॥

पिप्पली, मथा, आदा, यष्टिमधु, शिमु, भेटफुल, कूर एतैः सममागपिष्टैः जले शिरोलेपः ।

देवदारु नतं कुष्ठं नलदं विश्वभेषजम् ।
लेपः काञ्जिक-संपिष्टस्तैलयुक्तः शिरोऽर्त्तिनुत् ॥

दर्वे काठ, तगरमूल, कूर, जटामांसी, आदा एतैः काञ्जिक पिष्टैः शिरोलेपः। तैलमिश्रैर्वा लेपः।

सन्निपाते—सन्निपातभवे कार्य्या दोषत्रयहरी क्रिया ।
सर्पिः पानं विशेषेण पुराणन्त्वादिशन्ति हि ॥

तिनियो दोष साम्य क्रिया करिव । पुरातन घृत पान करिव ।

## त्रिकट्वादिः

त्रिकटु-पुष्कर-रजनी जीवक-तुरङ्ग-गन्धानाम्११ ।
क्वाथः शिरोवर्त्तिजालं नासा पीतो निवारयति ॥

त्रिकटु, कूर, हालधि, भोगजोरा, अश्वग धा एषां मिलित्वा २ तोला जल ४ पल शेष १ पल नासया पिवेत् ।

नागरकल्कमिश्रं क्षीरं नस्येन योजितं पुंसाम् ।
नानादोषोद्भूतां शिरोरुजां हन्ति तीव्रतराम् ॥

छागदुग्ध १ पल, शुयठीचूर्णं ३२ रति मिश्रयित्वा नासया पिवेत् ।

नतोत्पलं चन्दनकुष्ठयुक्तं शिरोरुजायां सघृतः प्रदेहः ।

तगरमूल, भेटफुल, रक्तचन्दन, कूर, सममाग लेपः, घृतं दत्वा शिरोलेपः ।

## शताह्वाद्यं तैलम्

शताह्वैरण्डमूलोग्रा वक्रव्याघ्रीफलैः श्रृतम् ।
तैलं नस्यं मरुत्श्लेष्म-तिमिरोद्ध्र्वगदापहम् ॥

तिलतैल ३ पोवा, जल ३ सेर, कल्क शुल्फा, परयडमूल, बच, काकटाश्रृङ्गी, कयटकारीफल मिलित्वा १० तोला नस्यं ।

११ । जीवकः, शीतशालः । —शिवदासः ।
जीराद्युरङ्गरास्नानाम्, इति मूले पाठः ।

## षड्बिन्दुतैलम्

एरण्डमूलं तगरं शताह्वा जीवन्तिरास्ना सह सैन्धवञ्च ।
भृङ्गं विडङ्गं मधुयष्टिका च विश्वौषधं कृष्णतिलस्य तैलम् ॥
आजं पयस्तैलविमिश्रितञ्च चतुर्गुणे भृङ्गरसे विपक्वं ।
षड् बिन्दवो नासिकया विधेयाः शीघ्रं निहन्युः शिरसो विकारान् ॥
च्युतांश्च केशान् पलितांश्च दन्तान् दुर्ब्बन्धमूलांश्च दृढीकरोति ।
सुपर्णदृष्टि प्रतिमञ्च चक्षुर्ब्बाह्वोर्बलञ्चाभ्यधिकं करोति ॥

तिलतैल ३ पोवा, छागदुग्ध ३ सेर, भृङ्गराजरस ३ सेर, कल्क एरण्डमूल, शुल्फा, तगर, जीवनीयशाक, रास्ना, सैन्धव, दालचिनि, विडङ्ग, यष्टिमधु, आदा एषां मिलित्वा २ पल ।

क्रिमिजायां—क्रिमिजे व्योष-नक्ताह्व शिग्रुवीजैश्च नावनं ।
अजामूत्रयुतं नस्यं क्रिमिजे क्रिमिजित् परम् ॥

त्रिकटु, लेटागुठी सममागं गोमूत्रेण नस्यं । [विडङ्ग छागमूत्रेण पिष्टा नस्यं] शिग्रु बीजं छागमूत्रेण पिष्टा नस्यं ।

## अपामार्गतैलम्

अपामार्गफलव्योष-निशाद्यवकरामठैः ।
सविडङ्गैः शृतं मूत्रे तैलं नस्यं क्रिमिं जयेत् ॥

तिलतैल ३ पोवा, गोमूत्र ३ सेर, कल्क अपामार्गवीज, त्रिकटु, हरिद्रा, हाचियावन, हिङ्गु, विडङ्ग मिलित्वा २ पल ।

सूर्य्यावर्त्ते—सूर्य्यावर्त्ते विधातव्यं नस्यकर्म्मादि भेषजम् ।
पाययेत् सगुडं सर्पिर्घृतपुरांश्च भक्षयेत् ॥

सूर्यकपालित, नस्य करिव, गुड घृत शिर मेलाव ।

सशर्करं कुङ्कुममाज्यभृष्टं [घृष्टं] नस्यं विधेयं पवनासृगुत्थे ।
भ्रूशङ्ख कर्णाक्षिशिरोऽर्द्ध शूले दिनाभिवृद्धिप्रभवे च रोगे ॥

चिनि, कुङ्कुम घृतेन नस्यम् ।

## तिलादिलेपः

तिलाः कृष्णाः समधुकमभिरुध-पुनर्णवं ।
नीलोत्पलं वचा-दूर्व्वा सूर्य्यावर्त्ते प्रलेपनम् ॥

तिल, पिप्पली, यष्टिमधु, शतमूल, पुनर्णवा, कलियाभेट, वच, दूर्व्वा, एतैः सममाग पिष्टैः पीड़ास्थाने लेपः ।

कृतमालपल्लवरसे खरमञ्जरिकल्कसिद्धं नवनीतम् ।
नस्येन जयति नियतं सूर्य्यावर्त्तं सुदुर्व्वारम् ॥

नवनीत ३ पोवा, सोणाल्पातरस ३ सेर, कल्क बनसटरगुटी २ पल पक्का नस्यं ।

अर्द्धावभेदे । आदकपालि—दशमूलीकषायस्तु सर्पि-सैन्धव-संयुतः ।
नस्यमर्द्धावभेदघ्नं सूर्य्यावर्त्त-शिरोऽर्त्तिनुत् ॥

घृत ३ पोवा, दशमूल काथ ३ सेर कल्क सैन्धव २ तोला नस्यं ।

शिरीषमूलकफलैरवपीड़श्च योजयेत् ।

शिरीषबीज मूलक, फल द्वयोः पिष्टा नस्यम् । वच पिप्पली पिष्टा नस्यं, दालचिनि पिप्पली पिष्टा नस्यम् ।

## सारिवादिलेपः

सारिवोत्पलकुष्ठानि मधुकञ्चाम्लपेषितम् ।
सर्पिस्तैलयुतो लेपः सूर्य्यावर्त्तार्द्धभेदयोः ॥

श्वेतमेदेली, भेट, कूर, यष्टिमधु, येकर, एतैः समैं घृततैलमिश्रैर्ल्लेपः । काञ्जिकेन वा ।

अनन्तवाते—अनन्तवाते कर्त्तव्यः सूर्य्यावर्त्तहितो विधिः ।
शिराव्यधश्च कर्त्तव्योऽनन्तवातप्रशान्तये ॥

सूर्य्यावर्त्तत यि क्रियाविधि, लेप, नस्य, अनन्तवातत सेइ क्रिया आचरिव । शिर मैक्षाव, अनन्तवात शान्त हय । चिनि बवकूर्णा मिहलाइ मस्तकत पारवान्धा करिव । मध्वत मधु मूलाइ दिव । इहाक मधु मस्तक बोले । अनन्तवात गुचे ।

## पथ्यादि पाचनम्

पथ्याक्षधात्री-रजनी-गुड़ूची भूनिम्ब-निम्ब-क्वथितः कषायः ।
भ्रूशङ्ख-कर्णाक्षि-शिरो रुजार्त्ते दिवार्द्धमध्ये प्रहरे विशेषः ॥

त्रिफला, हालधि, गुड़ूची, माहतिता, निम एषां मिलित्वा २ तोला, जल ४ पल, शेष १ पल, गुड़ेन पेयः ।

शिरःकम्पे—शिरः कम्पेऽमृतारास्ना-बलास्नेह सुगन्धिभिः ।
स्नेहस्वेदादि वातघ्नं शिरोवस्तिश्च शस्यते ॥

गुड़ूची, रास्ना, बरियाल एषां पिष्ट्वा घृतेन सुगन्धि कर्पूरादिना लेपः । वस्तिः माषतैलादिना ।

## दशमूलतैलम्

दशमूलीरसप्रस्थं प्रस्थं धुस्तूर-शिग्रुणोः ।
सिन्धुवाररसप्रस्थं नवनीतां चतुःसमम् ॥
कटुतैलं पचेत्तेन अष्टाङ्ग कल्कसंयुतम् ।
त्रयोदशविधानेन विकारान् सान्निपातिकान् ॥
वातश्लेष्म-शिरोरोगान् दन्तरोगान् गलग्रहान ।
नेत्ररोगं कर्णरोगं नासारोगं कफात्मकं ॥
कफजं श्वासकासञ्च विनिहन्ति न संशयः ॥

नवनीता शिवा आमलकीत्यर्थ, अन्यत् स्पष्टम । कटुतैल ३ सेर, क्काथ दशमूल रस ३ सेर, धुस्तूर, सजिना मिलित्वा ३ सेर, पचतीयार रस ३ सेर, आमलकी रस ३ सेर, कल्क तस्यमूल ८ पल ।

## शिरःशूलाद्रिवज्ररसः

पलं रसं पलं गन्धं पलं लौहं पलं त्रिवृत् ।
गुग्गुलोः पलचत्वारि तदर्द्धं त्रिफलारजः ॥
कुष्ठं मधुकणाशुण्ठी-गोक्षुरं क्रिमिनाशनम् ।
दशमूलञ्च प्रत्येकं तोलकं वस्त्रशोधितम् ॥
क्काथेन दशमूल्याश्च यथास्वं [दशाहं] परिभावयेत्
घृतयोगात् प्रकर्त्तव्या माषिका वटिका शुभा ॥

छागीदुग्धानुपानेन पयसा मधुनाऽथवा ।
शिरःशूलाद्रिवज्रोऽयं चन्द्रनाथेन भाषितं ॥
एकजं द्वन्द्वजञ्चैव त्रिदोषजनितं तथा ।
वातिकं पैत्तिकं सर्व्वं शिरोरोगं विनाशयेत् ॥
परमत्र गदं हन्यात् क्रिमिदुष्टहलीमकम् ।
व्रणानि गण्डमालांश्च गर्द्दभानाह विद्रधीन् ॥
भगदंश वातरक्तं भगन्दर-मसूरिके ।
पित्तजां जलदोषोत्थां संग्रहग्रहणीञ्जयेत् ॥

रस १ पल, गन्धक १ पल, लौह १ पल, तेजिया १ पल, शोधित गुग्गुलु ४ पल, त्रिफलाचूर्ण २ पल, यष्टिमधु १ तोला, आदा १ पिप्पली १, गोक्षुर १, विडङ्ग १ तोला, दशमूल १० तोला, दशमूल क्वाथेरे १० दिन भावना दि घृत किञ्चित् दि ६ रति प्रमाण वड़ि करिव। अनुपान छागीदुग्ध, मधु, अथवा गोक्षीर।

इति वैद्यकसारोद्धारे शिरोरोगाधिकारः ॥

## षोड़शः परिच्छेदः

# स्त्रीरोग-चिकित्सोपदेशः

## ७६। अथ स्त्रीरोगे : स्त्री-प्रदरे

दध्ना-सौवर्च्चलाजाजी मधुकं नीलमुत्पलम्।
पिवेत् क्षौद्रयुतं नारी वातासृग्दरपीड़िता॥

सौवच्चलस्य माषकमेकं ८ रति दध्नः कर्षत्रयं ६ तोला, आलोड्य पेयम्। कालजीरा, यष्टिमधु, कलियाभेट एषां चूर्ण ४० रति, मधु ३२ रति आलोड्य पेयं।

पिवेदैणेयकं रक्तं शर्करामधुसंयुतम्।
वासकस्वरसं पैत्ते गुड़ूच्या रसमेव च॥

हरिण पशुरक्त १ पल [ मिलित दशमूलचूर्ण १ तोला ] मधु १६ रति, चिनि १६ रति, दत्वा पेयं। पित्ते वासकपत्ररस १ पल, मधु ३२ रति दत्वा पेयम्। गुड़ूची रस १ पल, मधु ३२ रति दत्वा पेयम्।

जलेनामलकाद्बीज कल्कं वा ससितामधु।
धातक्याश्चाक्ष मात्रं वा आमलक्या मधुद्रवम्॥

आमलकी जलेरे वाटि चिनि मधु मिहलाइ खाव। धाइफुल १ तोला, आमलकी १ तोला तण्डुलोदके वटि मधु दत्वा खाद्यं।

काकजानुकमूलं वा मूलं कार्पासमेव वा।
पाण्डु-प्रदर-शान्त्यर्थं पिवेत् तण्डुलवारिणा॥

कोवाचुटि लतार मुल तण्डुल जलेरे वाटि मधु दत्वा खाद्यं। कापाहर मूल तण्डुल जलेरे वाटि मधु दत्वा खाद्यं।

अशोकवल्कलक्वाथ [मुकुलक्वाथ] शृतं दुग्धं सुशीतलम्।
यथावलं पिवेत् प्रातस्तीव्रासृग्दरनाशनं॥

अशोकछाल २ तोला, दुग्ध १६ तोला, जल ३ पोवा दुग्धावशेषः कार्य्यः।

## दार्व्यादिक्वाथः

दार्व्वीरसाञ्जन-वृषाब्द-किरातविल्वभल्लातकैरवकृतो मधुना कषायः।
पीतो जयत्यतिवलं प्रदरं सशूलं पीतासितारुणविलोहित नीलशुक्लम् ॥१

दारुहरिद्रा, रसाञ्जन, वाहक, मथा, माहतिता, विल्व, रक्तचन्दन, वगा भेटफुल एषां मिलित्वा २ तोला, जल ४ पल, शेष १ पल मधु दत्वा पेयम।

कुशमूलं समुद्धृत्य पेषयेत्तण्डुलाम्बुना।
एतत् पीत्त्वा त्र्यहान्नारी प्रदरात् परिमुच्यते॥

कुशर केचामूल २ तोला, तण्डुल जलेन पिष्ट्वा मधु दत्वा पेयम।

क्षौद्रयुक्तं फलरसं काष्ठोडुम्बरजं पिबेत्।
असृग्दरविनाशाय सशर्करपयोऽन्नभुक्॥

त्रिफला रस मधु दत्वा पेय। काठ डुमुर फल रस १ पल मधु दत्वा पेयं। अन्न दुग्ध चिनिरे खाव।

प्रदरं हन्ति वलाया मूलं दुग्धेन मधुयुतं पेयं।

वलामूल २ तोला, गोदुग्धेन पिष्ट्वा मधु दत्वा खाद्यं।

गुडेन वदरीचूर्णं मोचमाम तथा पयः।
पीता लाक्षा च सघृता पृथक् प्रदरनाशनाः॥

वदरी छालचूर्ण २ तोला, केचा कदलीफलर चूर्ण २ तोला, लाक्षाचूर्ण ३२ रति घृत-गुडाभ्यां लेह्यम।

शमयति मदिरापानं तदुभयमपि रक्तसंज्ञशुक्लाख्यौ।

वारुणी मद्य २ तोला, घृत-मधुभ्यां पेयं।

रक्तपित्तविधानेन प्रदरांश्चाप्युपाचरेत्।

रक्तपित्तेर ये क्रिया विधान, सेइ क्रिया प्रदरे करिब। रक्तातिसारोक्त कुटजाष्टक लेहओ प्रदरे प्रशस्त।

१। पीतं सितं हरितलोहितनीलकृष्णमिति मूले।

## चन्दनादिचूर्णम्

चन्दनं नलदं लोध्रमुशीरं पद्मकेशरम् ।
नागपुष्पञ्च विल्वञ्च भद्रमुस्तञ्च शर्करा ॥
ह्रीवेरञ्चैव पाठा च कुटजस्य फलत्वचम् ।
शृङ्गवेरं सातिविषा धातकी च रसाञ्जनम् ॥
आम्रास्थि जम्बुसारास्थि तथामोचरसोऽपि च ।
नीलोत्पलं समङ्गा च सूक्ष्मैला दाड़िमोद्भवम् ॥
चतुर्व्विंशतिमेतानि समभागानि कारयेत् ।
तण्डुलोदकसंयुक्तं मधुना सह योजयेत् ॥
चतुष्प्रकारं प्रदरं रक्तातीसारमुल्वनम् ।
रक्तार्शांसि निहन्त्याशु भास्करस्तिमिरं यथा ॥
अश्विन्योः सम्मतो योगो रक्तपित्तनिवर्हणः ॥

रक्तचन्दन, जटामांसी, लोध, विरिणा, पद्मकेशर, नागकेशर, विल्व, जलमथा, चिनि, सुगन्धवाला, आकलविन्धि, कुटजत्वक् फल, आदा, आतैच, धाइफुल, रसाञ्जन, आमगुटि, जामुगुटि, शिमलुआठा एतानि समभागानि कृत्वा अतः अर्द्धतोलक माने तण्डुलजलै· मधु प्रक्षेपेण पिवेत ।

## मुद्गाद्यं घृतम्

मुद्गमाषस्य निर्य्यूहे रास्नाचित्रक-नागरैः ।
सिद्धं सपिप्पली-विल्वैः सर्पिः श्रेष्ठमसृग्दरे ॥

घृत ३ सेर, मुद्ग माष ६४ पल, जल ४८ सेर, शेष १२ सेर, कल्क, रास्ना, चितामूल, आदा मिलित्वा ८ पल ।

## शीतकल्याणकं घृतम्

कुमुदं पद्मकोशीरं गोधूमो रक्तशालयः ।
मुद्गपर्णी पयस्या च काश्मरी मधुयष्टिका ॥
बलाति बलयोर्मूलमुत्पलं तालमस्तकम् ।
विदारी शतमूली च [शतपुष्पी च] शालपर्णी सजीवका [सजीरका] ॥
फलं त्रपुषबीजानि प्रत्यग्रं कदलीफलम् ।
एषामर्द्धपलान् भागान् गव्यं क्षीरं चतुर्गुणम् ॥

पानीयं द्विगुणं दत्वा घृतप्रस्थं विपाचयेत् ।
प्रदरे रक्तगुल्मे च रक्तपित्ते हलीमके ॥
बहुरूपञ्च यत् पित्तं कामलावातशोणिते ।
अरोचके ज्वरे जीर्णे पाण्डुरोगे मदे भ्रमे ॥
तरुणी चाल्प पुष्पा च या च गर्भं न विन्दति ।
अहन्यहनि नारीणां भवति प्रीतिवर्द्धनम् ॥
फलन्तु त्रिफला ग्राह्यं शीतकल्याणके घृते ।
शीतकल्याणकं नाम परमुक्तं रसायनम् ॥

घृत ३ सेर, गोक्षीर १२ सेर, जल ६ सेर, कल्क नीलभेट, पद्म, विरिणा, गोमधान, रक्तशालि, मुगानी, पतालीकोमोरा, गमारीगुटि, यष्टिमधु, वरियालद्वय, भेट, तालर वेटु, क्षीर, काकोली वा भूमिकुष्माण्ड शुल्फा वा शतमूल, शालपाणि, मोगजीरा अथवा जीवक त्रिकोष वीज ( अथवा तियह वीज ) कदलीफलर अग्र प्रत्येक ४ तोला कै सिद्ध ।

इति वैद्यकसारोद्धारे प्रदररोगाधिकारः ॥२

## ७७ । अथ सोमरोग-चिकित्सा

प्रसङ्गात् सोमरोगश्च गरदोषाभिचारतः ।
आपः सर्व्वशरीरस्था मूत्रमार्गं व्रजन्ति च ॥
निर्गन्धा विरुजाः स्वच्छाः शीतवारि निभाः सिताः ।
स्रवन्ति चातिमात्रन्तु न शक्नोति सुदुर्व्वलः ॥
वेगं वारयितुं तस्य न विन्दति सुखं क्वचित् ।
शैथिल्यं शिरसश्चैव मुखतालुविशोषणं ॥
प्रलापो भ्रष्टा मूर्च्छा च त्वचो रौक्षस्तु शीतता ।
रोगः सोम इति ज्ञेयः स्त्रीणां निश्चेष्टता क्षणात् ॥

मैथुन, श्रम, शोक, विषदोष, कुमन्त्रादि एइ सकल कारणे शरीरगत रसक जलकरि मूत्रद्वारे बाहिर करे । निर्गन्ध, निरुज, निर्म्मल, शुक्ल नचेत् कृष्ण अतिशय स्रवे ; मातिब नोवारे, शरीर दुर्व्बल करे,

२ । मूढगर्भलक्षणम्—स्त्रीणां वातहतं रक्तं ऋतुकाले तु शूलकृत् ।
तेन गर्भं न विन्देत [नभिन्देत] स्त्रीणां मूढगर्भः स्मृतः ।
ऋतुकालत वाते रक्तस्रावो कराइ, शूले धरे तेन हेतुना गर्भपातक मूढगर्भ बोले ।—इत्यधिकः पाठः ।

तार वेग रोध करि राखिब नोबारे. शरीर अवसन्नाइ। शिरत न करि पानोलगा हेन करे, मुख तालु शुकाइ निये, हामि विस्तर हइ, शरीर विवर्ण हइ; हात भरि चेचा हइ। इहाके स्त्री सोमरोग बोले। तत्काले निश्चेष्टा करे।

कदलीनां फलं पक्वं धात्रीफलरसं मधु।
शर्करा पयसोपेतं सोमे धारणमुत्तमम्॥

पक्व कदलीफल २ तोला, गोदुग्ध १६ तोला, आमलकी रस १ तोला, मधु ३२ रति, चिनि ३२ रति आलोड्य पेयं।

तालकन्दञ्च खर्जुरं मधुकञ्च विदारिका।
शर्करा-मधुसंयुक्तं मूत्रातिसारनाशनम्॥

तालशिपा, खर्ज्जरशिपा, यष्टिमधु, पताली कोमोरा एषां स्वरस १ पल चिनि दत्वा पेयं।

## बृहद्धात्रीघृतम्

धात्रीफल रसप्रस्थं विदार्य्याः स्वरसन्तथा।
पञ्चतृणरसप्रस्थे घृतप्रस्थं विपाचयेत्॥
क्षीरस्यापि [ क्षीरञ्चापि ] शतावर्य्याः प्रस्थं प्रस्थं रसस्य च
दत्वा मृद्वग्निना वैद्यः पाकसिद्धिं विधाय च॥
सुसिद्धे प्रक्षिपेच्चूर्णमेषाञ्चापि पलं पलं।
मधुकं त्रिवृता चैव धारञ्च वृद्धदारकं॥३
शर्करायाः पलान्यष्टौ मधुनश्च पलाष्टक।
चूर्णं दत्वा सुमथितं स्निग्धे भाण्डे निधापयेत्॥
सोदावर्त्तानि हन्त्याशु सोमरोगं निहन्त्यलम्।
तृष्णादाहमरोचं हि शूलं दुर्नामनाशनम्॥
मूत्राघातं मूत्रकृच्छ्रं बहुमूत्र विनाशयेत्।
पित्तजान् विविधान् व्याधीन् वातजांश्च सुदारुणान्॥

३। कल्क—एला-लवङ्ग-त्रिफला कपित्थफलमेव च।
सजलं सरलं मांसी कदलीकन्दमेव च॥
उत्पलस्य च कन्दानि कल्कं दत्वा विचक्षणः।
ततः कल्कं परित्याज्य चूर्णं दद्यात् पलं पलम्॥
—इत्यधिकः पाठः आयुर्वेदसंग्रहे देवेन्द्रनाथस्य।

करोति शुक्रोपचयं बलवर्णकरं परम् ।
नानारूपविकारघ्नं विशेषाद् बहुमूत्रनुत् ॥

घृत ३ सेर, आमलकी रस ३ सेर, पाताली कोमोरा रस ३ सेर, पञ्चतृणरस ३ सेर, गोक्षीर ३ सेर, शतमूल रस ३ सेर, पाक सिद्धे प्रक्षिपेच्चूर्णं यष्टिमधु, तेड़िया, यवक्षार, वृद्धदारं एषां पलं पलं, चिनि ८ पल शीते दत्वा मर्द्दयित्वा नवीन मायडे संस्थाप्य अतो मद्धं कर्ष १, क्षीर मनुपिवेत् ।

**इति वैद्यकसारोद्धारे सोमरोगाधिकारः ॥**

## ७८ । अथ योनिव्यापच्चिकित्सा

योनिव्यापत्सु भूयिष्ठं शस्यते कर्म्मवातजित् ।
वस्त्यभ्यङ्गपरीषेक प्रलेपाः पिचुधारणम् ॥

योनि दोषत, वातशान्ति क्रिया करिव । वस्ति तैल क्रिया सेक, लेप, धारणम् एइ क्रिया करिव ।

वचोपकुञ्चिकाजाजी-कृष्णावृषक-सैन्धवम् ।
अजमोदां यवक्षारं चित्रकं शर्करान्वितम् ॥
पिष्ट्वा प्रसन्नयालोड्य खादेत् तद्घृतभर्जितम् ।
योनिपार्श्वार्त्तिहृद्रोग-गुल्मार्शो विनिवृत्तये ॥

वच, कालजीरा, पिप्पली, वाहक, सैन्धव, आजनि, यवक्षार चित्रक, चिनि, एतान् पिष्ट्वा, घृते मर्ज्जयित्वा यथाशक्ति पेयं ।

रास्नादिः—रास्नाश्वदंष्ट्रा-वृषकैः शृतं शूलहरं पयः ।

रास्ना, गोक्षुर, वासकमूल एषां मिलित्वा २ तोला, गोदुग्ध २ पल, जल ४ पल, शेष दुग्ध २ पल पेयम् ।

गुडूचीत्रिफलादन्तीक्वाथैश्च परिसेचनम् ।

आमरिलता, त्रिफला, दन्ती एषां मिलित्वा २ तोला जल ६ पोवा, शेष ४ पलं, अनेन योनिप्रक्षालनं ।

### नताद्यं तैलम्

नतवार्त्ताकिनी कुष्ठ-सैन्धवामरदारुभिः ।
तैलात् प्रसाधिताद्धार्य्यः पिचुर्य्योनौ रुजापहः ॥

तिलतैल ३ सेर, पानी १२ सेर, कल्क तगरमूल, कण्टकारी, कूर, सैन्धव, उषैकाठ एषां मिलित्वा ८ पल, तैलं सिद्धं अनेन तैलेन वस्त्रे वर्त्तिं कृत्वा योनौ देया अथवा वर्षयेत्, प्रक्षालयेत् ।

दुर्गन्धयोन्यां—यामिन्यां पूतियोन्याञ्च कर्त्तव्यः स्वेदनोविधिः ।

योनि दुर्गन्धत सेतु दिव, तैल घर्षण क्रिया करिव ।

## शल्लकीतैलम्

शल्लकीजिङ्गिनीजम्बु धवत्वक् पञ्चवल्कलैः ।
कषायैः साधितः स्नेहः पिचुः स्याद्विप्लुतापहः ॥

शालर छाल, जिङ्गिनी वृक्षर छाल, जम्बुछाल, धवछाल, वर, पाकड़, पाकरी, डिमर, थैकर, एषां मिलित्वा १०० पल । जल ४८ सेर, शेष १२ सेर, कल्क तस्य ८ पल, म्रक्षणं ।

आखोर्मांसं सपदि बहुधा खण्डखण्डीकृतं यत्,
तैले पाच्यं द्रवति नियतं यावदेतन्न सम्यक् ।
तत्तैलाक्तं वसनमनिशं योनिभागे दधाना,
हन्ति व्रीडाकर भगफलं नात्र सन्देहबुद्धिः ॥

मूषिक मांसं कुटयित्वा तैलेन मज्जनं खोलके तत्तैलतो यं स्रवति, गृहीत्वा, वस्त्रे भक्षयित्वा योनौ प्रवेशयेत् ।

विदीर्णायां योनौ योनिकन्दे—

मूषलीमूल-लेपेन [सुषवीमूल-लेपेन४] प्रविष्टान्तर्वहिर्भवेत् ॥

नागिनी मूरवन्धा मूल लेप दिव, ओलोवा कन्द भितर हइ ।

योनिर्मूषवसाभ्यङ्गान्निःसृता प्रविशेदपि ।

इन्दुर मांस कुटि खोलात भाजिव तैलेन, सि तैल घसिव कन्द ओलोवा भितरक याइ ।

लोध्रतुम्बीफलालेपो योनिदार्ढ्यं करोति च ।

भूमबति छाल, तितालाउ, पिष्ट्वा योनि लेपः दृढ हइ ।

वेतसमूल-निःक्वाथ क्षालनेन तथैव च ।

थैकर मूल २ तोला, जल ४ पल, शेष १ पल, तेन योनि प्रक्षालनं दार्ढ्यं ।

मूषिक-वादुलिवसा म्रक्षणं योनि-दार्ढ्यदम् ॥

मूषिक मांस, वादुलि मांस वाटि लेप दिव ।

४ । सुषवीमूल लेपेन, कारवेल्लमूललेपेनेत्यर्थः । —चक्रदत्ते शिवदासः ।

वचानीलोत्पलं कुष्ठं मरिचानि तथैव च।
अश्वगन्धा हरिद्रा च गाढ़ीकरणमुत्तमम्॥

वच, नीलमेट, कुर, मरिच, अश्वगन्धा, हरिद्रा, एतैः सममागे· पिष्टैर्लेपः

## पञ्चपल्लवाद्यं घृतम्

पञ्चपल्लवयष्ट्याह्व मालतीकुसुमैर्घृतम्।
रविपक्वमन्यथा वा योनिगन्ध-विनाशनम्॥

आम, जामु, कौ, जरा, विल्व, एइ सकलर पत्र यष्टिमधु मालतीफुलं एषां कल्कं १ पल, घृत ४ पल जलेन गोलयित्वा रौद्रे शोषयेत्। अथवा अग्निपाके जलं चतुर्गुणं देयम्। योनौ म्रक्षणम्।

सकाञ्जिकं जवापुष्पं भृष्टं ज्योतिष्मतीदलम्।
दूर्व्वायाः पिष्टक प्राश्य५ वनिता चार्त्तवं लभेत्॥

जबापुष्प १ तोला, काञ्जि ८ तोला, पिष्ट्वा खाद्यं। कोवाचुटि लतार पात, दूर्व्वामूल भृष्टं तण्डुल जलेन पेयं। नष्ट ऋतु हय।

कन्दं रक्तोतपलस्याथ रक्तकार्पासमूलकम्।
करवीरस्य मूलञ्च रक्तचोड्रस्य मूलकम्॥
वञ्जनस्य तथा मूलं गन्धमातृद्विजीरकौ।
रक्तचन्दनजञ्चैव समभागानि भावयेत॥
तण्डुलोदकमम्पिष्टं ऋतुस्नानात् प्रदापयेत्।
योनिशूलं कुक्षिशूलं प्रदरञ्च विनाशयेत्॥
योनिशूलहरः प्रोक्त उत्पलादिरयं गणः॥

रक्त पद्ममूल, रक्त कार्पासमूल, रक्तकरवीर मूल, रक्ता वेडेना मूल, रक्ता ओड़ (जबा) मूल, गन्धकलाइ जीराद्वय, रक्तचन्दन एतत् सममागं अष्टमाग तण्डुलोदकेन पिष्ट्वा तेनैव पिबेत्।

### इति वैद्यकसारोद्धारे योनिव्यापदधिकारः॥

५। दूर्व्वापिष्टञ्च सम्प्राश्येति मूले। दूर्व्वायाः पिष्टकमिति, दूर्व्वातण्डुलाभ्यां कृतं पिष्टकमित्यर्थः।
—शिवदासः।

## ७९। अथ प्रथमार्त्तवे

यस्या योनौ कटौ शूलं शोणितं तनुचारुणं।
उत्पलादि गणं तस्याः पाययेत्तन्डुलाम्बुना॥

कोनो स्त्रीर शोणित स्राव हइ योनि कङ्काल हइते शूल धरे, शोणित अल्प तनु अघन, योनिव्यापद्धिकारोक्त उत्पलादि गणमत्र योज्यं।

कदम्ब-वृहतीमूलं विल्वमूलञ्च बुद्धिमान्।
समभागञ्च तत् पिष्ट्वा छागीक्षीरेण पाययेत्॥
त्रिरात्रं पञ्चरात्रं वा यावद्वहति शोणितम्।
यस्याः पित्तहतं रक्तं फलं तस्य न विद्यते॥

कदम्बमूल, वृहतीमूल, विल्वमूल, एतान् समभागान् छागीक्षीरेण पिष्ट्वा भक्षयेत्।

उत्पलं चन्दनं कुष्ठं मूलं तगरसम्भवं।
यष्टिमधु समं पिष्ट्वा अजाक्षीरेण पाययेत्॥
बहुलं पिच्छिलं स्निग्धं स्थूलं स्रवति शोणितम्।
योनौ नाभौ च शूलञ्च कफे भवति दारुणम्॥

रक्तपद्म, रक्तचन्दन, कुर, तगरमूल, यष्टिमधु एतानि समभागानि छागीक्षीरेण पाययेत्। काजल गरामूलं पिष्ट्वा छागीक्षीरेण पेयम्।

सुवर्णस्य रूप्यकस्य चूर्णे ताम्रस्य चाज्यसंमिश्रे।
पीते शुद्धे क्षेत्रे भेषजयोगाद् भवेद् गर्भः॥

एकैकचूर्णं घृतमिश्रं लिहेत्।

गर्भधारणे—पुष्योद्धृतं लक्षणाया मूलं पिष्टं सुकन्यया।
ऋत्वन्ते घृतदुग्धाभ्यां पीत्वाप्नोत्यबला सुतं॥

पुष्या नक्षत्रे काजल गरामूल आनि पिष्ट्वा घृत-दुग्धाभ्यां पेयं गर्भं धत्ते। चतुर्थाहे निरामिषान्नं दुग्धेन भुञ्जीत।

क्वाथेन हयगन्धायाः साधितं सघृतं पयः।
ऋतुस्नाताऽबला पीत्वा धत्ते गर्भं न संशयः॥

अश्वगन्धा २ तोला, जल ३ पोवा, दुग्ध २ पल प्रक्षेप घृत ६४ रति गर्भं धं

पिप्पल्यः शृङ्गवेरञ्च मरिचं केशरं तथा ।
घृतेन सह पातव्यं वन्ध्यापि लभते सुतम् ॥

पिप्पली, आदा, मरिच, नागकेशर एतानि पिष्ट्वा घृतेन पेय । अन्नं दुग्धेन भुञ्जीत । वन्ध्या गर्भधारणम् । इति स्त्रीवन्ध्या गता ।

## सम्पद्मोदकः

अथ पुरुषवन्ध्योपायः—तालमूली शतमूली भूमिकुष्माण्डमेव च ।
अश्वगन्धा च गोधूमं शाल्मली कट्फलन्तथा ॥
गोक्षुरं वानरीविजं वला चातिवला तथा ।
मधुकं क्षीरकाकोली समभागैः पलैस्त्रिभिः ॥
महिषीघृतपिष्टञ्च मोदकन्तु सशर्करं ।
माक्षिकेण समायुक्तं त्रिसुगन्धि-समन्वितम् ॥
मोदकं सम्पदं नाम पुंसा बन्ध्यत्वनाशन ।
ओषधं सर्व्वमेतद्धि बीजदोषविनाशन ॥
क्षीणशुक्रोऽथवाऽशुक्रो मन्ददृष्टिस्तथैव च ।
वलक्षीणः क्षीणदेहो वाह्यमारुतसंकुलः ॥
बहुदारश्च वृद्धश्च कन्यासन्ततिरेव च ।
भक्षयेदोषधेर्म्मानं वृद्धोऽपि तरुणायते ॥

नागिनी मूरवान्धा, शतमूल, पातालीकोमोरा, अश्वगन्धा, गोमधान, शिमलु, काइफल, गोक्षुर, वान्दरकेकोवागुटी, द्विविध बरियाल, यष्टिमधु, क्षीरकाकोली प्रति द्रव्य ३ पलके लव, महिषी घृत, मधु, सबाके मिश्र करि १ तोला प्रमाणे मोदक, एलाचि, दालचिनि, तेजपत्र चूर्णा दि सुवासित करि अनुपान करि खाव । शाल्यन्न, मुद्गान्न, दुग्धान्न खाव । क्षार वर्ज्जिव, पुरुषवन्ध्या गुचे ।

**इति भैरवतन्त्रे कुन्तिकौशिकसंवादे पुरुषवन्ध्याधिकारः ॥**

## ८० । अथ गर्भरक्षाविधिः

प्रथमे मासि—मधुकं शाकवीजञ्च पयस्या सुरदारु च६ ।

यष्टिमधु, ठोठनीशाकवीज, क्षीरकाकोली, उभैकाष्ठ एषां मिलित्वा ३२ रति दुग्ध पलेकेन पेयं ।

६ । मधुकमित्यादि, शाको, मरुजस्तरुस्तस्य वीजम् । पयस्या क्षीरकाकोली, अश्मन्तकः अम्लोटकः मालुवा वा ताम्रवल्ली, मञ्जिष्ठा । —चक्रदत्ते शिवदासः ।

द्वितीये मासि—अश्मन्तकः कृष्णतिलास्ताम्रवल्ली शतावरी ।

वटाङ्कुर, कृष्णतिल, मजाडि, शतमूल एषां मिलित्वा दुग्धपलेकेन पेयम् ।

तृतीये मासि—वृक्षादनी पयस्या च तथैवोत्पलसारिवा ।

रघुमरा, क्षीरकाकोली, तदभावे भूकुष्माण्ड, भेटफुल एषां मिलित्वा ३२ रति दुग्धपलेकेन पेयम् ।

चतुर्थे मासि—अनन्तासारिवा रास्ना पद्मा मधुकमेव च ।

अनन्तमूल, श्वेतभेदेली, रास्ना, अकलविर, यष्टिमधु एषां मिलित्वा ३२ रति दुग्धपलेकेन पेयम् ।

पञ्चमे मासि—बृहतीद्वय काश्मर्य्यं क्षीरिशुङ्गास्त्वचोघृतं [ विसम् ] ।

भेकुरि, कण्टकारीफल, आहत, जरि, गन्धविरिणा एषां मिलित्वा ३२ रति पिष्ट्वा दुग्ध-घृताभ्यां पेयम् ।

षष्ठे मासि—पृथक्पर्णी बलाशिग्रुः श्वदंष्ट्रा मधुयष्टिका ।

पिठानी, वरियाल, चजिना, गोक्षुर, यष्टिमधु, एषां मिलित्वा ३२ रति दुग्धपलेकेन पेयम् ।

सप्तमे मासि—शृङ्गाटकं विसं द्राक्षाकशेरुमधुकं सिता,
मासेषु सप्तयोगाःस्युरर्द्धश्लोकास्तु सप्तसु ।
यथाक्रमं प्रयोक्तव्यं गर्भस्रावे पयोयुता ॥

शिङ्गरि, मृणाल, द्राक्षा, तदभावे गमारीगुटी, केहेरु, यष्टिमधु, चिनि एषां मिलित्वा ३२ रति दुग्धपलेकेन पेयम् ।

अष्टमे मासि—कपित्थविल्वबृहती पटलेक्षु निदिग्धिकाः ।
मूलानि क्षीरसिद्धानि दापयेद्भिषगष्टमे ॥

कौ, विल्व, कण्टकारी, पटोलपत्र, पातालोकोमोरा, भेकुरि एषां मिलित्वा, २ तोला क्षीर १६ तोला, जल ३ पोवा, दुग्धावशेषः पेयः ।

नवमे मासि—नवमे मधुकानन्ता पयस्या सारिवाः पिवेत् ।

यष्टिमधु, अनन्तमूल, पातालोकोमोरा, श्वेतभेदेली एषां मिलित्वा ३२ रति पिष्ट्वा दुग्धपलेकेन पेयम् ।

दशमे मासि—पयस्तु दशमे शुण्ठ्या शृतशीतं प्रशस्यते ।

शुण्ठी २ तोला, दुग्ध २ पल, जल ३ पोवा दुग्धावशेषः पेयः ।

मधुना छागीदुग्धेन कुलालकरकर्द्दमः ।
अवश्यं स्थापयेद् गर्भं चलितं पानयोगतः ॥

छागी दुग्ध २ पल, कुलालकर प्रोञ्छित कर्द्दम ३२ रति मधु दत्वा पेयं ।

गर्भशूले—कशेरुश्रृङ्गाटक पद्मकोत्पलं समुद्गयष्टीमधुकं सशर्करम् ।
सशूलगर्भं स्तुतिपीड़िताङ्गना पयोविमिश्रं पयसान्नभुक् पिवेत् ॥

केहेर, शिङ्गरि, पद्मकेशर, भेटफुल, मुगानी एषां मिलित्वा ३२ रति दुग्ध-पलैकेन पेयम् ।

कुशकाशोरुवकाणां मूलैर्गोक्षुरकस्य च ।
शृतं दुग्धं सितायुक्तं गर्भिण्याः शूलनुत् परम् ॥

कुश, कडुवा, एरण्डमूल, गोक्षुर एषां मिलित्वा २ तोला, दुग्ध २ पल, जल ३ पोवा दुग्धावशेषः पेयः ।

अथ गर्भिणीज्वरे—चन्दनं सारिवालोध्रं मृद्विका शर्करायुतं ।
क्वाथं कृत्वा प्रदातव्यं गर्भिण्या ज्वरनाशनम् ॥

रक्तचन्दन, श्वेतभेदेली, लोध्र, गमारीगुटी, एषां मिलित्वा २ तोला क्वाथ चिनि दत्वा पेयं ।

एरण्डमूलममृता मञ्जिष्ठा रक्तचन्दनं ।
दारुपद्मयुतोक्वाथो गर्भिणी ज्वरनाशनः ॥

एरण्डमूल, गुडूची, मजाठि, रक्तचन्दन, उत्पैकाष्ठ, पद्मकाष्ठ एषां मिलित्वा २ तोला क्वाथजलेन पेयम् ।

गर्भिणी-ग्रहण्यां—आम्रजम्बुत्वचः क्वाथं लेहयेल्लाजशक्तुभिः ।
अनेन लीढ़मात्रेण गर्भिणी ग्रहणीं जयेत् ॥

आमछाल, जामुछाल, २ तोला क्वाथ, लाजाचूर्णा दि खादेत् ।

इति वैद्यकसारोद्धारे गर्भिणी-चिकित्साधिकारः ॥

## ८१ । अथ सुखप्रसवोपायः

पाठालाङ्गलि सिंहास्य मयूरक-जटैः पृथक् ।
नाभिवस्ति-भगालेपात् सुखं नारी प्रसूयते ॥

आकलविन्धिमूल, लाङ्गलीयामूल, अपामार्गमूल, एषां मूलानि, एकैकमानीय पिष्ट्वा, नाभित, वस्तित, योनित लेप दिव, सुखे प्रसव हइव ।

गृहाम्बुना गेहधूमपानं गर्भापकर्षणम् ।

काञ्जिकेन आवान्धु चूर्णा पिवेत् ।

मातुलुङ्गस्य मूलानि मधुकं मधुसंयुतम्।
घृतेन सह पातव्यं सुखं नारी प्रसूयते ॥

सोलेङ्गमूल, यष्टिमधु, पिष्ट्‌। ३२ रति, मधु १६ रति, घृत २ तोला पेयं।

स्नुहीक्षीरं तथास्तोकं गर्भिण्याः शिरसि क्षिपेत्।

स्नुहीक्षीर शिरत किञ्चित् फोट दिब। प्रसव हइ।

च्यवनमन्त्रः—इहामृतञ्च सोमश्च चित्रभानुश्च भाविनि।
उच्चैःश्रवाश्च तुरगो मन्दिरे निवसन्तु ते ॥
इदममृतमपां समुद्धृतं वै तव लघुगर्भमिमं विमुञ्चतु स्त्री।
तदनल पवनार्कवासवास्ते सहलवणाम्बुधरैर्दिशन्तु शान्तिं ॥
मुक्ताः पाशा विपाशाश्च मुक्ताः सूर्य्येण रश्मयः।
मुक्तः सर्पभयाद्[मुक्तः सर्व्वभयाद] गर्भ एह्येहि मारिच स्वाहा
[विरमावितः] ॥

इति मन्त्रेण श्रावयेत्।

ॐ क्षिप निक्षेप मन्मथ प्रमथं मुञ्च मुञ्च स्वाहा।

( इति सारसंग्रहमतम् ) अनेन मन्त्रेण औषधं परिजप्य पानीयं वा सप्तवाराभिमन्त्रितं पातुं देयं। इति च्यवनमन्त्रोऽयं।

अथ अमरापातनं—कटुतुम्ब्यहि-निर्म्मोक कृतवेधन-सर्षपैः।
कटुतैलान्वितो धूमो योनेः पातयतेऽमरा ॥

तितालाउ, सापर कलप, घुकुर चुमे, सेवासरियह कटुतैलेन मिश्रयित्वा, अङ्गारोपरि दत्वा योनौ धूपयेत् लगि आहे।

अङ्गुलि चुलि मेराइ, गलत दिब, लगि आहे।

लाङ्गलीया विषमूल बटि, हस्तत मरित, घहिब लगि आहे।

प्रसवे रक्तस्राव-निवारणं शूलञ्च—
वायुः प्रकुपितः कुर्य्यात् संरुद्ध्य रुधिरच्युतम्।
सूतायाः हृच्छिरोवस्तिशूलं मक्कलसंज्ञितं ॥

प्रसवत वेदना जन्मि वायु प्रकुपित हइ योनिद्वार निरुधि रक्तस्राव करे, सेइ कालत पेटत शूलधरे तारे नाम मक्कल शूलव्याधि बोले।

यवक्षारं पिबेत् तत्र सर्पिषोष्णोदकेन वा।

यवक्षार ॥० तोला, घृत ४ टका, दुग्धेरे वा उष्णोदकेरे पानं।

दशमूलविमिश्रस्तु पञ्चकोलमिहेष्यते ।

दशमूल पञ्चकोल मिलित्वा २ तोला, क्वाथं कृत्वा पेयं ।

हन्ति मक्कलजं शूलं हृच्छिरोवस्तिसम्भवम् ।

मक्कलशूले—पारावत शकृत् पीतं शालितण्डुलवारिणा ।

गर्भपान्तरोत्थे तु रक्तस्राव-निवारणम् ॥

पारावत विष्ठा ३२ रति, शालितण्डुल जलेन पलैकेन पेयं ।

पृथिव्यां पतिते वाले योनौ पीड़नमिष्यते ।

अग्रयायो यथा वायुस्तथा संरक्षणक्रिया ॥

पृथिवीत बालक परिले योनित पीड़ा हुइ ।

हृत्कुक्षिशूलमाध्मानं प्रविष्टे तत्र जायते ।

कुक्षिक्षामकरं स्त्रीणां जातीपत्रं गुड़ै र्लिहेत् ।

कुक्षिक्षामत जाइपत्री १ तोला, गुड़ १ तोला, द्वयो लिहेत् ।

प्रातर्मधु समायुक्तां त्रिसप्ताह कणाजटां ।

पिप्पली मूलर चूर्ण मधुना लेह्यम् ।

घृतमधुलीढं प्रातर्द्धात्रीचूर्णैस्तथा निशायाः ।

सूतायाः कृशमदनं कुरुते क्रमेण मालतीमूलम् ॥

आमलकीचूर्ण १, हालधिचूर्ण १, घृत मधुभ्यां लेह्यम् । जातिफुलर मूल चूर्ण क्रमेण पिवेत् लिहेद्वा । इति कुक्षिकृशकरणम् ।

जलपिष्ट-वरुणपत्रैः सघृतैरुद्वर्त्तनालेपौ तु ।

जलेरे वाटि वरुणर पात, घृते मैते स्तनत लेप दिव ।

लेप दियार पूर्व्वे गोमय दिव, पाचे लेप दिव । किक्किशरोग वोले, पयोधरत, उरुदेशत, चर्म्मविदारण हइ, तारे ५ प्रकार, रक्त विद्रधिक त्याग करि विद्रधिर एके लक्षण ।

विशालामूललेपस्तु हन्ति पीड़ां स्तनोत्थिता ।

निशाकनकफलाभ्यां लेपश्चापि स्तनार्त्तिहा ॥

हालधि १, धुत्तूरागुटी १ दुइको वाटि स्तनत लेप दिव । रक्तमोक्षणादि विद्रधिर सकल क्रिया करिव ।

इति स्तनरोगः ॥

माहिषीभव-नवनीतं व्याधिबलोग्रा तथैव नागबला।
पिष्ट्वा मर्द्दनयोगात् पीनौ कठिनौ स्तनौ कुरुते॥

महीषी दुग्धर नवनीत २ तोला, कुर, सोनबरियालर मूल, बच, कुकुर सुता एषां प्रति १ मद्दा बाटि स्तने मर्द्दनं।

## श्रीपर्णीतैलम्

श्रीपर्णीरसकल्काभ्यां सिद्धं तैलं तिलोद्भवम्।
तुलकेनैव तत् तैलं स्तनस्योपरि धारयेत्॥
पतितावुत्थितौ स्त्रीणां भवेयातां पयोधरौ॥

## इति स्तनस्थिरीकरणम्॥

अथ स्तन्य-शोधनम्—तत्र वातात्मके स्तन्ये दशमूलीजलं पिवेत्।

दशमूल मिलित २ तोला, पानी ४ पल, शेष १ पल, पेयम्।

हरिद्रादिं वचादिं७ वा पिवेत् स्तन्य-विशुद्धये [स्तन्यस्य वृद्धये]।

हालधि, आचुकाठ, बच, हरिद्रादिः अथवा पृश्निपर्णी, इन्द्रयव, यष्टिमधु एषां प्रत्येक २ मद्दा पानी ४ पल, शेष १ पल।

बचादि :—बच, मथा, आतइच, हरीतकी, उबै, [ शुयठी, इन्द्रयव, अनन्तमूल, गुड़ची, कटुकी ] नागकेशर एषां प्रति १ मद्दा, पानी ४ पल, शेष १ पल। इति स्तन्य दोषं।

लौहं पिप्पली क्वाथेन पिवेत् नारी च निश्चितं।
सूतिकोपद्रवान् हन्ति पीतमात्रं न संशयः॥

पिप्पली क्वाथेरे लौह १ रति वा २ रति, लौहदण्डेर मारि तप्तं कृत्वा पिवेत।

अमृतादिः—अमृता नागर सहचर भद्रोत्कट पञ्चमूल-जलदशृतम्।
शीतं मधुसंयुक्तं निवारयति सूतिकातङ्कम्॥

आमैलता, आदा, भियटी फुलर शिषा, कैवर्त्तमथा, इकरमूल, स्वल्प पञ्चमूल, आरु मथा एषां प्रति १ मद्दा, जल ४ पल, शेष १ पल, शीते मधु प्रक्षेप पेयम्।

७। हरिद्रादि बचादिगणौ सौश्रुतौ। यथा—हरिद्रा, दारुहरिद्रा, कलसी, कुटजबीजानि, मधुकञ्च इति कलसी पृश्निपर्णी।
बचामुस्तातिविषा भद्रदारुश्च नागकेशरञ्च। इति। भद्रदारु देवदारु।

सहचरादिः —सहचरकृत क्वाथः पिप्पलीचूर्णसंयुतः ।
दीपनो ज्वरशोथघ्नः सूतिकारोगनाशनः ॥

झिंयटी फुलर मूल २ तोला, पानी ४ पल, शेष १ पल, प्रक्षेप पिप्पलीचूर्ण ४ रति । ज्वरातिसारोक्त रसाभ्रवटिका अहयुक्त नायिकाचूर्ण अत्र कर्त्तव्या ।

## सौभाग्यशुण्ठी

नागरस्य पलान्यष्टौ घृतस्य पल विंशतिः ।
क्षीराढ़केन पक्तव्यं खण्डस्यार्द्धशतंपलम् ॥
शताह्वा जीरक व्योषं त्रिसुगन्धि-यमानिका ।
कारवीमिषि-चव्याग्नि-मुस्ता चैषां पलं पलं ॥
लेहीभूतमिदं सिद्धं घृतभाण्डे निधापयेत् ।
तद् यथाग्निवलं खादेत् प्रसूता च विशेषतः ॥
तद्वर्णंच वल्यमायुष्यं वलि-पलितनाशनम् ।
वयसः स्तम्भनं [स्थापन] हृद्यं सौभाग्यकरमुत्तमम् ॥
अजीर्णरोगनाशश्च वह्नि सन्दीपनं परम् ।
आमवातहरं श्रेष्ठं सर्व्वशूलहरं परम् ॥
नानातिसारशमनं संग्रहणीं जयेत् ।
योनिकन्दशूलहरं सूतिकारोगनाशनम् ॥

इति वैद्यकसारोद्धारे योनिव्यापदादि-स्त्रीरोगचिकित्सोपदेशः ॥

# बालरोगचिकित्सोपदेशः

## ८२। अथ बालरोग-चिकित्सा[1]

जातस्यास्यं विशोध्यादौ बालस्य सिद्धसर्पिषा।
तथाति क्लेदितं चानु बलातैलेन सेचयेत्॥
अश्मनोर्व्वादनं चास्य कर्णमूले समाचरेत्।
मुखसेकश्च कोष्णेन शीतलेनाम्भसाथवा।
यथास्य दक्षिणे कर्णे मन्त्रमुच्चारयेदिमं॥
अङ्गादङ्गात् सम्भवसि हृदयादभिजायसे।
आत्मा वै पुत्रनामासि सञ्जीव [ त्वं जीव ] शरदः शतम्॥
शतायुः शतवर्षोपि दीर्घमायुरवाप्नुहि।
नक्षत्राणि दिशोरात्रिरहश्चत्वारि रक्षतु॥
कुष्ठं वचाभयाब्राह्मी कनकं क्षौद्र सर्पिषा।
वर्णायुः कान्ति जननं लेहं बालस्य दापयेत्॥

कुर १, बच १, शिलिखा १, मालमोग शाक १, सुवर्णजारण १ मधु घृतेरे मर्दि लेहयेत्।

व्योष-शिवोग्रा रजनीकल्कं स्तन्येन पीतमथ पयसा।
उल्वं निःशेषं कुरुते पटुतां बालस्य चात्यन्तम्॥

त्रिकटु, शिलिखा, बच, हालधि एषां सममाग कल्कं स्तन्येन पयसा बा पाययेत्।

प्रथमे मासि जातस्य शिशोर्भेषज रक्तिका॥

प्रथम माहत ( जातकक ) लराक एरति प्रमाणे औषध खुवाब।

अवलेह्या तु कर्त्तव्या मधुक्षीरसिताघृतैः।

प्रथम मासरेपरा एक बत्सर पर्य्यन्ते मध क्षीर, च॑नि मिउरे अवलेह करि औषध खुवाब।

१। भैषज्यं पूर्व्वमुद्दिष्टं नराणां यज्ज्वरादिषु।
कार्य्यं तदेव बालानां मात्रा त्वास कनीयसी॥ —आयुर्व्वेदसंग्रहे वैद्येन्द्रः।

एकैका वर्द्धयेत्तावद् यावत् संवत्सरो भवेत् ।
तदूर्द्ध् माषवृद्धिः स्याद् यावदाषोड़शाब्दिकात् ॥
मृत्पिण्डेनाग्नि तप्तेन क्षीरसिक्तेन सोष्मणा ।
स्वेदयेदुत्थितां नाभिं शोथस्तेनोपशाम्यति ॥

बालो योऽचिरजातः स्तन्यं न गृह्णाति, तस्य सहसैव धात्री मधुघृत पथ्या कल्केन घर्षयेज्जिह्वाम् ।
आमलकी १, यष्टिमधु १, शिलिखा १, घृत मधुरे बाटि जिह्वात घषिव ।

मुखपाके—सह जम्बीररसेन स्नुग्दलरसघर्षणं सद्यः ।
कृतमुपहन्ति हि पाकं मुखजं बालस्य चाश्वेव ॥

जमीरर रस, सिजुपातर रस किञ्चित् मुखस्य प्रोक्षणं ।

जड़ितत्त्वे भवेद् यस्य कफदोषेण कण्टकः ।
कर्पूरवारिणा जिह्वां निघृष्य शोषयेत्ततः ॥

जिह्वात कण्टकाकार हइ, काफुर पानीत पेलाइ मुख धुवाव, पाचे मघिव ।

अश्वत्थत्वग्दलक्षौद्रैर्मुखपाके प्रलेपनम् ।
दार्व्वीयष्ट्यभयाजातीपत्रक्षौद्रैस्तथापरम् ॥

आचुकाठ १, यष्टिमधु १, जाइपत्री १ मधुरे बाटि लेप दिव । इति मुखपाकः ।

नाभिपाके—नाभिपाके निशालोध्र-प्रियङ्गु-मधुकैः शृतम् ।
तैलमभ्यञ्जने शस्तमेभिर्व्वाप्यवचूर्णनम् ॥

कटुतैल १ सेर, पानी ४ सेर, कल्क हरिद्रा, भूमरति, प्रियङ्गु, यष्टिमधु एषां प्रति २ कर्ष । अथवा हरिद्रादीनां चूर्णं नाभौ देयम् ।

गुदपाके—गुदपाके तु बालानां पित्तघ्नीं कारयेत् क्रियाम् ।
रसाञ्जनं विशेषेण पानालेपनयोर्हितम् ॥

गुदपाकत पित्तघ्नी क्रिया करिव । रसाञ्जन लेप दिव ।

बालकण्डूत्कटे कुर्य्यात् रक्तस्रावं जलौकया ।

सर्व्वाङ्गिरोगे—त्वचो बृहत्या भागौ द्वौ भागैकः कुष्ठस्य च ।
कुकूणकाख्ये लेपोऽयमञ्जनञ्चैव शस्यते ॥

भेकुरि शिपार छाल २ भाग, शोधित रसाञ्जन १ भाग द्वयोः पिष्ट्वा वर्ती कृत्वा २ चक्षुत अञ्जनं लेपो वा ।

मनःशिला शङ्खनाभिः पिप्पल्योऽथ रसाञ्जनम् ।
वर्त्तिः क्षौद्रेण संयुक्ता बाले सर्व्वाक्षिरोगनुत् ॥

शोधित मनःशिला, शोधित नाभिशङ्ख, पिप्पली, रसाञ्जन समभागे मधु दत्वाञ्जनं ।

मातुः स्तन्य कटुस्नेह-काञ्जिकैर्भावितो जयेत् ।
स्वेदाद्दीपशिखोत्तप्तो नेत्रामय-मलक्तकः ॥

अलक्तक पत्र, मातृदुग्धेरे, कटुतैलेरे, काञ्जिरे भावनादि, दीपशिखात तप्त करि चक्षुषि स्वेदः ।

रात्रिरोदने—इन्द्र-स्वरिस-पत्रञ्च धूपेनैतत् प्रयोजितम् ।
निहन्ति रोदनं रात्रौ बालस्याशु न संशयः ॥
जम्बुकनासा वायसजिह्वा नाभिर्वराहसम्भूता ।
कास्यं रसोऽथ गरलं प्रावृड् भेकस्य वामजङ्घास्थि ॥
इत्येकशोऽथ मिलितं विधृतं ग्रीवादि कटिदेशे ।
अहिण्डिका प्रशमनमभ्यङ्गो नातिपथ्य विधिः२ ॥

शियालर नासिका, काकर जिह्वा, वरार नाभि [ भिक्षुप्रार्थित वराटकस्थित पारद २ रती ], कांस्य, पारद, विष, वर्षाकालज पीतवर्ण भेकर वामजङ्घाहाड़ एतत सर्व्वं प्रत्येकम्वा, बालकस्य ग्रीवायां कटिदेशे वा बद्धं ।

आहिण्डिकायां—सप्तदल-मरिच-पिष्टं गोरोचना सहितं ।
पीतं तद्वत् तण्डुल भक्तकृतो दग्ध पिष्टक प्राशः ॥

रात्रौ घोटक बालां बध्नीयात् ।

तैलाक्तशिरस्तालुनि सप्तदलार्कस्नुही-भवं क्षीरम् ।
दत्वा रजनीचूर्णं दण्डेन स्यत्यनामाख्यः ॥

बालकर शिरत तेल दि, तालुत चतीयनार पठा, आकन्द पठा, सिजु पठा ३ एकत्र करि दिब । तार पाछे हरिद्राचूर्ण दिब ।

२ । जम्बुकेत्यादि—जम्बुकः, शृगालस्तस्य नासा, वायसः—काकस्तस्य जिह्वा, रसः, पारदः, गरलं विषम् । प्रावृड् भेकः वर्षाकालजमण्डूकः स च पीतच्छविः—सोनाबेङ इति ख्यातः, तस्य वामजङ्घास्थि । एतत् सर्व्वं प्रत्येकं मिलितं वा ग्रीवायां कट्यां वा धारणीयम् । नातिपथ्यविधिरिति व्याधिप्रभावादेवावम् ।

—चक्रदत्ते शिवदासः

लेहयेच्च शुना बालं नवनीतेन लेपितम् ।

अनामाख्यरोगे—तैलस्य भागमेकं मूत्रस्य द्वौ च शिम्बीदल-रसस्य ।
गव्यं पयश्चतुर्गुणमेवं दत्वा पचेत्तैलम् ॥
तेनाभ्यङ्गः सततं रोगमनामकाख्यमपहरति ॥

हरिद्रादय षष्ट्याह्व सिंही शक्रयवैः कृतः ।
शिशोर्ज्वरातिसारघ्नं कषायः स्तन्यदोषजित् ॥

हालधि, आचुकाठ, यष्टिमधु, भेकुरि, इन्द्रयव एषां मिलित्वा २ तोला, पानी ४ पल, शेष १ पल माता पिबेत्, किञ्चिद् बालाय दद्यात् ।

शृङ्गीं समुस्तातिविषां³ विचूर्ण्य लेहं विदध्यान्मधुना शिशूनाम् ।
कासज्वरच्छर्द्दिभिरर्द्दितानां समाक्षिकाञ्चातिविषां तथैकां ॥

काकटाश्रृङ्गी, पिप्पली एषां प्रति सममाग मधुना लेह्यं एका आतैचके मधुना लेह्यम् ।

सक्षौद्र-शर्करां लेढुं प्रयच्छेत् कटुरोहिणीं ।
लिहेन्मुहुर्मुहुर्व्वारान् तत् कल्केन जलान्वितां ॥

केवल ज्वरत चेनि मउरे कटकीतिना लेह करिव ।

कट्फलादि—कट्फलं पौष्करं शृङ्गी कृष्णाश्च मधुना सह ।
कासश्वास-ज्वरहरः श्रेष्ठो लेहः कफान्तकृत् ॥

काइफल १, पुष्करमूल, काकटाश्रृङ्गी, पिप्पली मधुना लेह्यं ।

निमन्त्रितं पूर्व्वं हरिप्रियाया मूलं समुद्धृत्य दिने रवौ च ।
बद्धं शिखायामनुरक्तमेतज्ज्वरं निहन्यादभिमन्त्रितेन ॥

शनिबारे निमन्त्रितं रक्ततुलसीमूलं । ॐ कुम कुन्दे अमुकस्य ज्वरं नाशय नाशय ह्रीं स्वाहा । अनेनाष्टोत्तरशतधा अभिमन्त्र्य, ज्वरे तस्य बालस्य शिखायां बन्धनीयम् ।

ॐ ब्रह्म रुद्रः प्रभुः स्कन्दः विष्णुर्देवो हुताशनः ।
रक्षन्तु ज्वरितं बालं मुञ्च मुञ्च इमं ग्रहं स्वाहा ॥

अनेनैं शिरसि मन्त्रयित्वा दातव्य सर्षप सहितं ।

३ । शृङ्गीं सकृष्णातिविषां इति मूले पाठः ।

ॐ यथा बज्रं यथा चक्रं यथा शूलं यथा हलं ।
यथा च शक्तिः स्कन्दस्य रक्षत्येषा तथास्तु ते ॥
स्वस्ति ते षन्मुखः स्कन्दो मागा ग्रहाश्च रेवती ।
दिशः सूर्य्योऽन्तरीक्षञ्च स्वस्ति कुर्व्वन्तु ते सदा ॥
ब्रह्मणस्तेजसा चैव विष्णुर्विप्रस्य तेजसा ।
रुद्राणां तेजसा चैव रक्षितोऽसि सुखी भव ॥

इति रक्षामन्त्रः ॥

यस्य कुमारस्य पूर्व्वं माता यद्यतिसारिणी ।
धात्री विनष्टयेद्देहं रोगदोषाद्यपेक्षया ॥
पञ्चकोलादि सिद्धं वा पेयादि संप्रयोजयेत् ।
विल्वपञ्चक-सिद्धं वा पेयादि संप्रयोजयेत् ॥
त्र्यहं त्र्यहं वा सम्प्राश्य ज्ञात्वा दोष-वलावलम् ॥

## स्थिरादिः

स्थिरा वलापृश्निपर्णि दाड़िमं विल्वमेव च ।
समां शिकैर्हिं संक्षुण्णैः शृतं तोयं प्रशस्यते ॥
भक्ते यूषे रसे पाने मुद्गे मण्डादिसाधने ।
सातिसारे ज्वरे छर्द्यां शस्यते विल्वपञ्चकम् ॥

शालानी, वरियाल, चाकलिया, दालिमफलर वाकल, वेलशुण्ठी एषां प्रति ३ मशा २ रति, पानी ४ सेर, शेष २ सेर ; अनेन जलेन मण्डादि साधनीयम् ।

## बालचातुर्भद्रिका

घनकृष्णाकणाशृङ्गीचूर्णं क्षौद्रेण संयुतम् ।
शिशोर्ज्वरातिसारघ्नं कासश्वास-वमीहरम् ॥

मथा १, पिप्पली १, काकड़ाशृङ्गी १ मधुना लिहेत् ।

## धातक्यादिः

धातकी-विल्व-धन्याक लोध्रेन्द्रयववालकैः ।
लेहः क्षौद्रेण बालानां ज्वरातिसारवान्तिजित् ॥

रजनी-दारु-सरल-श्रेयसी बृहतीद्वयम् ।
पृश्निपर्णी-शताह्वा च लीढं माक्षिक-सर्पिषा ॥

धाइफुल १, शुकान बेल १, धनीया १, भूमरति १, इन्द्रयव १, सुगन्धवाला १ एषां सममाग चूर्णं मधुना लेह्यम् । हालधि १, दवेकाठ १, सरलकाठ १, गजपिप्पली १, भेकुरि १, कण्टकारी १, पृश्निपर्णी १, शुलफा १, एषां सममागचूर्णं घृतमधुभ्यां लिहेत् ।

पीतं पीतं वमेद् यस्तु स्तन्यं तं मधुसर्पिषा ।
द्विवार्त्ताकीफलरसं पञ्चकोलञ्च लेहयेत् ॥

भेकुरि गुटीर रस, कण्टकारी रस, घृतमधुभ्यां लिहेत् । पञ्च कोलम्वा घृतमधुभ्यां खादेत् ।

आम्रास्थिलाजसिन्धूत्थैर्लेहः क्षौद्रेण छर्द्दिनुत् ।

आमर गुटी, आखै, किञ्चित् सैन्धवं दत्वा मधुना लिहेत् ।

पिप्पलीमरिचानान्तु चूर्णं समधुशर्करम् ।

पिप्पली, मरिच चूर्णं मधुना लिहेत् ।

रसेन मातुलुङ्गस्य हिक्काछर्द्दिनिवारणम् ।

## बिल्वपञ्चकम्

बिल्वञ्च पुष्पाणि च धातकीनां जलं सलोध्रं गजपिप्पली च ।
क्वाथावलेहो मधुनाविमिश्रो बालेषु योज्यारतिसारितेषु ॥

बेलशुयठी, धाइफुल, सुगन्धवाला, भूमरति छाल, गजपिप्पली एषां प्रति ॥ आधातोला, पानी ४ पल, शेष १ पल, शीते मधु प्रक्षेप ॥ आधातोला पेयम् ।

समङ्गाधातकीलोध्र-सारिवाभिः शृतं जलम् ।
दुर्द्धरेऽपि शिशोर्देयमतिसारे समाक्षिकम् ॥

वराहक्रान्ता, धाइफल, भूमरतिरछाल, अनन्तमूल एषां प्रति ॥ आधातोला पानी ४ पल, शेष १ पल पेयं ।

आम्रातकाम्रजम्बूनां त्वचमादाय चूर्णयेत् ।
मधुना लेहयेद् बालमतिसारविनाशनम् ॥
नागरातिविषामुस्तं बालकेन्द्रयवैः शृतम् ।
कुमारं पाययेत् प्रातः सर्व्वातिसारनाशनम् ॥

विल्वमूल [विल्वचूत] कषायेण लाजाश्चैव सशर्कराः ।
आलोड्य पाययेद्बालं च्छर्द्यतिसारनाशिनीः ।

विल्वरशिपा २ तोला, पानी ४ सेर, शेष २ सेर, लाजाचूर्ण २ टका, चेनि १ टका, माता पेयम् ।

मरिच महौषध कुटजं द्विगुणीकृतमुत्तरोत्तरं क्रमशः ।
गुड़तक्रयुक्तमेतद् ग्रहणीरोगं निहन्त्याशु ॥
लेहस्तैल सिताक्षौद्र तिलयष्ट्याह्वकल्कितः ।
बालस्य रुन्ध्यान्नियतं रक्तस्रावप्रवाहिकाम् ॥

तिल, यष्टिमधु, अनयोश्चूर्णं, तेल, चेनि, मधु दत्वा माता पिवेत् ।

विल्वशक्राम्बुमोचाब्द सिद्धमाजं पयः शिशोः ।
सामं सरक्तां ग्रहणीं पीतं हन्यात् त्रिरात्रतः ॥

वेलशुठ इन्द्रयव, मथा, शिमलु एठा मिलि २ टका, पानी १ सेर, दुग्ध २ पल, क्षीरावशेषः कर्त्तव्यः मातृकुमारयोरनुरूपं पेयं ।

तद्वदजाक्षीरसमो जम्बुत्वगुद्भवोरसः ।
पारासीययमानिकागजकणाशृङ्गी विडङ्गाह्वयं
एतत् सर्व्वभवं विलीढ़मपि तं क्षौद्रेण संमिश्रितम् ।
कासं नाशयते ज्वरं विजयते प्रौढ़ातिसारं जयेत्
छर्दिं मर्द्दयति क्रिमिन्तु नियतं कासञ्च सुखं नयेत् ॥

[ पारासीय यमानी ] पलाशबीज, यनी, हाति पिप्पली, काकटाशृङ्गी, विडङ्ग एषां सममागचूर्णं मधुना लेह्यम् ।

## सिन्दूराद्यं चूर्णम्

सिन्दूरानलकुष्ठमुस्त-मरिचैः शृङ्गीवटस्याग्रजैः
पाठालाङ्गलकाचगन्धवनिषा विल्वौषधि कट्फलैः ।
कुर्व्वी सर्जरको नवीजकुनटी विल्वे ······· यथा ।
माजाजाति युगैः सश्रेयशी चूर्णितैः········· ॥
लेहःक्षौद्रविनिर्मितो हरति वै पश्चाद् रुजां दुस्तरां ।
बालानामतिसारकासरुजि श्रेष्ठो ज्वरे दुस्तरे ॥

## बृहदागाज्जुं नाबलेहः

त्रिकटुवचयमानीगन्धपाषाणकुष्ठं
सलिलरजनीपुष्पं जीरकं कट्फलञ्च ।
शतकुसुमसुग्रन्थि याचकं काचकञ्च
वनज लशुनहिङ्गुमूलमेषाञ्च टङ्कं ॥
समनृपविविडङ्ग तुल्यभागं गृहीत्वा
दशविमसृण-घृष्टं वस्त्रपूतञ्च चूर्णम् ।
विपुलचपलयोगः कारितः तत्त्वविद्भिः
ग्रहपिहिततनूनां क्षीरपाणां शिशूनां ॥
शमयति जठरोत्थं जीर्णविष्टम्भकार्य्यं
ज्वरकसन वलासारो च कान्तिप्रदोषान् ।
ग्रहजनित समस्तातङ्क दोषान् विहाय
विपुलवलसुवर्णं स्थौल्य वह्निञ्च कुर्य्या-
च्चिरमपि शिशवः स्युः सर्व्वरोगैर्व्विमुक्ताः ॥

त्रिकटु, वच, यनी, अभ्र, कूर, सलिल, हरिद्रा पुष्प, जीरा, कालजीरा, कायफल, शुल्फा, पिप्पलीमूल, कुणलता, काचवन, ओल, हिङ्गु, दसत्र मूल, टङ्कन, सोमराजी वीज, विडङ्ग एषां समभाग चूर्णं मधुना लेहं कृत्वा, छागी दुग्धेन गोदुग्धेन वा माता लिहेत् ।

मूत्रग्रहे— कणोषणसिताक्षौद्र-सूक्ष्मैलासैन्धवैः कृतः ।
मूत्रग्रहे प्रयोक्तव्यः शिशूनां लेह उत्तमः ॥

## पुष्करादिः

पुष्करातिविषाशृङ्गी-मागधीधन्वयासकम् ।
चूर्णितं मधुनालीढं शिशूनां पञ्चकासनुत् ॥

पुष्करमूल, आतैच, काकटाशृङ्गी, पिप्पली, दुरालभा समभागचूर्णं मधुना लेह्यम् ।

## वांस्यादिः

वांसी कृष्णार्जुनं लाजा-शृङ्गीमरिच-माक्षिकैः ।
लेहः शिशोर्व्विघातव्यश्छर्द्दिंकासज्वरापहः ॥

वंशलोचन, पिप्पली, अर्ज्जुनछाल, लाजा, काकटाशृङ्गी, मरिच एषां समभाग चूर्णं मधुना लेह्यम् ।

## चित्रकादिः

चित्रकं शृङ्गवेरञ्च तथा दन्ती गवाक्ष्यपि ।
चूर्णं कृत्वा तु सर्व्वेषां सुखोष्णेनाम्बुना पिबेत् ॥
कासश्वासमथोहिक्कां कुमाराणां प्रनाशयेत् ।

चिता, आदा, सोन्दरपखाल, गोक्षुर एषां सममाग चूर्णं उष्णोदकेन पिबेत् । सविद्बन्धवातकफे ।

## द्राक्षादिः

द्राक्षायासाभयाकृष्णाचूर्णं सक्षौद्रसर्पिषा ।
लीढ़ं कासं निहन्त्याशु श्वासञ्च तमकं तथा ॥

द्राक्षा, कुर्णलता, हरीतकी, पिप्पली एषां सममागचूर्णं मधुना लेह्यं ।

## द्राक्षावहेलिका

द्राक्षादुरालभाकृष्णा-तुगा-कर्कटकाभया ।
एषाञ्च श्लक्ष्ण-चूर्णानि योजयेन्मधुसर्पिषा ॥
कासश्वासज्वरहरो विशेषात्तृषकं जयेत् ।
निर्म्मितो जीरकेनायं कुमाराणां सुखावहः ॥

द्राक्षा, कुर्णलता, पिप्पली, वंशलोचन, काकटाशृङ्गी, हरीतकी एषां सममागचूर्णं मधुघृताभ्यां लेह्यं ।

लाजकोलास्थिमज्जानां चूर्णं मधुसमायुतं ।
निद्रासुखमवाप्नोति क्षिप्रं हिक्कार्द्दितः शिशुः ॥

लाजा, बदरीगुठीर मज्जा मधुना भक्ष्यं ।

अपामार्गं विडङ्गानि पिप्पली तण्डुलानि च ।
तुगक्षीरिसमायुक्तः लेहश्छर्द्दि-निवारणः ॥
पिप्पली-सैन्धवञ्चैव मधुसर्पिः समायुतं ।
हिक्कां प्रशमयेत् क्षिप्रं छर्द्दिञ्चापि चिरोत्थितं ।
कोलास्थिमज्ज-सोदीच्य चन्दनं शर्करा मधु ।
भृष्टं सतोयसंयुक्तं पीतं छर्द्दिं नियच्छति ॥

बदरीगुटीर मज्जा, सुगन्धवाला, रक्तचन्दन, पिष्ट्वा चाउमध्ये किञ्चित् तप्तं कृत्वा कुम्भोत्का मृत्तिकां दग्ध्वा जले निर्व्वाप्य, तेन जलेन पूर्व्वमर्ज्जितमौषधं गोलयित्वा पाययेत् ।

दाडिमस्य च बीजानि वीजकं नागकेशरं ।
पिप्पल्याः शर्करा चौद्रं लेहस्तृष्णापहः शिशोः ॥
वचारिष्ट विडङ्गानि कुष्ठक्काथेन चालयेत् ।
कच्छु विचर्च्चिका पाण्डु-क्रिमिभिर्मुच्यते शिशुः ॥

वच, निम्ब, विडङ्ग, कूर मिलित ४ तोला पानी ८ सेर शेष २ सेर अनेन चालनं ।

भार्गीकषाय कल्काभ्यां कटुतैलं विपाचयेत् ।
बालानां ब्राह्मणीयष्टी रोगः शाम्यति साम्प्रतम् ॥

## बालरसः४

शानं सूतस्य शुद्धस्य गन्धकस्य च तत्समम् ।
सुवर्ण-माक्षिकस्यापि चार्द्धभागं विनिःक्षिपेत् ॥
ततः कज्जलिकां कृत्वा लोहपात्रे दृढ़े नवे ।
केशराजस्य भृङ्गस्य निर्गुण्ड्याः पत्रसम्भवम् ॥
स्वरसं काकमाच्याश्च ग्रीष्मसुन्दरकस्य च ।
सूर्य्यावर्त्तकशालिञ्च भेकपर्णी-रसं तथा ॥
श्वेतापराजितायाश्च मूलं दद्याद् विचक्षणः ।
देयं रसार्द्धभागेन चूर्णं मरिच सम्भवम् ॥
शुभे शिलामये पात्रे लोहदण्डेन मर्द्दयेत् ।
शुष्कामातप-संयोगाद् वटिकां कारयेद् भिषक् ॥
प्रमाणं सर्षपस्येव बालानां विनियोजयेत् ।
हन्ति त्रिदोषकञ्चैव ज्वरमाम-सुदारुणम् ॥
कासं पञ्चविधञ्चापि सर्व्वरोगं निहन्ति च ।
शिशूनां रोगनाशाय निर्म्मितोऽयं महारसः ॥

शुद्धरस ।। तोला, गन्धक ।। तोला, स्वर्णमाक्षिक ।० मङा, कज्जली कृत्वा लौहपात्रे स्थापयित्वा केशराज, भृङ्गराज, पचनीथार पान, लाटकचि, आगियाजला, भूतमूला, शालिञ्च, भेकपर्णी एवां पत्ररसः

४। बालरोगान्तकोरसः, रामेश्वररसो वा ।

वचा अपराजितार मूलरस, एतै रस-तुल्यैर्भावयित्वा, मरिचचूर्णेन सह पिष्ट्वा, सर्षप प्रमाणा वटिका कार्य्या।

महामुण्डितिकोदीच्य कार्यैः स्नानं ग्रहापहम्।

ग्रहग्रस्तं स्नापयेत्। —धूपः।

वतीयना छाल, कूर, हरिद्रा, चन्दन, एतैर्गात्रे लेपनं।

सर्पत्वक् चूर्ण-लशुन-सूर्य्यसर्षपारिष्ट-पल्लवाः।
धूपः शिशोर्ज्वरघ्नोऽयं अशेषग्रहनाशनः॥

## अथ नरसिंहमन्त्रः

ॐ नरसिंहाय नमः। अथ मातृकादौ दोषदुष्टौ।
नरसिंहस्य मन्त्रस्य सकृदुच्चरितो हरेत्।
डाकिनी ग्रहभूतादि दोषमौत्पातिकं तथा॥

ॐ नमो नरसिंहाय हिरण्यकशिपोर्व्वक्षस्थल-विदारणाय, त्रिभुवन-व्यापकाय, प्रतिमारक्षसाकिनी फलोन्मूलाय सायं स्तम्भोद्भवाय, समस्त दोषान् हन हन पच पच नाशय नाशय उच्चाटय उच्चाटय, ॐ ॐ फट् फट् ठः ठः एहि रुद्रे आज्ञापय स्वाहा। इति बालस्य कर्णे उच्चारयेत्। अयं नरसिंह-मन्त्रः शान्तये।

## गरुड़बलिः

मन्त्रश्चायं प्रयोक्तव्यस्तत्रादौ सर्व्वकामिकः।

ॐ नमो भगवते गरुड़ाय, त्र्यम्बकाय, सत्यं भव, सत्यं भव, स्तुत स्वाहा। ॐ कं टं बं लं वैनतेयाय नमः। ॐ ह्रीं ह्रां ह्रः।

बालदेह-प्रमाणेन पुष्पमाल्यन्तु सर्व्वतः।
प्रगृह्य मृत्तिका-भक्तं बलिर्देयस्तु स्वास्तिकः॥

भक्त परिपूर्णा, स्वल्प सरावं, बालदेह प्रमाण पुष्पमाला भक्त सराविकायाः चतुष्पार्श्वे दत्वा उपदेशात् मांसव्यञ्जन धूपदीपान् दत्वा उपरिलिखित मन्त्रं पठित्वा बाल समीपं नीत्वा, जल पुष्पं दत्वा विसर्ज्जयेत्। एवमपरमपि दिनत्रयं कर्त्तव्यं गरुड़बलिः। ॐ वारणाय नमः।

## इति वैद्यकसारोद्धारे बालरोगाधिकारः॥

अष्टादशः परिच्छेदः

# विषरोगचिकित्सोपदेशः

## ८३। परिशेषाद्विषरोगमाह

श्रीगुरुभ्यो नमः।

स्थावरं जङ्गमञ्चैव द्विविध-विषमुच्यते।
स्थावरं बत्सनाभादि सर्पादीनान्तु जङ्गमं॥

बरविष, वृक्षादिर विषके स्थावर बोले। साप, बाघ, वृशा, कुकुर, मोमोरा, मण्डूक, मूषिक मङ्गिमत्स्य इसबर विषके जङ्गम बोले।

मसूरं निम्बपत्राभ्यां खादेन्मेषगते रवौ।
अब्दमेकं न भीतिःस्याद्विषात् तस्य न संशयः॥

मसुर, निम्बपत्रेरे, वैशाखर विहुत बाटि खाव। एवचरले सर्पभय नाइ।

यः पिबति पुष्यादिवर्षे जलपिष्टसित-पुनर्णवामूलम्।
तत्सन्निधौ न(व)वर्षं वृश्चिक-भुजगाः प्रसर्पन्ति॥

पुष्या नक्षत्र बगा पुनर्णावामूल बाटि खाले एकबत्सरलै सर्प वृशा ओचरलै नाहे।

तण्डुलीयकमूलन्तु पीतं तण्डुलवारिणा।
तक्षकेणापि दष्टं हि निर्व्विषं कुरुते नरं॥

खुतरामूल तण्डुल जलेरे बटि खाव, सर्पविष नाश।

१। अरिष्टाबन्धनं मन्त्र प्रयोगश्च विषापहः।
दंशनं दंशकस्याहेः फलस्यमृदुनोऽपि वा॥
प्रसन्नदोषं प्रकृतिस्यधातु मन्नामिकामं सममूत्रविट्कम्।
प्रसन्न वर्णेन्द्रिय चित्तचेष्टं वैद्योऽवगच्छेदविषं मनुष्यम्॥ —आयुर्व्वेदसंग्रहे देवेन्द्रः।
सर्पदष्ट प्रदेशे तु स्वयमेव विचक्षणः।
मूत्रयेत् तत्क्षणादेव निर्व्विषत्वमवाप्नुयात्॥ —इति शिवदासः।

शिरीषपुष्प-स्वरसे, भावितं मरिचं सितम्।
सप्ताहं सर्पदष्टानां नस्य पानाञ्जने हितम्॥

शिरीष फुलेर रसत, मजिना गुटीर चूर्ण ७ दिन भावित बड़ि करिब, खाव, नाके उजाव, २ चक्षुत अञ्जन दिब तेबे सर्पविष निर्विष हय।

नक्तमालफलं व्योषं बिल्वमूल [ विश्वमूल ] निशाद्वयं।
सोरसं पुष्पमाज्र्जम्वा [ माज्र्यं वा ] मूत्रपिष्टं तयाञ्जनं॥

सोनाफगुटी, त्रिकटु, बिल्वमूल, हरिद्राद्वय, तुलसीफुल सर्व्वान् पिष्ट्वा चक्षुर अञ्जन।

वृश्चिक विषे—अजाक्षीरेण सम्पिष्ठ शिरीषफलमिश्रित।
उपकुल्या विषं हन्ति वृश्चिकस्य प्रलेपतः॥

शिरीषगुटी, पिप्पली, छागोक्षीरे वटि लेप, वृश्चिकविषनाश हय।

मनःशिलाकुष्ठ-करञ्जवीज शिरीषकाश्मीर-भवैः समांशैः।
विनिर्म्मितास्ये विधृता च लिप्ता संहारिणी वृश्चिक वैकृतस्य॥

मन:शिला, कूर, लेटागुटी, शिरीषवीज, कुङ्कुम एतानि पिष्ट्वा मुखे धार्य्या, गात्रे घर्षयां, वृश्चिक विषहरणम।

सारमेयविषे— काकोडुम्बरिकामूलं धुस्तूरस्य फलानि च।
पीतं तण्डुलतोयेन सारमेयविषापहः॥

कोवाचुटिलता मूल, धुतूरागुटी, तण्डुलतोयेन पिष्ट्वा पेयं। कुक्कुरविषं हरति।

पिचुमर्द्दशमीवटकल्कयुतं
क्वथितं जलमाशु विलेपतः।
नखदन्तविषाणि हन्ति·······
विषाण्यखिलान्यपि सत्यमिदं॥

निम्ब, समिध, वट अलेरे बाटि गात घहिब। निर्व्विष हय।

स्थावरजङ्गमे— मरिचं निम्बपत्राणि सैन्धवं मधुसर्पिषी।
घ्नन्ति पीतानि वेगेन विषं स्थावरजङ्गमम्॥

मरिच, निम्बपत्र सैन्धव, एषां पिष्ट्वा मधुसर्पिर्भ्यां पेयं।

भ्रमरविषे— नागरं गृहकपोतपूरीषं बीजपूरकरसं हरितालं।
सैन्धवञ्च विनिहन्ति विलेपादाशु भ्रमरजनितविषमेतत् ॥

आदा, पारावत विष्ठा, छोलेङ्गरस, हरिताल, सैन्धव एतानि पिष्ट्वा लेपः। भ्रमरविषं हरति।

मूषिकविषे— आगारधूम-मञ्जिष्ठा-रजनी-लवणोत्तमैः।
लेपोजयत्याशु विषं कोषातक्यथवा सिता ॥

आलान्धु, मजाठि, हालधि, सैन्धव एतानि पिष्ट्वा लेपः। अथवा कोषातकी मूल चिनिदि पिष्ट्वा लेपः। मूषिक विषं हरति।

मण्डूकविषे— शिरीषबीजैः कुलिशद्रुमस्य
क्षीरेण पिष्टैः कृतलेपनानां।
विषं विनाशं व्रजति क्षणेन
मण्डूकदंश प्रभवं नराणां ॥

शिरीष गुटी सिजु आठारे लेपः। मण्डूकविषनाश.।

सर्व्वविषे—सितामधुयुतं चूर्णं ताम्रस्य कनकस्य वा।
लेहः प्रशमयत्याशु सर्व्वं संयोगजं विषं ॥

ताम्रचूर्णं वा, सुवर्णचूर्णं वा, चिनि मधु दत्वा लेहयेत्। नानाविध विष गुचे।

शृङ्गिमत्स्यविषे—कृष्णवेत्रस्य निःक्काथ कल्को घृतविमिश्रितः।
शृङ्गिमत्स्यविषं हन्ति वह्निपत्रेण धूपनं ॥

कुचिला क्काथेन घृतेन मिश्रितः लेप, अथवा पिष्ट्वास्य लेपः। शृङ्गिमत्स्य विष गुचे।

डाश-मश-मधुमक्षिकाविषे—
गोमूत्रेण वरालेपः कृष्णवल्मीकमृत्कृतः।
पिपीलिकाभिर्दष्टानां मक्षिकामशकैस्तथा ॥

त्रिफला गोमूत्रेण लेपः। अथवा कलिया उइमाटी लेपः।

इति वैद्यकसारोद्धारे विषाधिकारः ॥

ऊनविंशः परिच्छेदः

# सर्वभेषजद्रव्यमारण-शोधनोपदेशः

## ८४। अथ स्वर्णाद्यष्टधातूनां शोधनं मारणम् [1]

सौख्यं वीर्य्यं बलं हन्ति नानारोगं करोति च।
अशुद्धममृतं स्वर्णं तस्मात् संशोध्य मारयेत्॥

सुख, वीर्य्य, बल नाश करे, अनेक रोग उत्पन्न करे। सुवर्ण अशोधित होने से इन सब नष्ट करे।

### अथ सुवर्णशोधनम्

वल्मीकमृत्तिकाधूमं गैरिकं चेष्टका पटु।
इत्येता मृत्तिकाः पञ्च जम्बीरैरारणालकैः॥
पिष्ट्वा लेप्यं स्वर्णपत्रं पुटेन तु विशुद्ध्यति।
धारयेत् स्वर्णपत्री च त्रिदिनं पञ्चमृत्तिका॥

वल्मीकमृत्तिका, आलान्धु, गेरुमाटि, इष्टक, सैन्धव सममागैः जाम्बिररसैः काञ्जिकैः पिष्ट्वा सुवर्णपत्र लिप्त्वा खोलके निरुद्ध्य गजपुटे [ लघुपुटे ] पुटमेकं दद्यात्। इति स्वर्णशोधनं।

### अथ स्वर्णमारणम्

माक्षिकं नागचूर्णञ्च पिष्टमर्करसेन च
हेमपत्रं पुटेनैव म्रियते क्षणमात्रतः॥

१। तथा च द्रव्यगुणे—स्वर्णं रौप्यञ्च ताम्रञ्च वङ्गं यसदमेव च
सीसलौहञ्च सप्तैते धातवो गिरिसम्भवाः॥
सप्तोपधातवः स्वर्णमाक्षिक-तारमाक्षिकः।
तुत्थं कांस्यञ्च रीतिश्च सिन्दूरञ्च शिलाजतु॥
रसेन्द्रसारसंग्रहे—हेमादिलौहकिट्टान्तं शोधनं मारणं शृणु।
तैले तक्रे गवां मूत्रे काञ्जिकेऽथ कुलत्थजे
तप्ततप्तानि सिञ्चेत तत्तद्द्रव्ये च सप्तधा।
एवं स्वर्णादिलौहानि शुद्धिमायान्त्यसंशयः॥

शोधित स्वर्णमाक्षिक, सितभस्म [ सीसाचूर्ण ] अर्कदुग्धेन पिष्ट्वा शोधित स्वर्णपत्रं लिप्त्वा पुटेत् गजपुटे ।

अथान्यमतम्—सूतं नागं स्नुहीक्षीरैरथवाम्लेन केनचित् ।
पिष्ट्वा लेप्यं स्वर्णपत्रं रुद्ध्वा लघुपुटे [गजपुटे] पचेत् ॥
आदाय पेषयेदम्ले सूतांश' गन्धकांशकं ।
रुद्ध्वा गजपुटे पाच्यं पूर्व्वनाग-सुसंयुतम् ॥
एवं पुनः पुनः पाच्यमष्टधा म्रियते ध्रुवम् ॥

शुद्ध स्वर्णपत्र, सीसकभस्म, सिजुक्षीरेण, जम्बीर रसेन पीष्ट्वा रात्रौ गजपुटं दद्यात् । प्रात— रुद्धृत्य स्वर्णपत्रं शुद्धरसं गन्धकञ्च दत्वा पुनर्ज्जम्बीर रसेन, सीसकचूर्णेन सह सर्व्वं खल्वयित्वा, रात्रौ रात्रौ गजपुटं दद्यात् एवमष्टधा ।

स्वर्णगुणाः२—मधुरं कटुपाकञ्च सुवर्णं वीर्य्यशीतलं ।
सर्व्वदोषप्रशमनं विषघ्नं गरनाशनं ॥
अलक्ष्मीकलिपापाना प्रयोगस्तस्य नाशनः ।
आयुर्म्मेधास्मृतिकरः पुष्टिकान्तिविवर्द्धनः ॥
सर्व्वौषधि प्रयोगैर्ये व्याधयो न निवर्त्तिताः ।
कर्म्मभिः पञ्चभिश्चैव सुवर्णन्तेषु योजयेत् ॥

सकलो औषधर क्रियात व्याधि नगुचे यदि, पञ्चकर्म्मर मल, रेचन, शोणितस्राव, उपवास, बस्ति, इसबत नगुचे यदि तेवेसे सुवर्ण खाव ।

जित्वा व्याधिगणान् सर्व्वान् साध्यान् स्तम्भनकादिकान् ।
वपुर्व्वर्णबलोपेतः शतं जीवत्यनामयः ॥

सुवर्ण खाले सकलो व्याधि गुचाइ, बल शरीर कान्ति हइ । आयुष पर्य्यन्ते व्याधि नहे ।

२ । अथ सुवर्णलक्षणमाह रसेन्द्रे गोपाल' ।—
दाहेऽतिरक्तमथ यच्च सितं चिदायां
काश्मीर कान्ति च विभाति निकाषपट्टेः ।
स्निग्धञ्च गौरवमुपैति च यत्तुलायां
मानीत देव कनकं मृदुरक्तपीतम् ।।

सुवर्णस्यानुपानं— मध्वामलकचूर्णन्तु सुवर्णञ्चेति तत्त्रयं ।
प्राश्य व्याधि गृहीतोऽपि मुच्यते प्राणसंशयात् ॥

आमलकी चूर्ण ४ रति, सुवर्ण २ रति, मधु ३२ रति मर्द्दयित्वा पेयम् ।

**इति स्वर्णजारणं समाप्तम् ।**

## अथ रौप्यशोधनमारणम्

आयुः शुक्रं बलं हन्ति रोगसङ्घं करोति च ।
अशुद्धञ्चामृतं तारं शुद्धं मार्य्यमतो बुधैः३ ॥

रौप्यशोधनम्—नागेन टङ्कनेनैव द्रावितं शुद्धिमाप्नुयात् ।

रौप्यं किञ्चित् नागटङ्कनाभ्यां गलयेत पश्चात क्षाराम्लैः क्षालयेत, तदा शुद्धिर्भवति ।

रौप्यमारणमाह—तारपत्रं चतुर्भागं भागैकं स्वर्णमाक्षिकं ।
सम्मर्द्द्य जम्बीररसैस्तारपत्राणि लेपयेत् ॥
शोषयित्वा तु मूषायां त्रिंशद्वुपलकैः पुटेत् ।
चतुर्द्दशपुटेनैव निरुत्थं जायते मृतं ॥

रूपर पता ४ माग, शोधित स्वर्णमाक्षिक १ माग, जम्बीर रसेन मर्द्दयित्वा रौप्यपत्राणि लिप्ता रौद्रे शुष्कयेत् । शरावे धृत्वा मृद् वस्त्राभ्यां रुद्ध्वा ३० त्रिंशत खण्डे करिषाग्नौ रात्रौ लघुपुटं दद्यात् एवं १४ दत्वा ।

अथान्यमतं—माक्षिकं गन्धकञ्चैव अर्कक्षीरेण मर्द्दयेत् ।
तारपत्र-पुटेनैव म्रियते नात्र संशयः ॥

अर्कक्षीरेण माक्षिकं, शुद्धगन्धकञ्च, रौप्यसमं सम्मर्द्द्य रौप्यं मृदुपत्रं लिप्त्वा लघुपुटं दद्यात् । सुवर्णवच्च रजतं किञ्चिद्धीनगुणैर्भवेत् ।

**इति रौप्यमारणम् ।**

३ । अथ श्रेष्ठरजतलक्षणम् रसेन्द्रे—
दग्धोत्तीर्णं सुशीतं यन्निर्म्मलं कुन्दसन्निभं ।
गुरु स्निग्धं कुमारञ्च तारमुत्तममुच्यते ॥

## अथ ताम्रशोधनमारणम्

अशुद्धताम्रमायुघ्नं बलघ्नं कान्तिनाशनम् ।
वान्तिमूर्च्छाभ्रमं कुर्य्यान्नानारुक् शूलकुष्ठकृत् ४ ॥

आयुष नष्ट, बल नष्ट, कान्ति नष्ट, वान्ति मूर्च्छा, अनेक शूल, कुष्ठ इसब करे अशुद्ध ताम्र। ।

## अथ ताम्रशोधनं

स्नुह्यर्कक्षीरलवण-काञ्जिकैस्ताम्रपत्रकं ।
पिष्ट्वा पत्राणि निर्गुण्डी रसैः सिञ्चेत् पुनः पुनः ॥
वारद्वादशतः शुद्धं लेपात्ताम्रञ्च सेचनात् ।।

सिजुक्षीर, सैन्धव, कांजि एतानि पिष्ट्वा ताम्रपत्रे लिप्त्वा तप्तं कृत्वा, निर्गुण्डी रसै सिञ्चेत पुनः पुनः, द्वादशवारान् ।

गोमूत्रेण पचेत्ताम्रपत्रं यामं दृढाग्निना ।
शुद्ध्यते नात्र सन्देहो मारणञ्चाप्यथोच्यते ॥

ताम्रपत्र, गोमूत्रत एकप्रहर सिद्ध दृढाग्निना ।

अम्ले स्थितं दिनं ताम्रं कृत्वा तप्तं प्रयत्नतः ।
त्रीन् वारान् गोजले मग्नं भवेल्लोहविवर्जितम् ।

ताम्रपत्र, सोनेम्लरसत १ दिन थव, तारपरे आनि, तप्त करि गोमूत्रत ३ बार जोवराव ।

ततः सलवणे तक्रे क्षालितं ताम्रं शुद्ध्यति ।

तार पाचे लवण मिश्रित तक्रे क्षालन करिव । इति ताम्र. शुद्ध्यति ।

४ । न विषं विषमित्याहुस्ताम्रञ्च विषमुच्यते ।
एकदोषो विषेत्वष्टौ दोषास्ताम्रे प्रकीर्त्तिताः ॥
भ्रमोमूर्च्छाविदाहश्च उत्क्लेद शोषवान्तयः ।
अरुचिश्चित्तसन्ताप एते दोषा विषोपमाः ॥
तस्माद् विशुद्ध ताम्रं हि ग्राह्यं रोगोपशान्तये ॥

## अथ ताम्रमारणमाह५

गन्धेन ताम्रतुल्येन चाम्लपिष्टेन लेपयेत् ।
कण्टवेधीकृतताम्रं मर्द्दयित्वा पुटे पचेत् ॥
उद्धृत्य चूर्णयेत्तस्मिन् पुनश्च गन्धकं क्षिपेत् ।
जम्बीरैरारणालैर्व्वा मृगदुर्व्वोत्थितैः द्रवैः ॥
पिष्ट्वा पिष्ट्वा पचेत्ताम्रं गन्धकञ्च पुटे न्यसेत् ।
मातुलुङ्गरसैः पिष्ट्वा पुटमेकं प्रदापयेत् ॥
अनेनैव विधानेन ताम्रञ्च म्रियते ध्रुवम् ॥

कण्टकैरे वेध्य शुद्ध ताम्रपत्र १ भाग, गन्धक १ भाग, जम्बीर रसेन पिष्ट्वा, लिप्त्वा पुटं दद्यात् ।

तत् उद्धृत्य ताम्र १ भागर नियमे गन्धक दि जम्बीराम्लेन पिष्ट्वा चतुर्द्दश पुटं दद्यात् । तत् उद्धृत्य श्वेत दूर्व्वारसेन गन्धकेन पुटमेकम ।

तथा अन्यमतम्— सूतमेकं द्विधागन्धं यामं कृत्वा तु कज्जलीं ।
द्वयोस्तुल्यं ताम्रपत्रं लिप्त्वा स्थाल्यां निधापयेत् ॥
सम्यक् शूरणजैः सार्द्धं पार्श्वे भस्म निधापयेत् ।
चतुर्य्यामं पचेच्चूल्यां म्रियते नात्र संशयः ॥

शुद्ध रस ५ तोला, शुद्ध गन्धक १० तोला, शुद्ध ताम्र १५ तोला, कज्जलीमम्लेन पिष्ट्वा, शुष्कयित्वा शरावे धृत्वा रुद्ध्वा स्थाल्यां प्रपूर्य्य ताम्रं पातयित्वा, तदुपरि भस्म किञ्चित पातयित्वा स्थालीं शरावेन निरुद्धय यामचतुष्टयं पचेत् ।

ताम्रस्यामृतीकरणमाह— अथवा मारितं ताम्रमम्लेनैकेन मर्द्दनम् ।
तद्गोलं शूरणस्थञ्च रुद्ध्वा सर्व्वत्र लेपयेत् ॥

---

५ । अथ स्वर्णादि लौहान्तानां धातूनां साधारणो मारणोपायः—
शिलागन्धार्कदुग्धाक्ताः स्वर्णाद्याः सर्व्वधातवः ।
म्रियन्ते द्वादशपुटैः सत्यं गुरुवचो यथा ॥

अथ जारित धातूनां वर्णानि—
स्वर्णं चम्पकवर्णाभं कृष्णत्वं तारताम्रयोः ।
कांस्यं धूसरवर्णं स्यान्नागः पारावतः प्रभः ॥
वङ्गं शुभ्रत्वमायाति तीक्ष्णं जम्बुफलोपमम ।
अभ्रकं चेष्टिकाभं स्याद् धातूनां वर्णनिर्णयः ॥
—आयुर्वेदसंग्रहे देवेन्द्रः ।

शुष्कं गजपुटे पाच्यं सर्व्वरोगहरं भवेत् ।
वान्तिं भ्रान्तिं विरेकञ्च न करोति कदाचन ॥

मारितताम्रं जम्बीरेण मर्दयित्वा गोलकं कृत्वा वनशीलस्याभ्यन्तरे संस्थाप्य मृत्तिकया लिप्त्वा, शोष्य पुटं दद्यात् ।

ताम्रगुणमाह— ताम्रं तीक्ष्णोष्णमधुरं कषायं शीतलं रसं ।
कफपित्तक्षयं पाण्डुकुष्ठघ्नञ्च रसायनं ॥
परिणामशूलर्शांसि मन्दाग्निञ्च विनाशयेत् सुगमं ॥

इति ताम्रमारणम् ॥

## अथ सीसकशोधनमारणम्

अशुद्धं सीसकं वातकफपाण्डूदरज्वरान् ।
प्रमेहकुष्ठगुल्मानि कुर्य्याद् वज्रं तथैव च ॥ सुगमम् ।
निगण्डी-मूलचूर्णानि अर्कदुग्धेन लेपयेत् [ पेषयेत् ] ।
नागं पत्रीकृतं लिप्त्वा शोषयित्वा पुनस्तथा ॥
लेपयेत् शोषयेच्चापि सप्तवारान विशुद्धये ॥

पचतीयामूल चूर्ण अर्कदुग्धेरे मिलाइ, सीसर पातत लिपि रौद्रत शुकाव सप्तवार । इति नाग शोधनं ।

अश्वत्थचिञ्चात्वग्भस्म नागस्य चतुरंशतः ।
क्षिप्त्वा चूल्यां पचेत् पात्रे लौहदण्डेन चालयन् ॥
यावद् भस्म भवेत् तच्च भस्मतुल्या मनःशिला ।
जम्बीरैरारणालैर्व्वा पिष्ट्वा रुद्ध्वा पुटे पचेत् ॥
स्वाङ्गशीतं पुनः पिष्ट्वा विंशत्यंश शिलाम्लकैः ।
एवं षड्भिः पुटैः पक्वो नागः स्यात्तु निरुत्थकः ॥

सीस १ भाग, अश्वत्थछाल, तेतेलो छालर क्षार ४ भाग, खोलके दत्वा मर्दयित्वा, लौहदण्डेन मर्दयेत् । मन्दाग्निना पचेत्; भस्मीभूते तद् भस्मतुल्यां मनःशिलां जम्बीरेण पिष्ट्वा सर्व्वं खल्वयित्वा, अन्धमूषायां कृत्वा गजपुटे दद्यात् । प्रातः शीतलमाकृष्य, सीस २० भागर एकभाग मनःशिला जम्बीरेण पिष्ट्वा, तेनैव पुटेत्, एवमपर पञ्चसप्तवारानपि ।

अथान्यमतम्— लौहपात्रे द्रुतं नागं यवक्षारेण मर्द्दयेत् ।
प्रपुटेत् शिलया तोयैर्व्वासापामार्ग-पत्रजैः ॥

लौहपात्रत शुद्ध सीस द्रव करि, समान यवक्षार दि लौहदण्डेरे मर्द्दिव, पश्चात् मनःशिला, वासक अपामार्ग रसेरे मर्द्दि गजपुट दिव ।

सतिक्तमधुरोनागो मृतो भवति मेहहा ।
आयुःकान्तिबलं वृद्धिं कुरुते सेवनात् सदा ॥ सुगमम् ।

इति सीसकजारणम् ।

## अथ रङ्गशोधनमारणम्

अशुद्धं कुरुते रङ्गं कुष्ठं गुल्मं भ्रमं ज्वरं ।
रक्तपित्तकरञ्चैव कामलापाण्डुरोगकृत् ॥

राङ्ग[वङ्ग]शोधनं— नागवत् शोधयेद् वङ्गं तद्ददश्वत्थचिञ्चयोः ।
तद्भस्महरितालञ्च तुल्यमम्लेन मर्द्दयेत् ॥
पलाशोत्थ द्रवेनैव गोलयित्वान्धयेत् पुटे ।
उद्धृत्य दशमांशेन तालेन सह मर्द्दयेत् ॥
पूर्व्वद्रवैः सहालोड्य रुद्ध्वा गजपुटे पचेत् ।
एकविंशपुटे पक्वो मृतो भवति रोगहा ॥

वङ्गं सीसवत् शुद्धम् ।

आहत छावर मस्म, तेन्तेलीर भष्म खोलके वङ्गं गोलयित्वा भस्म किञ्चिद्दत्वा दण्डेन मर्द्दयेत्, तद् भस्मतुल्यं हरितालं अम्लेन पलाशरसेन वा पिष्ट्वा पुटे पचेत् । तत् उद्धृत्य राङ्ग १० मागर १ माग हरितालं दत्वा, अम्लेन पलाश रसेन वा पिष्टा पुटेत् ।

सतिक्त-लवणं वङ्गं पाण्डुनुत् क्रिमिकुष्ठजित् ।
लेखनं पित्तकृत् किञ्चित् सर्व्वमेहामयापहा ॥

इति वङ्गमारणम् ।

## अथ पित्तलकांस्यशोधनमारणम्

शोधनं ताम्रवत् । ताम्रतुल्य शोधनं ।

मारणमाह— अर्कक्षीरेण संलिप्तो गन्धस्तेन प्रलेपयेत् ।
समेन कांस्यपत्राणि शुद्धान्यम्लद्रव्यैर्मुहुः ॥

तवो मूषापुटे धृत्वा पुटेद् गजपुटेन तु ।
एवं पुटद्वयेनैव भस्माभं भवति ध्रुवम् ॥
आरवत् कांस्यमप्येवं भस्मतां याति निश्चितं ।

शुद्ध पित्तल, कांस्यपत्रं, अर्कक्षीर, गन्धकं पिष्ट्वा लिप्त्वा ( जम्बीर रसेन ) शरावे धृत्वा रुद्धा, गजपुटे पुटेत् । बारम्बारं ।

अथान्यमतम्— निम्बरस-शिलागन्धलेपिता पुटिता द्विधा ।
रीतिका याति भस्मत्वं कांस्यञ्चापि तथा मृतम् ॥

मनःशिला गन्धकद्वयोः पिष्ट्वा, पित्तल-कांस्यपत्रयोः लिप्त्वा रौद्रे शुष्कं कृत्वा, शरावे धृत्वा गजपुट दद्यात् पुनः पुनः ।

इति पित्तलकांस्यमारणम् ।

## अथ खर्पर( दस्ता )शोधनमारणम्

दोलायन्त्रेऽपि गोमूत्रैः सप्ताहं रसकं पचेत् ।
तस्य शुद्धिर्भवेदेवं शुद्धं योगेषु योजयेत् ॥

सेतु, आउटि बोवाइ, पानीत वा गोमूत्रत पेलाइ चूर्णाकृति करि, टोपोला वान्धि दोलायन्त्र करि, सप्तदिन सिजाव । तबे शुद्धि हइ ।

अथास्य मारणम् —खर्परं लोहपात्रस्थं चूल्यां दत्वा विपाचयेत् ।
गलिते सैन्धवचूर्णं दत्वा दत्वा च मर्द्दयेत् ॥
भूयः पलाशदण्डेन यावद् भस्मीभवेत्तु तत् ॥

शुद्ध खर्परचूर्ण, खोलकमध्ये, सैन्धवचूर्ण दत्वा आर्द्र पलाशदण्डेन मर्द्दयेत् । यावद् भस्मी भवति, भूकदम्ब रसमपि लवणेन सह दद्यात्; पश्चात् पुटेत् ।

इति सेतुजारणम् ।

## अथ लौहशोधनमारणम्

शोधनन्तु प्रवक्ष्यामि शृणु त्वं परमेश्वरि ।
पत्तलीकृतपत्राणि लौहस्याग्नौ प्रतापयेत् ॥

तैले तक्रे च गोमूत्रे काञ्जिकेऽथ कुलत्थजे ।
त्रिफलाया रसे देवि रम्भाफलरसे तथा ॥
तप्ततप्तानि क्षिप्तानि शुद्धिमायाति निश्चितं ॥

शुद्ध तीक्ष्ण कान्त लौहादीनां सूक्ष्म पत्रं कृत्वा अग्नौ तापं दत्वा एषां रसे क्षिपेत् । तिलतैलत ७ बार, तक्रत ७ बार, गोमूत्रत ७ बार, काञ्जित ७ बार कुलत्थक्वाथत ७ बार, त्रिफला रसत ७ बार, कदली-मूलर रसत ७ बार एवं लौहशुद्धिः ।

मारणमाह६— द्वादशांशेन दरदं तीक्ष्णचूर्णस्य मेलयेत् ।
कन्यानीरेण सम्मर्द्दय यामयुग्मं ततः पुटेत् ॥
पुटेदेवं लौहचूर्णं सप्तधा मारणं भवेत् ॥

शोधित लौहार चूर्ण १२ भाग, हिङ्गुल १ भाग कन्यारसेन मर्द्दित्वा शरावे दत्वा पुटेत् ।

त्रिफलाक्वाथसंयुक्तं मर्द्दितं पुटयेदल ।

तद्भस्म आदाय, त्रिफलाक्वाथेन मर्द्दित्वा पुटेत् ।

अन्यच्च— गन्धकं तुत्थकं लौहचूर्णञ्चापि विमर्द्दयेत् ।
दिनैकं कन्यकाद्रावैरुद्धा गजपुटे पचेत् ॥
यद्येवं स्यान्निरुत्थोयं यावद् व्याधिहरं भवेत् ।
इत्येवं सर्व्वलौहानां कर्त्तव्याथ निरुत्थये ॥

गन्धक १ भाग, तुतिया १ भाग, लौह १ भाग कन्यारसे मर्द्दि लौहत लिपिदि गजपुटं दद्यात् ।

## लौहमारणकगणमाह

हस्तिकर्णञ्च त्रिफला-रम्भामूल-रसन्तथा ।
काकमाची मेघतादं आद्रकं भृङ्गराजकं ॥

६। अथ लौहस्य पुटविधिः ।

शतादिस्तु सहस्रान्तः पुटोदेयो रसायने ।
दशादि शत पर्य्यन्तो गदे पुट विधिर्म्मतः ॥
वाजी कर्म्मणि विशेषः पञ्च पञ्च शताधिकः ।
पुटाद्दोषविनाशः स्यात् पुटादेव गुणोदयः ॥
म्रियते च पुटाल्लौहं पुटां रतस्मात् समाचरेत् ।
यथा यथा प्रदीयन्ते पुटाः सुबहवो यदि
तथा तथा विवर्द्धन्ते गुणाः शत सहस्रश. ॥ —आयुर्व्वेदसंग्रहे देवेन्द्रः ।

अभीरु केशराजश्च शूरणं निर्गुण्डी गुडूचीनां ।
तुलसी वह्नी शोथघ्नी खण्डकर्ण-दारिमफल-पत्रकं ॥
चित्रकं दन्ती-पिप्पली-त्रिवृच्च वृद्धदारकं ।
अश्वगन्धा बृहतीश्च मुस्तकं ग्रन्थि हिङ्गुलं ॥
वासाचव्यदशमूलं निम्बोरुबूक-धुस्तूरकं ।
वेतसाम्लरसेनापि इमानि च निगद्यते ॥
प्रत्येकन्तु पुटद्वयं मर्द्दयेच्च दिने दिने ।
तुषाम्बुमर्द्दितं देवि चाङ्गेरी त्रिफलारसे ॥
लौहार्द्धं त्रिफलाक्काथं मर्द्धयेत्तु विचक्षणः ।
कुमार्य्याः स्वरसं दत्वा शुष्कन्तु पुटितं सदा ॥
पञ्चामृतं पुटे देयं पञ्चवारमितीरितम् ॥

हस्तिकर्णा, पलाश, त्रिफला, पुराकल, आलुर रस, कोवाचुटिमूल, मेघनाद, आदा, भृङ्गराज, शतमूल, केशराज, वनओल, पचतोया, आमरिलता, तुलसो, मल्ला, पुनर्णावा, खण्डकर्णा, दाड़िमफल पत्र, चित्रक, सोन्दर पखाल पिप्पलो, तेलियाधूना, ढुकरीयालता, अश्वगन्धा, बृहती, मथा, पिप्पलीठारि, हिङ्गुल, वाहक, चविक, दशमूल, १० निम्ब, एरण्डमूल, धुस्तूर, थैकर एषां प्रत्येकं पुटद्वयं, पुनः काञ्जिकेन मर्द्दित्वा पुटमेकं, चाङ्गेरी रसे पुटमेकं पुनः त्रिफलारसेन पुटमेकं । लौहजारण १ भाग त्रिफला क्राथेन मर्द्दयित्वा पुटेत् । एवं कायमार्य्या स्वरसे मर्द्दित्वा शुष्कं कृत्वा पुटेत् । पञ्चामृत पुट ५ वार अमृतीकरणं भवेत् ।

दधि-दुग्ध-घृतञ्चैव गोमयं तस्य मूत्रकं ।
पञ्चामृतञ्च इत्येवं कथितं भैरवेण हि ॥

दधि, दुग्ध, घृत, गोमय, गोमूत्र, एइ पञ्चामृत ।

इति लौहमारणकगणम् ।

## अथ लौहकिट्ट ( मण्डूर ) शोधनमारणम्

तुषाम्बु कुलत्थे देवि शोधयेद् द्रवे सप्तधा ।
रम्भामूलरसे देवि ! शोधयेत्तु चतुर्द्दशं ।
क्षालितमुष्णतोयेन चूर्णं लौहोपमं पुटं ॥

१०० शत बछरीया लौहकिट्ट ( मण्डूर ) चूर्ण तप्तकरि काञ्जित पेलाव ७ वार, कुलत्थ क्वाथत ७ वार कलार आलुर रसत १४ वार तप्त जलेरे मर्द्दि पुट दिब ।

इति लौहकिट्ट ( मण्डूर ) शोधनमारणम् ।

पञ्चामृत पुटानि सर्व्वभ्रे द्युः ।

## अथाभ्रकशोधन-मारणम्

अभ्रके गिरिजावीजं सपनं गगनाह्वयं ।

अभ्रक, गिरिजावीज, सपन, गगन, वज्र एतानि पञ्चनामानि ।

वह्नौ क्षिप्ते च नोशब्दं तद्वज्रं ग्राह्यते वुधैः ।

अग्निताप करिले शब्द नकरे यदि ताके वज्राभ्र वोले ; कृष्णाभ्रओ वोले, ताके ग्रहण करिव मारणार्थे ।

तस्माद् वज्राभ्रकं ग्राह्यं व्याधिवार्द्धक्य मृत्युजित् ।

अतएव वज्राभ्रकं ग्राह्यं जरामृत्यु नाश करे ।

अशुद्धाभ्रं निहन्त्याशु वर्द्धयेन्मारुतं कफं ।

अशुद्ध अभ्रे आयुष हरे, वायु जन्माइ, कफ करे, मन्दाग्नि करे, जरा करे ।

अभ्रशोधनम्—कृष्णाभ्रकं धमेद्वह्नौ ततः क्षीरे विनिःक्षिपेत् ।
भिन्न पत्रञ्च तत् कृत्वा तण्डुलीयाम्लकैर्द्रवैः ॥
भावयेदष्ट यामन्तदेवं शुद्ध्यति चाभ्रकं ॥

कृष्णवर्ण अभ्र अग्नित मातीयेरे तापकरि गोक्षीरत पेलाव ३ वार, पानी खुतरार रसत ३ वार चाङ्गेरी रसत ३ वार एनेकै ८ प्रहर भावना दिव, अभ्रशोधन हइ ।

मतान्तरं—त्रिफला-क्वाथ गोमूत्र-क्षीरकाञ्जिक-सेचितं ।
भस्त्राग्नौ सप्तधा व्योम तप्तं तप्तं विशुद्ध्यति ॥

कृष्णाभ्र, अग्नित मातीरे ताप करि पेलाव त्रिफला क्वाथत ७ वार, गोमूत्रत ७ वार, गोक्षीरत ७ वार काञ्जित ७ वार, एवं शुद्ध्यति ।

धान्याभ्रमाह—पादांशं शालिसंयुक्तमभ्रकं कम्बलोदरे ।
त्रिरात्रं स्थापयेन्नीरे तत् क्लिन्नं मर्द्दयेद् दृढं ॥
कम्बलाद् गलितं श्लक्ष्णं वालुकारहितञ्च यत् ।
तद्धान्यभ्रमिति प्रोक्तमभ्रमारण-सिद्धये ॥
[ तद्धान्यभ्रमिति ख्यातं सद्भिर्देहस्य सिद्धये ] ॥

अभ्र ४ भाग, शालिधान्य १ भाग, कम्बले पोट्टलं वद्ध्वा जले त्रिरात्रं स्थाप्यं, पश्चात् पाणिभ्यं मर्द्दयेत । कमलिर परा सरकि योवा अभ्रचूर्ण शुकाइ लव, वालुका मलित रव । एवं धान्याभ्र ।

अतोऽभ्रमारणम्—धान्याभ्रकस्य भागैकं द्वौ भागौ टङ्कनस्य च।
पिष्ट्वा तदन्ध मूषायां रुद्ध्वा तीव्राग्निना पचेत्॥
स्वभाव शीतलं चूर्णं सर्व्वरोगेषु [ योगेषु ] योजयेत्॥

धान्याभ्र १ भाग, सुवगा २ भाग, पिष्ट्वा शरावे रुद्ध्वा गजपुटे पुटेत्। सर्व्वरोगत दिव।

मतान्तरं—धान्याभ्रकं दृढं मर्द्यमर्कक्षीरे दिनावधि।
वेष्टयेदर्क पत्रेण चक्राकारन्तु कारयेत्॥
कुञ्जराख्ये पुटे दग्ध्वा सप्तवारान् पुनःपुनः।
ततोवट जटाक्वाथैः तद्वद्देयं पुटत्रयं॥
म्रियते नात्र सन्देहो योजयेत् सर्व्वकर्म्मसु॥

धान्याभ्रकं अर्कक्षीरेण मर्द्दयित्वा, चक्रिकां कृत्वा अर्कपत्रेण वेष्टयित्वा, गजपुटे पुटेत्। पुनः पुनः। ततो वटजटा क्वाथैः पुनः पुनः।

मतान्तरम्—धान्याभ्रकं समादाय मुस्तक्वाथैः पुटत्रयं।
तद्वत् पुनर्णवा नीरैः कासमर्द्दरसैस्तथा॥
नागवल्ली रसैः सूर्य्य क्षीरैर्देयं पृथक् पृथक्।
दिनं दिनं मर्द्दयित्वा क्वाथैर्व्वट-जटोद्भवैः॥
दत्वा पुटत्रयं पश्चात् त्रिःपुटेन्मूषली जलैः।
त्रिगोक्षुर कषायेण त्रिःपुटेद् वानरीरसैः॥
मोचकन्दरसैः पाच्यं त्रिगात्रं कोकिलाक्षजैः।
रसैः पुटेल्लोध्रकैस्तु क्षीरादेकं पुटं पुनः॥
दध्ना घृतेन मधुना स्वच्छया सितया तथा।
एकमेकं पुटं दद्यादभ्रस्यैव मृतिर्भवेत्॥

अथमृताभ्रस्य गुणमाह—सर्व्वरोगहरं व्योम जायते योगवाहिकं।
कामिनी मददर्पघ्नं शस्तं पुंस्त्वोपघातिनां॥
वृष्यमायुष्करं शुक्रवृद्धि सन्तानकारकं॥

धान्याभ्रक मुस्ताक्वाथेन मर्द्दयित्वा, पुटत्रयं गजपुटे, पुनर्णवा रसे ३ पुट, कासमर्द ( करवीर ) रसे ३ पुट, पाणरसे ३ पुट, अर्कक्षीरे ३ पुट, वटजटा ( वटरजरिर ) क्वाथे ३ पुट, नागिनी मूरवन्वारे ३ पुट, गोक्षुर क्वाथे ३ पुट, वानरीमूलरसे ३ पुट, कलर आलुर रसे ३ पुट, कोकिलाक्ष क्वाथे ३ पुट, लोध्रक्वाथे ३ पुट, गोक्षीरे १ पुट, दधिरे १ पुट, मधुरे १ पुट, घृतेरे १ पुट, चिनिरे १ पुट मृतो भवति। निश्चन्द्राभ्रे सर्व्वव्याधि नाश करे।

अथाभ्रमारक गणानि—शालिञ्च तण्डुलीयक······घनशूली दलजैः।
रक्तोरु बूक कासमर्द्द रम्भामूलार्क मुनिदलतः।
गोमूत्रे गोमूत्रक्वथित त्रिफलार्द्रकाखुपर्णी॥
रसैर्जम्बीर नीर बहुकुची चाङ्गेरी नागवल्ल्युयत्थैः।
मान्नोन्न शिग्रु मूषली कार्पासबीज वालाह्वैः॥
न्यग्रोधक्षीर न्यग्रोध प्ररोहज क्वाथैः।
क्षुरमूल गृहकुमारी भृङ्गाख्य केशराजाख्यैः॥
अभ्रकमारकतोयैरेतैः पुटेत् सिन्दूरतां यावत्।
स्वरसैरेषां प्रपुटेन्महिष दध्ना पुटोऽवसाने तु॥

कुकुरठेङ्गीया, खुतरो, लरवरुवा, सरुमानिमुनि, मथा, बिल्वपत्र रङ्गापरा, अकलबिर, सोन्दरपखाल कदलीमूल, अर्कमूल, मुनिफुल पत्र, गोमूत्र सहित त्रिफलाक्काथे। सोन्दरपखाल, जामिर रस कचारिमेदेलुवा, चाङ्गेरी, पाणररस बरमानिमुनि, चजिना, नागिनी मूरवान्धा, कपाह बीज, चकुसियावन, बरक्काथ, बरबेउनी (बटरजरि) काथ, गोचुर काथ, चालकुमारी, (कटाखुनरा) भृङ्गराज, केशराज एतैः पिष्ट्वा पुटेत्। अबसाने महिषदध्ना पुटेत्। सिन्दूराभं भवेत्।

अभ्रस्य जारण-विधिर्व्वहुभिः कथितो बहुप्रकारेण।
येन केनापि विधिना कार्य्यं निश्चन्द्रता मात्रं॥

अभ्रर अनेकविध जारण आछे शास्त्रत। यथातथा प्रकारे निश्चन्द्रता हले प्रशस्त।

निश्चन्द्राभ्रं हरेन्मृत्युं जरापलितनाशनं। सुगमम्।

अभ्रस्यामृतीकरणम्—तुल्यघृतं चाभ्रं लोहपात्रे विपाचयेत्।
घृते जीर्णे तदभ्रन्तु सर्व्वकार्य्येषु योजयेत्॥

मृताभ्र १ भाग, घृत १ भाग लोह पात्रत पुरिब, घृत पुरिले सर्व्वकार्य्यत लगाब।

इति अभ्रमारणाधिकारः।

## ८५। अथाष्टधातूनाममृतीकरणम्

तत्रादौ सुवर्णस्यामृतीकरणम्—पञ्चामृतेनैव पुटमेकं दद्यात्।

इति सुवर्णस्यामृतीकरणम्। एवं रजतादौ॥

## ८६। अथ रससिन्दूरविधानम्[७]

त्रिफलमित सूतगन्धककज्जलिकां घृतकुमारीकाखरसैः।
पङ्कप्रायं कृत्वा भूयः सम्मर्द्दनेन संचूर्णन्तत् सप्तधा ॥

[ उक्त मन्त्रो निधाय पचेत् ]

मृदम्बरलिप्तायां काचकूप्यां धृत्वा तस्या वदने कीलकं संयोज्य, मृदुवस्त्रैः पुनः सर्व्वां कूपीं समाच्छाद्य सुष्काग्नि सह कटाहे, सकूप्चिद्रे, अङ्गुली प्रवेशार्हे सन्वेश्य, मृत्तिकां तां मूले [विंशति मात्र] लवण। दत्वा च्द कङ्कणकं यन्त्रं, सिकताभिरापूर्य्यं, आकण्ठमेवादौ क्रमेण दीप्ताग्निमायोज्य याममधस्तात्, तदनुयामादिषु, ह्रासौ, वर्द्धयितव्यौ यद्द्वादश यामं, ततोऽर्द्धं यामो द्वौ सर्व्वां कूपीं ज्वालं व्याप्नोति यथा, तथा कार्य्या, व्युद्घाट्यं च तत शीतैः गृह्णीयादर्द्धं लग्नकं। तत्तदनुपान भेदाद् गुञ्जपाद रोगेषु योगेषु। स भवति सहस्रवेधी, शरीर मजरागदं कुरुते।

अथान्य प्रकारः—पलमात्रं रसं शुद्धं तावन्मात्रञ्च गन्धकं।
गन्धकेन समःसूतो निर्गुण्डी रसमर्द्दितः ॥
पाचितो वालुकायन्त्रे रक्तं भस्म प्रजायते ॥

शुद्धरस ८ तोला, शुद्धगन्धक ८ तोला, द्वयोः कज्जलिकां निर्गुण्डी रसैर्म्मर्द्दित्वा, यामाष्टं वा, द्वादश यामं वा वालुकायन्त्रे पचेत्।

७। रससिन्दूर पाके मतान्तरम्। —रसेन्द्रसारे।
पृथक् समं समं कृत्वा पारदं गन्धकन्तथा।
नरसारं धूमसारं स्फटिकं याममात्रकं ॥
निम्बुरसेन संमर्द्य काचकूप्यां निवेशयेत्।
मुखे पाषाण खटिकां दत्वा मुद्रां प्रलेपयेत् ॥
सप्तभिर्मृत्तिकावस्त्रैः पृथक् संशोष्य वेष्टयेत्।
सच्छिद्रायां मृदःस्थाल्यां कूपिकान्तां निवेशयेत् ॥
पूरयेत् सिकतापूरैरागलं मतिमान् भिषक्।
निवेश्य चुल्ल्यां दहनं मन्दं मध्यं खरं क्रमात् ॥
प्रज्वाल्य द्वादशं यामं, स्वाङ्गशीतं समुद्धरेत्।
स्फोटयित्वा तु मुक्ताममूर्द्धलग्नं बहिः त्यजेत्।
अधःस्थं रससिन्दूरं सर्व्वरोगेषु योजयेत् ॥
नरसार मिशादल, धूमसार गृहधूम, स्फटिक, फिट्‌किरी।

अथान्यमतम्—पूर्व्ववत् कज्जलीं कृत्वा न्यग्रोधाङ्कुरवारितः।
भावना त्रितयं दत्वा स्थाली मध्ये निधापयेत्॥
विरच्य कवचीयन्त्रं वालुकाभिः प्रपूरयेत्।
दद्यात्तदनुमन्दाग्निं भिषग् यामचतुष्टयं॥
जायते रससिन्दूरं तरुणादित्यसन्निभं।
अनुपानविशेषेण करोति विविधान् गुणान्॥

रस ८ तोला, गन्धक ८ तोला, कज्जलीं कृत्वा, वटाङ्कुर रसैर्भावना त्रितयं दत्वा, वीरकवची यन्त्रे वालुकायां दद्यात्। यामचतुष्टयान्त क्रमेण वृद्धाग्निः।

अथ रससिन्दूरानुपानम्—सोमराजी वीजकल्कं क्वाथं मूत्रञ्च कुष्ठके।
परिणाम भवशूले दग्ध शूले हरितकी॥
हृत्शूले शीतलं तोय जठरे तप्तकं पयः।
आधिक्यं पार्श्वशूले च कृत्वा कदलकान्तरे॥
अन्नभुक्ते कटीशूले रुवु तैलं रसञ्च वा।
शेफालिकारसं प्लीह्नि यकृत् शूले यकृतसु च॥
चित्रकञ्च पिवेत् कल्कं क्वाथं वा पिप्पलीञ्च वा।
जलोदरे हरीतक्याः कल्कं सैन्धवसंयुतम्॥
सर्व्वोदरे जलं तप्तं तथा प्लीहोदरेऽपि च।
सन्निपातज्वरे चैव मार्द्रकस्वरसं पिवेत्॥
मन्दाग्नौ सपटु शिवां यमान्या कल्कमेव च।
प्रमेहे च रसं धात्र्याः निशाचूर्णं मधुप्लुतं॥
उष्णोदकम्वा मतिमान्नाडीव्रणे चिपीटकं।
नक्तान्ध्ये नारिकेलाम्बु लिङ्गशैथिल्यके पयः॥
स्त्रीरोगे रक्तपित्ते च कुशक्काथं वृषारसं।
वातरक्ते गुड़ूचीनां क्काथं अष्ठिलिकासु च॥
गोमूत्रमामवाते च शेफालिरसमेव वा।
एरण्डतैलमथवा कण्टकारी जलं कफे॥
रसमिक्षुभवं क्षीरं मुद्गयूषं क्षये पिवेत्।

मतान्तरं—आमवाते शीतं तोयं शुण्ठी क्वाथं वराम्बु वा।
सुशीतं वारुणं तोयं वराम्बु चाश्मरी गदे॥

उदर्य्यां त्रिवृतः क्वाथं यवक्षाराम्बु वा पिबेत् ।
क्षीरञ्चैव तथा तोयं कौलत्थं यूषमेव च ॥
अजीर्णे च लवङ्गस्य अनुपानन्तु युक्तिभिः ।
पिबेत् चित्रकजं क्वाथं यकृत्प्लीहोपशान्तये ॥
शोथे कुलत्थ यूषम्वा वर्षाभूत्थरसाम्बु वा ।
खदिराब्द वराक्वाथं कुष्ठे भृङ्गरसं पिबेत् ॥
ग्रहण्यां कञ्चटावारि यूषोमासूर एव वा ।
यत्र वा कथितं साक्षात् तत्र तेनैव योजयेत् ॥

कुष्ठत सोमराजी वीज क्वाथ अनुपान। परिणाम शूलत गोक्षीर। शूलत हरीतकी क्वाथ, हृदिशूलत शीतलजल। उदरित तप्तक्षीर। पार्श्व शूलत मात्रा अधिक कलर भितरत दि खाव। अन्नद्रव शूलत एरातैल अथवा एरयडमूलर क्वाथेर खाव। प्लीहायकृतत शेवालीफुलर ( क्वाथ ) वा रस। यकृतत चित्रक क्वाथ वा पिप्पली क्वाथ। जलोदरत, शिलिखा बटा, सैन्धव सहित, सर्व्वोदरत उष्णोदक। प्लीहोदरत तप्तजल। सन्निपात ज्वरत आद्रकरस। अग्निमान्द्यत, शिलिखा बटा सैन्धव युक्त अथवा यमानी बटा सैन्धव युक्त। प्रमेहत आमलकी रसत प्रक्षेप हरिद्राचूर्ण मधु। उष्णोदकम्वा। नाड़ीव्रणत धिरार लगत। कुकुरोकणात नारिकेलर जलत। अङ्गशिथिलत गोक्षीर। स्त्रीप्रदरत, रक्तपित्तत कुशक्वाथ अथवा वासक रस। वातरक्तत गुड़ूची क्वाथ। अष्ठीलात गुड़ूचीक्वाथ, आमवातत गोमूत्र अथवा शेवाली फुलर पातर रस, अथवा एरयड तैल। कफे कण्टकारी क्वाथ। क्षयत इक्षुरस वा गोक्षीर वा मुद्ग यूष।

मतान्तरे—आमवातत जल वा शुयठीक्वाथ वा त्रिफलाक्वाथम्वा। अश्मरीत वरुणक्वाथ, त्रिफलाक्वाथम्वा। उदररोगत तेड़ियाक्वाथ, यवक्षारम्वा क्षीर वा, कुलत्थरक्वाथ वा। अजीर्णात लवङ्ग। प्लीहायकृतत चित्रकक्वाथ। शोथत कुलत्थक्वाथ वा पुनर्णवा रस, वा खैर ( खदिरक्वाथ ) मथा वा त्रिफला क्वाथ वा। कुष्ठत भृङ्गराजर रस। ग्रहणीत कञ्चट ( माटियैकर ) मसूरक्वाथ वा।

यि सकल कथन करा हल सेइ द्रवे योजन करिव।

यस्य रोगस्य यो योगो मुनिना नित्यमुदितः ।
तत्तद्रोगसमायुक्तं भिषक् सूतं प्रयोजयेत् ॥

मुनि सकले यि व्याधित यि क्वाथ लेखिछे सेइ क्वाथेरे अनुपान करि रस सिन्दूर खुवाव।

८। अथ रससेवा क्रमफले। रसेन्द्रे—

प्रातरेव पुरतोविरेचनं तद्दिनोपवसनं विधाय च ।
तत् परेऽहनि च पथ्यसेवनं तत्परेऽहनि च रसेन्द्र सेवनं ॥
बुद्धिस्मृति प्रभाकान्ति बलञ्चैव रसस्तथा ।
वर्द्धते सर्व्वं पर्वेते रससेवाविधौ नृणाम ॥

हितपथ्य कथनमाह—हितं मुद्गान्नं बुग्धान्नं शाल्यन्नञ्च विशेषतः।
शाकं पुनर्णवा वास्तु मेघनादस्तु चुच्लिका ॥
सैन्धव-नागर-मुस्तं पद्ममूलानि भक्षयेत् ॥ सुगमम्।

इति रसभक्षणकथनम् ८।

## अथ अपथ्यकथनम्

कुष्माण्डं कर्कटीञ्चैव कालिङ्गं कारवेल्लकं।
कुसुम्भिका च कर्कोटी कलम्बी [ कदली ] काकमाचिका ॥
ककाराष्टकमेतद्धि वर्जयेद् रसभक्षकः ॥

कोमोरा, चियडाल, इन्द्रयव ( बा तरमुज ), केरेला, कुसुमशाक, घिमरू, कदली, कोवाचुटि शाक एइ ककाराष्टक। इत्यपथ्यकथनं।

## अथ भावनाविधिः

दिवा दिवातपे शुष्कं रात्रौ रात्रौ निवासयेत्।
[ श्लक्ष्णं ] शुष्कं चूर्णी कृतं सप्ताहं भावनाविधिः ॥

दिवसत रोद्रत शुकाइ, चूर्ण करिब, रात्रित क्वाथ औषधदि मर्द्दि अधिवासित करिब, एवं सप्तदिनानि।

भाव्य द्रव्य समं क्वाथ्यं क्वाथ्यादष्ट गुणं जलं।
अष्टांशशेषितः क्वाथो भाव्यानां तेन भावना ॥

भावनार औषध यि प्रमाण हइ, सेइ प्रमाणे सिजावलगा औषध ब। तात जल ८ भाग, शेष १ भाग, भाव्य द्रव्यं तेन भावयेत्।

द्रवेण यावता द्रव्यमेकी भूया द्रतां व्रजेत्।
तावत् प्रमाणं निर्द्दिष्ठ भिषग्भिर्भावनाविधौ ॥

भाव्यद्रव्य क्वाथ दुयो मिलित हइ द्रव किंकित् घन हुव लागे। भावनाविधिर एइ प्रमाण ॥

इति भावनाविधिः।

## ८७। अथ शोधनप्रयोगः

तत्रादौ गन्धकशोधनम् ६—

शुकपुच्छसमच्छायो नवनीत समप्रभः।
समूलः कठिनः स्निग्धो गन्धकः श्रेष्ठ उच्यते ॥

अशोधित गन्धकदोषमाह—

अशुद्धगन्धं कुरुते हि कुष्ठं तापं व्रणं [ भ्रमं ] पित्तरुजन्तथैव।
रूपं बलं वीर्य्यसुखं निहन्ति तस्मात् सुशुद्धो विनियोजनीयः॥ सुगमम्।

लौहपात्रे विनिःक्षिप्य घृतमग्नौ प्रतापयेत्।
तप्ते घृते तत् समानं क्षिपेद् गन्धकजं रजः॥
विद्रुतं गन्धकं दृष्ट्वा दुग्धमध्ये विनिःक्षिपेत्।
एवं गन्धकशुद्धिःस्यात् सर्व्वकार्य्येषु योजयेत्॥

माटौरपुच्छ सदृश गन्धक चूर्ण १ भाग, घृत १ भाग, लौहपात्रत तप्त करि द्रव हले दुग्धर मध्यत पेलाब, शीत हले तप्त जलेरे क्षालन करि रौद्रत शुकाइ लव। इति गन्धकशोधनं।

### अथ हरितालशोधनमारणम्

अशुद्धतालमायुघ्नं कफमारुत मेहकृन्।
तापस्फोटाङ्ग सङ्कोचान् कुरुते तेन शोधयेत्॥

९। अथ रस-लक्षणम्—

अन्तःसुनीलोवहिरुज्ज्वलोयो मध्याह्नसूर्य्य प्रतिम प्रकाशः।
शस्तोऽथधूम्रः परिपाण्डरश्च चित्रो न योज्योरसकर्म सिद्धौ। —रसेन्द्रे

अथ रसस्थित दोषमाह—

नागोवङ्गोमलोवह्निश्चाञ्चल्यञ्च विषं गिरिः।
असह्याग्निर्महादोषा निसर्गाः पारदे स्थिताः॥
व्रणं कुष्ठं तथा जाड्यं दाहं वीर्य्यस्य नाशनं।
मरणं जरतां स्फोटं कुर्व्वन्त्येते क्रमान्नृणाम्॥
तस्माद्रसस्य संशुद्धिं विदध्याद् भिषजां वरः।
शुद्धोऽयममृतः साक्षाद् दोषयुक्तोरसो विषं।
दोषहीनो यदासूतस्तदा मृत्युजरा पहः॥ —रसेन्द्रे

शुद्धं स्यात्तालकं स्विन्न कुष्माण्ड-सलिले ततः ।
चूर्णोदके पृथक् तैले तस्मिन् पूतेन दोषकृत्
[ भस्मीभूतो न दोषकृत् ] ॥

बाचि चाइ, शुद्ध हरिताल छुद्र करि कापोरत टोपोला बान्धि दोलायन्त्रेरे, कुष्माण्डरसत सिद्ध १ प्रहर, चूनर पानीरे १ प्रहर, तिलर तैलेरे १ प्रहर पश्चात् लघुपुटं दद्यात् ।

मतान्तरम्—मधुतुल्ये घनीभूते कषाये ब्रह्ममूलजे ।
त्रिवारं तालकं भाव्यं पिष्ट्वा मूत्रेऽथ माहिषे ॥
उपलैर्दशभिर्देयं पुटञ्चैवञ्च पेषयेत् ।
एवं द्वादशधा पाच्यं शुद्धं योगेषु योजयेत् ॥

पलाशमूल क्वाथ मधुतुल्य घन करि हरिताल ३ वार, भावना करिव, पश्चात् माहिषमूत्रे पिष्ट्वा, पुटं दत्वा एवं द्वादशधा पाच्य योगेषु योजयेत् ।

अथान्यमतम्१०—तालकं पोट्टलीं बद्ध्वा सचूर्णे काञ्जिके पचेत् ।
दोलायन्त्रेण यामैक ततः कुष्माण्डजे रसे ॥
तिलतैले पचेद् यामं यामन्तत् त्रैफले जले ।
दोलायन्त्रे चतुर्य्यामं पाच्यं शुद्ध्यति तालकं ॥

बाचि चाइ माल हरिताल माञ्जि छुद्र करि, कापोरेरे बान्धि, चूर्ण संयुक्त काञ्जित, दोलायन्त्रे एक प्रहर सिद्ध करि कुष्माण्डरसत, एक प्रहर सिद्ध, तिल तैलत १ प्रहर सिद्ध, त्रिफला क्वाथत एक प्रहर सिद्ध । पाचे शुद्ध शुखाइ लव, सर्व्वकार्य्यत लगाव ।

१० । अथ रस शोधनम—दिनैकं मर्दयेत् सूतं कुमारीसम्भवैर्द्रवैः ।
तथा चित्रकजैः क्वाथैर्म्मर्द्दयेदेकवासरम् ॥
काकमाचीरसैस्तद्वद्दिनमेकन्तु मर्द्दयेत् ॥

मतान्तरम्—रसोनस्वरसैः सूतो नागवल्लीदलोत्थितैः ।
त्रिफलायास्तथा क्वाथै रसोमर्द्द्य प्रयत्नतः ॥
ततस्तेभ्यः पृथक् कृत्वा सूतं प्रक्षाल्य काञ्जिकैः ।
सर्व्वदोष विनिर्म्मुक्तं योजयेद्रस कर्म्मसु ॥

अथाष्टकर्म्माणि—स्वेदनं मर्द्दनञ्चैव मूर्च्छनोत्थापने तथा ।
पातनं बोधनञ्चैव नियामनमतः परं ।
दीपनञ्चेति संस्काराः सूतस्याष्टौ प्रकीर्त्तिताः ॥ —रसेन्द्रे ।

## अथ शुद्धहरितालस्य गुणमाह

हरितालं कटुस्निग्धं कषायञ्च विसर्पनुत् ।
तालकं हरते रोगान् कुष्ठमृत्युज्वरादिकान् ।।
संशुद्धं कान्ति वीर्यौजः कुरुते मृत्युनाशनम् ।।

**इति हरितालशोधनमारणम् ।**

## अथ मनःशिलाशुद्धिः

अशुद्धमनःशिलाया दोषकथनम्—

मनःशिलामन्दवलञ्च नूनं करोति जन्तोः शुभपाकहीनं ।
मलन्तु वद्धं कुरुते च नूनं सशर्करं कृच्छ्रगदं करोति ।।

वल नष्ट करे, अन्नादि जीर्ण नेयाः, मल वद्ध करे, मूत्रकृच्छ्र प्रमेह, अश्मरी, इसव जन्माइ निश्चयं ।

जयन्ती भृङ्गराजोत्थै रक्तागस्तरसैः शिला ।
दोलायन्त्रे दिनं पाच्यं यामं छागस्य मूत्रके ।।
क्षारयेदारणालेन सर्व्वरोगेषु योजयेत् ।।

मनःशिला वस्त्रे टोपोलावान्धि, दोलायन्त्रे जयन्ती रसत १ प्रहर, भृङ्गराजर रसत एक प्रहर, रक्त अगस्ति ( वकफुलर ) रसत एक प्रहर, छागर मूत्रत एक प्रहर । एवं चतुर्य्यामं पक्का, काञ्जिकेन क्षालयित्वा सर्व्वरोगेषु योजयेत् ।

मतान्तरं—अगस्त्यपत्रतोयेन भाविता सप्तरात्रकं ।
शृङ्गवेर रसैर्व्वापि विशुद्ध्यति मनःशिला ।।

अगस्ति पत्ररसत ७ वार, भावना वा आदार रसत ७ वार भावना दिले मनःशिला शुद्ध हय ।

अथ शोधित मनःशिलागुणमाह—

कटुः स्निग्धा शिलातिक्ता कफघ्नी लेखनी सरा ।
भूतावेश भयं हन्ति काशश्वासहरा शुभा ।।

**इति मनःशिलाशुद्धिः ।**

## अथ तुत्थशोधनं मारणञ्च

विष्ठया मर्द्दयेत्तुत्थं मार्जारक कपोतयोः ।
दशांशं टङ्कनं दत्वा पाच्यं मृदुपुटे ततः ॥
पुटं दद्यात् पटु क्षौद्रैः किल तुत्थ विशुद्धये ।

तुतिया, कपोत, मार्ज्जारेर विष्ठारे मर्द्दि लघु पुट दिव। अथवा दधि परे वा मधु परे वा मर्द्दि पुट दिव शुद्धि हय ।

अथान्यमतम्— गन्धकेन समं तुत्थं तुत्थार्द्धेनार्द्धयामकं ।
वान्तिभ्रान्ती यदा नष्टे तदा सिद्धिं विनिर्द्दिशेत् ॥

तुतिया १ भाग, गन्धक अर्द्धभाग, एक प्रहर सिद्ध । इति तुत्थशुद्धिः ।

## अथ रसाञ्जनशुद्धिः

नीलाञ्जनं चूर्णयित्वा जम्बीरद्रवभावितं ।
दिनैकमातपे शुष्कं शुद्धं कार्य्येषु योजयेत् ॥

## अथ विमलशुद्धिः ( रौप्यमाक्षिकं )११

विमलस्त्रिविधो देवि ! शुक्लः कृष्णश्च लोहितः ।
मूत्रारणालतैलेषु गोदुग्धे कदलीरसे ।
कौलत्थे कोद्रवक्काथे माक्षिकं विमलन्तथा ॥

गोमूत्रत, काञ्जित, तिलतैलत, कदलीरसत, कुलत्थत कोदो धानत, सबारे क्वाथत एको एको प्रहर मर्द्दिव, यवक्षारेरे मर्द्दि १ पुट दिव । अम्लेरे १ पुट दिव ।

अथान्यमतम्— जम्बीरस्य रसे स्विन्नो मेषशृङ्गीरसैस्तथा ।
रम्भातोयेन वा पाच्यं घस्रं विमलशुद्धये ॥

विमल चूर्ण करि जामिरर रसत एदिन तियाइ थव ; तारपरा तुलि, कल आलुर रसत १ दिन सिजाव, शुद्ध हय ।

### इति विमलशुद्धिः ।

---

११ । माक्षिकं हि द्विविधं स्वर्णमाक्षिकं रौप्यमाक्षिकञ्च ।
उक्तं हि—माक्षिकं द्विविधं प्रोक्तं हेमाह्नं तारमाक्षिकं ।
भिन्नवर्णा विशेषत्वाद् रसकार्य्यादिकं पृथक् ॥
तारमाक्षिकं विमलमितिख्यातन्नाम्ने प्रोक्तम ॥ —इति रसेन्द्रटीकायां गोपालः ।

## अथ स्वर्णमाक्षिकशोधनम्१२

अथाशुद्धमाक्षिकस्य दोषमाह—

मन्दाग्निं वलहानिञ्च व्रणं विष्टम्भगात्र [ नेत्र ] रुक् ।
कुरुते माक्षिको मृत्युमशुद्धो नात्र संशयः ॥ सुगमम् ।
स्वर्णमाक्षिकचूर्णन्तु वस्त्रे बद्ध्वा विपाचयेत् ।
कालमारिष शालिञ्च क्काथे दोलाविधानतः ॥
तदधः पतितं शस्तमेवं शुद्धयति माक्षिकम् ॥

माक्षिक चूर्ण करि, काठकापोरत टोपोला वान्धि, दोलायन्त्रे कराटक्षुतरा रसत २ प्रहर, कुकुराठेङ्गोयार रसत २ प्रहर सिजाव, एवं माक्षिक शुद्धिः ।

मतान्तरम्— माक्षिकस्य त्रयो भागा भागैकं सैन्धवस्य च ।
मातुलुङ्गद्रवैर्व्वाथ जम्बीरोत्थ द्रवैः पचेत् ॥
लौहपात्रे पचेत्तावद्यावत् पात्रं सुलोहितम् ।
ताम्रवर्ण [भासवर्ण]मयो यावत्तावच्छुध्यति माक्षिकम् ॥
सुशुद्धं माक्षिकं ज्ञात्वा सर्व्वकार्य्येषु योजयेत् ॥

स्वर्णमाक्षिक चूर्ण ३ भाग, सैन्धव १ भाग, सोलेङ्गरसत वा जामिरर रसत, लौहपात्रत सिजाव। रङ्गा चूर्ण हले शुद्ध हय ।

### इति स्वर्णमाक्षिकशुद्धिः ।

## अथ काशीशशुद्धिः१३

काशीशोद्विविधो देवि ! धातुपुष्पञ्च नामतः ।
सकृद्भृङ्गाम्बुना स्विन्नं काशीशं निर्म्मलं भवेत् ॥

काशीश चूर्ण करि, भृङ्गराजर रस सह एकवार पाक करिले विशोधित हय ।

१२ । अथ माक्षिक-लक्षणमाह—
मङ्गे सुवर्णसङ्काशो मनाक्कृष्णच्छविर्ब्बहिः ।
बृहद्वर्णा इति ख्यातोमाक्षिकः श्रेष्ठ उच्यते ॥ —रसेन्द्रे ।

१३ । काशीशं "हिराकषेति" लोके ।
तद द्विविधं धातुकाशीशं पुष्पकाशीशञ्च ।
धातुकाशीशं हरिद्वर्णं लोहितञ्च ।
पुष्प काशीशं शुक्लवर्णं कृष्णञ्च ॥ —रसेन्द्रटीकायां ।

मतान्तरम्—काशीशंभावयेद्घर्म्मे दिनं जम्बीरजद्रवैः।

काशीश जामिर रसत मर्दि रौद्रत शुकाले शुद्ध हय।

अथ विशुद्धकाशीशगुणाः—

काशीशं [शीतलं स्निग्धं] निर्म्मलं स्निग्धं चित्तनेत्ररुजापहं।
पित्तापस्मारशमनं रसवद् गुणकारकम्॥

## अथ नखिशुद्धिः

क्षिपेद् गोमयपिण्डे तु त्रिःप्रतप्य यथाक्रमम्।
वालुकाभिश्च भर्ज्जेत्तु ततः शुद्धिर्भवेद् ध्रुवम्॥

नखी गोवरत् सिजाव, कोमल हले धुइ लव, पाचे वालित माजिव। गन्ध उलाव नेदिव। चूर्ण करि सर्व्वकार्य्यत लगाव।

## इति नखिशुद्धिः।

## अथ शङ्खशुद्धिः१४

दोलायन्त्रे जम्बीरस्य रसेन पाचयेद्दिनम्।
दिनार्द्धं प्रहरैकम्वा सिद्धमुत्तोलयेद् भिषक्॥
चूर्णयेत् शुष्कयेत् पश्चात् जम्बीरखरसेऽपि च।
सप्ताहमेवं कुर्व्वीत शङ्खशुद्धिर्भवेद् ध्रुवम्॥

## अथ वराटिका शुद्धिः

वरटी नूतना पीता नातिस्थूला न दुर्व्वला।
रसवैद्यकनिर्द्दिष्टा सा वराटक संज्ञका॥

१४। अथ शङ्खमारणम्—

अन्धमूषागतं शङ्खं पलमेकं विचक्षणः।
माषार्द्धं टङ्कणैर्मिश्रं दग्धयन्त्रेण मारयेत्॥

अथ शोधित शङ्खगुणाः—

शङ्खः सर्व्वरुजां हन्ति विशेषादुदरामयं।
शूलाम्लपित्त विष्टम्भमेहहृद् वह्नि दीपनः॥

कड़ि माञ्जि काञ्जित पेलाव, धुइ लव, तक्रत १ वार, चेङ्गेरीरसत १ वार, जम्बीर रसत् १ वार शुक्लवर्णा हले श्रेष्ठ।

## अथ वराटभस्मः

वराटी काञ्जिकेनापि तापयित्वा तु हण्डिका।
मध्ये चाम्लयुतां कृत्वा रुद्ध्वा यामद्वयं पचेत्॥

शोधित वराटी मायडत टेङ्गारसर मध्यत दि मुख लिपि अग्नित २ प्रहर पाक करिव, तवे शुक्लभस्म हय। सर्व्वकार्य्येषु योजयेत्।

अथ वराटिकागुणाः—

परिणामादिशूलघ्नी क्षयहा ग्रहणीहरा।
कटूष्णा दीपनीवृष्या तिक्ता वातकफापहा॥
[ रसेन्द्रजारणे प्रोक्ता वीड्द्रव्येषु शस्यते ]।

इति वराटिकाशुद्धिः।

## अथ हिङ्गुलशुद्धिः

अम्लद्रव्य द्रवैः पिष्ट्वा दरदो माहिषेण च।
दुग्धेन सप्तधा पिष्टः शुष्कीभूतो विशुद्ध्यति॥

हिङ्गुल अम्लत ७ वार मर्दिव, अथवा महिष दुग्धत ७ वार मर्दिव, शुष्क हले शुद्ध हय।

मतान्तरम्—आर्द्रकैर्लकुचद्रावैः सप्तधाभावितो यदि।
हिङ्गुलः शुद्धतां याति निर्दोषो जायते खलु॥

हिङ्गुल आदार रसत ७ वार, भेवाञ्चालर रसत ७ वार, मर्दिव तवे शुद्ध हय।

तिक्तोष्णं हिङ्गुलं रुक्षं रसगन्धक सम्भवम्।
[ विम्ब्याभं हिङ्गुलं दिव्यं रसगन्धक सम्भवम् ]॥
मेहकुष्ठहरं रुच्यं बल्यं मेधाग्निवर्द्धनम्॥

इति हिङ्गुलशुद्धिः।

**अथ हिङ्गुलाद् रसाकर्षणम्**[१५]

जम्बीर निम्बुनिरेण मर्द्दितो हिङ्गुलोदिनं।
ऊर्द्धपातनयन्त्रेण ग्राह्यः स्यान्निर्म्मलोरमः ॥

जामिर रस, लेबु रस, दुयेरसत १ दिन मर्द्दि ऊर्द्धपातन यन्त्रत रस उलियाव।

मतान्तरं—पारिभद्ररसैः पेष्यं हिङ्गुलं याममात्रकं।
जम्बीराणां रसैर्व्वाथ पचेत् पातन यन्त्रके ॥
तं सूतं योजयेद् योगे मलकञ्चुक वर्ज्जित।
संशुद्धिमन्तरेणापि शुद्धोऽयं रसकर्म्मणि ॥

मदारर रसत हिङ्गुल १ प्रहर मर्द्दि अथवा जामिरर रसत १ प्रहर मर्द्दि, ऊर्द्धपातन करि रस लव।

**इति हिङ्गुलाकृष्टरसः।**

**अथ शिलाजतुशोधनं**

गोदुग्ध त्रिफलाभृङ्ग द्रवैः पिष्टं शिलाजतु।
दिनैकं लौहजे पात्रे शुद्धिमायात्यसंशयः ॥

शिलाजतु, गोदुग्धत १ दिन, त्रिफलार क्वाथत १ दिन, भृङ्गराजर रसत १ दिन मर्द्दि शुकाइ लव अतः शुद्धम्।

शोधितशिलाजतुगुणाः—
शिलाजतु भवेत् तिक्तं कटुकञ्च रसायनम्।
क्षयशोथोदरार्शांसि हन्ति वस्तिरुजां जयेत् ॥

**इति शिलाजतुशोधनम्।**

**अथ टङ्कनशुद्धिः**

अम्लेन भावितं चूर्णं सर्व्वकार्य्येषु योजयेत्।

सुवगा लोहार पात्रत फुलाइ, अम्लत मर्द्दि शुकाइ चूर्ण करिव।

१५। हिङ्गुल पर्य्याय कथनम्।—
हिङ्गुले हिङ्गुलुर्य्याति दरदः शुक तुण्डकः।
रसगन्धक सम्भूतो हिङ्गुलो दैत्यरक्तकः ॥

एवं टङ्कनमादाय सर्व्वरोगेषु योजयेत् ।
टङ्कनोऽग्निकरो रूक्षः कफघ्नो [ वातहृल्लघु ] रोचनोलघुः

मतान्तरं— क्षालयेदुष्णतोयेन अङ्गाराग्निश्च वर्जयेत् ।
अथवा भृङ्गराजस्य रसेन क्षालयेद् भिषक् ॥
खर्परे भर्जयेद् वह्नौ स्फुलिते शुद्धतां व्रजेत् ॥ सुगमम् ।

## इति टङ्कनशुद्धिः ।

## अथ विषशोधनम्१६

अशीतिर्य्यस्य वर्षाणि वसुवर्षाणि यस्य वा ।
विषं तस्मै न दातव्यं दत्तं वा दोषकारकं ॥

चारिकुरि वछरीयाक विष निदिव । आठ वछरीयाक निदिव ।

न क्रोधिते न पित्ताढ्ये न क्रूरे राजयक्ष्मणि ।
क्षुत्तृष्णाक्षयके चार्शोरोगिणि क्षयरोगिणि ॥
गर्भिणीवालवृद्धेषु तद्विषं राजमन्दिरे ।
न दातव्यं न भोक्तव्यं विसम्वादे कदाचन ॥
आचार्य्येण तु भोक्तव्य शिष्यप्रत्ययकारकम् ।
एतेषां न दातव्यम् ।
कुष्ठरोगी घृतभोजी हितभोजी च मानवः ।
रसायन-रसज्ञश्च दत्तं विषमथाशृणु ॥

१६। विषं हि द्विविधं स्थावरजङ्गमभेदात ।
मूलाद्यात्मकं स्थावरविषं दशविधं ।
सर्पादिसम्भवं जङ्गमविषं षोडशात्मकं ॥ —इति रसेन्द्रटीकायां ।
विषन्तु गडलं घोरं तस्य भेदानुदाहरे ।
वत्सनाभः स हारिद्रः, शक्तुकश्च प्रदीपनः ॥
सौराष्ट्रिकः शृङ्गिकश्च कालकूटस्तथैव च ।
हलाहलो ब्रह्मपुत्रो विषभेदा अमी नव ॥
अर्कक्षीरं स्नुहीक्षीरं लाङ्गली करवीरकः ।
गुञ्जाहिफेनो धुस्तूरः सप्तोपविषजातयः ॥ —आयुर्व्वेदसंग्रहे देवेन्द्रः।

गोमूत्र-पूर्णपात्रे च दोलायन्त्रे विषं पचेत् ।
द्वादशतोलमानेन चादौ वैद्यो दिवानिशं ॥

विष चकलियाइ लव १२ तोला, गोमूत्र चक्त कापोरत दोलायन्त्र करि रात्रिदिन सिद्ध करिव एवं शुद्धिः ।

मतान्तरं— पलद्वयं हरिद्रायाः मुस्तकस्य पलद्वयम् ।
चूर्णतिन्तिड़िकातोयैः षट्पलैः शुद्धि मर्द्दितम् ॥

हालधि रस २ पल, मथार रस २ पल, तेतेनौरस २ पल दत्वा मर्द्दित्वा रौद्रे शुष्कयेत् ।

मतान्तरम्— गोमूत्रे त्रिदिनं स्थाप्य यामैकन्तत्र पाचयेत् ।

गोमूत्रत ३ दिन थै, गोमूत्रत १ प्रहर सिजाव ।

अजादुग्धेन यामैकं पाच्यं विषं भिषग्वरः ।
चालयेदुष्णतोयेन विषं शुद्धत्वमाप्नुयात् ॥

मतान्तरम्— समं टङ्कन-सम्पिष्टं मृतमित्युच्यते विषं ।

टङ्कन १ भाग, चूर्णित विष १ भाग, जलेन मर्द्दितं शुष्कं ।

मतान्तरं— दोलायाः त्रिफलाक्काथे छागीक्षीरे विषं पचेत् ।

दोलायन्त्रत, त्रिफला काथत विष सिद्ध १ पहर, छागीक्षीरत २ प्रहर एवं शुद्ध्यति । इति विषशुद्धिः । १७

## अथ जयपालशोधनम्

खिन्नं गोमयतोये वा दुग्धे वा जयपालकं ।

कणिविहरगुटि, माङ्गि चिङ्गि, टोपोला वान्धि, दोलायन्त्रेण गोवर रसत वा २ प्रहर, गाखीरत वा २ प्रहर सिजाव ।

खर्परे मृदुतद्भृष्टं निःस्नेहं शुद्धिमिच्छति ।

शोधित कणि विष खोलात घृतत भाजि कानि एरे नेपि लव ।

---

१७ । अथ उपविषशुद्धिः—
अर्क सेहुण्ड धुस्तूर लाङ्गली करवीरका. ।
गुञ्जाहिफेनावित्येताः, सप्तोपविषजातयः ॥
धुस्तूरस्य च यद् बीजमन्यच्चोपविषञ्च यत ।
तच्छोध्यं दोलिकायन्त्रे क्षीरपूर्णेऽथ पात्रके ॥ —इति रसेन्द्रे ।

मतान्तरम्— निस्तुषं जयपालञ्च द्विधा कृत्वा विचक्षणः ।
एतद्वीजस्य मध्ये तु पत्रवत् परिवर्जयेत् ॥
अष्टमांशेन चूर्णेन टङ्कनस्य च मेलयेत् ।
केशयन्त्रेण तद्भाव्यं पाच्यं दुग्धेन संप्लुतं ।
त्रिरात्रं शुद्धिमाप्नोति जैपालममृतोपमम् ॥
एवञ्चोपविषं साध्यं मूलं पत्र त्वगादिकम् ॥

इति जयपालशोधनम् ।

## अथ धुस्तूरवीजशोधनम्

दोलायन्त्रेण काञ्जिके क्षीरेण संशुद्धिमेति तद्बीजम् ।

धुतूरागुटि माञ्जि टोपोला वान्धि, दोलायन्त्र करि काजित वा, गोक्षीरत वा २ प्रहर सिजाव ।

इति धुस्तूरवीजशोधनम् ।

## अथ वृद्धदारकवीजशोधनम्

शुद्ध्यति दुग्धे वीजं दोलायन्त्रे वृद्धदारकस्य पक्व ।

टुकरीया लतार गुटि, फालि कापोरत वान्धि दोलायन्त्रत गोक्षीर सिद्ध ।

इति वृद्धदारकवीजशोधनम् ।

## अथ काफिङ्गशुद्धिः

गोदुग्धत एक प्रहर सिद्ध करिले शुद्ध हय । करवीर गोक्षीरत सिजाव, शुद्ध हय ।

## अथ विषतिन्दुक-विषमुष्टिकशोधनम् १८

विषतिन्दुक-विषमुष्टिक निर्द्दिष्टे फलविषे चोभे ।
शुद्ध्यत्यनयोर्वीजं दोलायन्त्रे काञ्जिके सिद्धे ॥

विषतिन्दुक कुचिला, अन्य फलविष कुट्टयित्वा काञ्जिके दोलायन्त्रे सिद्धम ।

१८ । मतान्तरम्—
किञ्चिदाज्येन संभृष्टो विषमुष्टि ( कुचिला ) र्विशुद्ध्यति ॥ —आयुर्व्वेदसंग्रहे देवेन्द्रः

## अथ स्नुहीक्षीरशोधनम्

चिञ्चापत्ररसे कर्षे वस्त्रपूते पलद्वयं ।
स्नुहीक्षीरं रौद्रयन्त्रे भावयेद् यत्नतः शनैः ॥
द्रवे शुष्के समुत्तार्य्य सर्व्वरोगेषु योजयेत् ।

चिञ्चापत्ररस २ तोला वस्त्रत छेकि लव, सिजु आठा २ पल मिहलाइ, रौद्रत शुकाइ रस मार गले कार्य्यत लगाब ।

## अथ भल्लातकशोधनम्

भल्लातकानि पक्वानि, समानीय क्षिपेज्जले ।
मज्जन्ति यानि तत्रैव शुद्ध्यर्थं तानि योजयेत् ॥
इष्टका चूर्णनिकरैर्घर्षयेन्निर्व्विषं भवेत् ॥

पकिसरा भल्लाबीज जलत पेलाव, तलयोवा लव। ओपोङ्गा नलव। सेइ भल्ला इष्टका चूर्णेरे २ प्रहर घर्षि लव. तवे शुद्ध हय। एइक्रमे शुद्ध हले सर्व्वकार्य्यत लगाब ।

## इति भल्लातकशुद्धिः ।

## अथ गुग्गुलु-शोधनम

त्रिफलायाः कषाये वा गुडूची क्वाथ एव वा ।
गोदुग्धे वा निधायाथ दोलायन्त्रे विपाचयेत् ॥
अग्निना कोमले तस्मिन्नुष्ण-तोयेन क्षालयेत् ।
रौद्रे तु शुष्कयेत् शुद्धिर्गुग्गुलुर्भवति ध्रुवं ॥

शुभ दिवसत हिरण्याक्ष अथवा महिषाक्ष गुग्गुल आनि दोलायन्त्रत त्रिफला क्वाथत वा, आमैलता क्वाथत वा, गरुगाखीरत वा, मृदु अग्निरे सिद्ध करिव २ प्रहर, पाछे उष्ण तोयेरे धुव ।

## इति गुग्गुलु शुद्धिः ।

## अथ हिङ्गुशोधनम्

हिङ्गुं कृत्वा चनकवदङ्गारेण घृतेन च ।
भर्ज्जयेत् सावधानेन सर्व्वकार्य्येषु योजयेत् ॥

शुद्ध हिङ्गु चनकमाहर सदृश करि लव, अङ्गाराग्नित खोलात घृत भर्ज्जित करिव, न डेवाके सर्व्वकार्य्यत लगाब ।

## इति हिङ्गुशुद्धिः ।

## अथ दन्तिशोधनम्

दन्तिमूल इक्षुरसत ७ वार सिद्ध, अतः शुद्धं ।

## अथ त्रिवृत्शोधनम्

वगा तेलियाधूना जलेरे धुइ लव, तेवे शुद्ध हय ।

## अथ चित्रकशोधनम्

रक्ताचित्रक आनि गोक्षीरत सिजाइ लव, अतः शुद्धिः ।

## अथ देव-विषशोधनम्

इक्षुमध्ये निवेश्याथ, दाहयेत् शुद्धिरीदृशी ।

देवविष खुन्दि, पुरि कुहियारर भितरत मराइ पुरिब ।

## अथ मत्स्यादि-पित्तशोधनम्

मयूर-मत्स्य-वाराह इत्येकग्रन्थमतम् ।
मत्स्य-मार्ज्जार-वाराह-माहिषादेश्च-पित्तकम् ॥
शुष्कं कृत्वा प्रदातव्वं रौद्रयन्त्रै र्विभावयेत् ।
निम्बद्रवे च संस्थाप्य दिनान्ते तत् समुद्धरेत् ॥

एइवोरर पित्त, निमपातर रस दि रौद्रत शुकाव ।

## इति मत्स्यादि-पित्तशुद्धिः ।

## अथ नानाविध-वीजशोधनम्

वीजमादौ ममादाय रौद्रयन्त्रे विशोधयेत् ।
ईषत् सैन्धवयुक्तेन द्रवेण च सुयत्नतः ।
अपामार्गरसेनैव निम्ववीजं विशोधयेत् ॥

निमुरगुटि रदत दि शुकाइ सैन्धव सानिव ( द्रव करि ) वनसटर रसेरे तियाव, तियाइ शुकाव, निम्ववीज शुद्ध हय ।

मूलक्वाथे कुमार्य्याश्च वायस्या वीजशोधनम् ।

कोवामातुरी वीज, चालकुमारीरे तियाइ शुकाव । इन्द्रवारुणिका क्वाथे राजवृक्षस्य वीजकम् । सोणारुवीजः ।

शिग्रु कार्पासवीजानि अपामार्गस्य वीजकम् ।
घर्म्मेण शोधनञ्चैषां न दद्यादन्यशोधनम् ॥

पद्मवोरर गुटि रौद्रत शुकालेइ शुद्धिः ।

तिक्त कोषातकी दन्ती पटोली चेन्द्रवारुणी ।
कटूतुम्बी देवदाली काकतुण्डाञ्च शोधयेत् ॥
धात्रीफलरसेनैव घर्म्मे च शोधनं भवेत् ॥

तिक्त कोषातकी, सोन्दरपत्वाल, पटोलमूल, वृङ्कर, तितालाउ, घोषा, कोवाचुटि एषां धात्री रसे तियाइ रद्रत शुकाव ।

करञ्ज युगयोर्व्वीजं भृङ्गराजेन शोधयेत् ।

लेटागुटि, हाइठा, भृङ्गराज रसेन शुद्धिः ।

## अथ रसोनशुद्धिः १६

पक्वकन्दरसोनस्य गुड़िका निस्तुषीकृता ।
पातयित्वा च तन्मध्याद् दूरीकृत्य तदङ्कुरं ॥
तदुग्रगन्धनाशाय रात्रौ तक्रे विनिःक्षिपेत् ।
अपनीय च तन्मध्ये रात्रिधौतं भवेत् शुचिः ॥

सुन्दर पका नहरु आनि, वाकलि गुचाइ फालि अङ्कुर गुचाव । पश्चात् उग्रगन्ध गुचिव, तक्रत १ रति तियाइ थव, प्रातसे उष्णोदकेरे धुइ लव ।

## इति रसोनशुद्धिः ।

## अथ शक्राशन-शुद्धिः

दोलायन्त्रे पञ्चवारं पाचयेत् शुष्कयेदथ ।
दुग्धे वारद्वयञ्चैव पाचयेत् शुद्धिरुत्तमा ॥

जटीयामाङ्ग दोलायन्त्रेरे ५ बार सिजाइ शुकाव, पश्चात् दुग्धत २ बार सिजाव ।

---

१६ । रसोनः—

पञ्चभिश्च रसैर्य्युक्तो रसेनाम्लेन वर्जितः ।
तस्माद्रसोन इत्युक्तो द्रव्याणां गुणवेदिभिः ॥
कटुकश्चापि मूलेषु तिक्तःपत्रेषु संस्थितः ।
नाले कषाय उद्दिष्टो नालाग्रे लवणः स्मृतः ॥
बीजे तु मधुरः प्रोक्तो रसस्तद् गुणवेदिभिः ॥ —द्रव्यगुणे ।

## तद्बीजशोधनम्

भाङ्गवीजं समदाय घृतभृष्टं सुचूर्णितम् ।

भाङ्गरगुटि चूर्ण करि, घिउरे भाजिव ।

इति शक्राशन तद्बीजशोधनम् ।

## अथ जलौकाशोधनम्

चिरन्तनजलौकान्तु ताम्रपात्रेषु रक्षयेत् ।
चतुर्म्मासं निशाचूर्णं जलाष्टकपले क्षिपेत् ॥
तस्मिन् क्षिप्ते जलौका च स्वयं लालां परित्यजेत् ।
त्यक्तलालाजलौका या सा योज्या रक्तमोक्षणे ॥
रोमपृष्ठा च कपिला रक्तरेखा च दुर्व्वला ।
वर्ज्जनीया विशेषेण भिषजा कीर्त्तिमिच्छता ॥

सुन्दर बुढ़ा वलवन्त जोक आनि ताम्बर पात्रन थै ताते हालधिगुरि ४० रति, जल ८ पलरे ७ वार धुव ।

इति वैद्यकसारोद्धारे सर्वभेषजद्रव्यमारणशोधनं समाप्तम् ॥

विंशः परिच्छेदः

# रसायन-वाजीकरणोपदेशः

## ८८। अथ रसायन-वाजीकरणाधिकारः[१]

### आम्रखण्डः [ खण्डाम्रकम् ]

ॐनमो गणेशायः—पक्वचूतरसो द्रोणः पात्रं स्यात् शुद्धखण्डतः।
घृतमर्द्धं ततो ग्राह्यं चतुर्थांशञ्च नागरम्॥
तस्यार्द्धं मरिचस्यापि तदर्द्धं पिप्पली मता।
तोय खण्डसमं देयं सर्व्वमेकत्र संस्थित।
विपचेन्मृन्मये पात्रे यावद्दर्व्वीं प्रलेपनम्।
चूर्णान्येषां ततो दद्यात् पलं पलचतुष्टयं॥
ग्रन्थिकं चित्रकं मुग्तं धान्याकं जीरकद्वयं।
त्र्यूषणजाति तालीशचूर्णमेषां पृथक् पृथक्॥
त्वगेला केशराणाञ्च प्रत्येकञ्च पलं पलं।
सिद्धशीते च मधुनः प्रस्थार्द्धं सर्व्वमेकतः॥
सिद्धेषु पिण्डवत् कृत्वा शुद्धे भाण्डे निधापयेत्।
भोजनारयाग्रतः खादेत् पलञ्चैकं प्रमाणतः॥
शतञ्चापि शतार्द्धंवा रमेत् स्त्रियं पुमानिह।
मृतवत्सा च या नारी या च गर्भोपघातिनी॥
या प्रसूते सुतं रम्यं प्लीहान यकृदामयं।
रक्तपित्ताम्लपित्ते च वातरोगं गलामयं॥

१। यज्जराव्याधि-विध्वंसि भेषजं तद् रसायनम।
पूर्व्वे वयसि मध्ये वा शुद्धकायः समाचरेत्॥ —चक्रदत्त।

ऋतुहरीतकी—
वर्षादिष्वभया सेव्या रसायनगुणैषिणा।
सिन्धूत्थ शर्करा शुण्ठी कणामधुगुडैः क्रमात्॥ —चक्रदत्त।

दुर्नामासृग्दरश्चैव पाण्डुरोगं सकामलं।
हृद्रोगञ्च शिरःशूलमानाहमतिदारुणम् ॥
यः पुमान् कृतसेवी च भवेन्मारुत-विक्रमः।
खण्डाम्रकमिदं नाम वाजीकरणमुत्तमम् ॥

पक्काम्र २५ सेर, चिनि ६ सेर १२ तोला, घृत ३ सेर ६ तोला, शुण्ठी चूर्ण ६२ तोला, मरिच चूर्ण ३० तोला, पिप्पली चूर्ण १५ तोला, जल ६ सेर, सिद्धे पाके, पिप्पली मूल, चित्रक, मथा, धनीया, जीरा दुविध, त्रिकटु, जातिपत्री, दारुचिनि, एलाचि, तालीशपत्र, नागकेशर, एषां प्रति १ पल शीते मधु २ सेर दिव। आम्रखण्डः ॥

## चतुर्म्मुखोरसः

रसगन्धक लोहाभ्रं समं सूताङ्घ्रि हेम च।
सर्व्वं खल्वतले क्षिप्त्वा कन्याखरसमर्द्दितम् ॥
भावयेन्मूषली-रम्भा विदारी गोक्षुरद्रवैः।
एरण्ड-पत्रैरावेष्ट्य धान्यराशौ दिनत्रयं ॥
संस्थाप्य च तदुद्धृत्य त्रिफला-मधुयोजितम्।
एतद् रसायनवरं सर्व्वरोगेषु योजयेत् ॥
तद् यथाग्निवलं खादेद् वलीपलितनाशनम्।
क्षयमेकादशविधं कासं पञ्चविधन्तथा ॥
कुष्ठमष्टादशाख्यञ्च पाण्डुरोगान् प्रमेहकान्।
शूलं श्वासञ्च हिक्काञ्च मन्दाग्नित्वमरोचकम् ॥
व्रणान् सर्व्वानाढ्यवातं विसर्प-विद्रधिन्तथा।
अपस्मार-ग्रहोन्मादान् [महोन्मादं] सर्व्वार्शांसिगुदामयान्।
क्रमेण शीलितं हन्ति वृक्षमिन्द्राशनिर्य्यथा ॥
जगताञ्च हितार्थाय चतुर्म्मुख-मुखोदितः।
रसश्चतुर्म्मुखो नाम चतुर्म्मुख इवापरः ॥

रस १ तोला, गन्धक १ लौह १ अभ्र १ सकलोरे एकटका सुवर्ण एमहा, सबाके शिलापात्रत मर्द्दि भावना दिव। घालकुमारीर रसत ७ दिन, नागिनीमूर वन्धार रसत ७ दिन, पुराकलर आलुर रसत ७ दिन, पताली कोमोरार रसत ७ दिन, गोखुर कटार क्वाथत ७ दिन, एरापातेरे टोपोला वान्धि थव धानुधानर भितरत ३ दिन, तारपरा तुलि त्रिफला मधुरे खाव।

इति चतुर्मुखोरसः।

## श्रीमहानीलकण्ठो रसः

पलैकं नागभस्माथ भावयेत् तिमिपित्ततः ।
तत्रार्गं सुमृतं स्वर्णं तोलैकं तत्र दापयेत् ॥
द्विपलं [ त्रिपलं ] भस्मसूतस्य त्रिपलं मृतमभ्रकम् ।
त्रिपलं लौहभस्माथ सर्व्वमेकत्र कारयेत् ॥
भावयेच्च पृथक् कन्या ब्राह्मी निर्गुण्डिका शमी ।
मुण्डी शतावरी च्छिन्ना कोकिलाक्षस्य वीजकैः ॥
मुषली वृद्धदाराग्नि द्रवैर्भिर्भिषग् वरः ।
ततः संयोजयेत् चूर्णं तुल्यमेकादशाभिधम् ॥
वराव्योषाब्दवह्न्येला जातीफललवङ्गकम् ।
पूजयेद् वृषपुष्पाद्यैर्नीलकण्ठं महेश्वरम् ॥
द्विगञ्जालं [ रक्तिकां ] भजेदेनं मृत्युञ्जयं समुस्मरन् ।
क्षयमेकादशविधं ग्रहणीं रक्तपित्तकम् ॥
अशीतिं वातजान रोगान् चत्वारिंशच्च पैत्तिकान् ।
हन्ति सर्व्वामयानेव कामिनीनां शतं व्रजेत् ॥
एकविंशति रात्राद्धं परिहार्य्यं त्यजेदिह ।
यथेष्टाहारचेष्टोऽपि कन्दर्पसदृशो नरः ॥
जराजीर्णोऽपि जीवेत रोगक्लीष्टोऽपि मानवः ।
मेधावी वलवान प्राज्ञो वह्नाशी भीमविक्रमः ॥
तेजस्वी पुत्रवान् धीरः सूतस्यास्य प्रमादतः ।
पुत्रार्थिनी तथा नारी सैव पुत्रं प्रसूयते ॥
दौर्भाग्यादि महादोषास्तस्या नश्यन्ति सेवया ।
अस्य सूतस्य माहात्म्यं वेत्ति शम्भुर्न चापरः ॥

शिङ्गुपित्त भावित, सीसाभस्म १ पल, स्वर्ण १ तोला, रससिन्दूर ३ पल, लौहभस्म ३ पल, अभ्रभस्म ३ पल, सवाके एकत्र करि, रौमाछर पित्ते भावना दि ७ वार, चालकुमारीरसेरे ७ दिन, मालमोगशाक ७, पचतीयार रस ७, समिधर रसेरे ७, मूरफुलारसेरे ७, शतमूलर रसेर ७, आमैलतार रसेरे ७, हारजोरोवार गुटिरे ७, नागिनी मूरवान्धा रसेरे ७, टूकरोया लतार रसेरे ७, आगिया चितार रसेरे ७ वार, एखवोरेरे भावना दि पाचे एतेषां चूर्णं दत्वा, त्रिफला चूर्ण २२ तोला, त्रिकटु २२ तोला, मथा ७ टका ११ रति, आगियाचिता ७ टका ११ रति, एलाचि ७ टका ११ रति, जातीफल ७ टका ११ रति, लवङ्ग ७ टका

११ रति, एइवोरर चूर्ण दि वरि वान्धिव, पाचे वासकर फुलेरे महादेवक पूजा करिव। तथा व्याधिहर क्वाथेरे दिगव्याल खाव ( २ रति खाव )।

## इति श्रीमहानीलकण्ठो रसः ॥

## महाभ्रवटिका

अभ्रकं पुटितं ताम्रं लौहं गन्धकपारदम्।
कुनटी टङ्कनक्षारं त्रिफला च पलं पलं॥
गरलस्य तथा माषचतुष्कञ्चैव चूर्णितं।
दृढ़े पाषाणपात्रे च भूयोभूयः सुचूर्णितम्॥
तत् सर्व्वं भावयेदेषां रसैः प्रत्येकशः पलैः।
देवराजाशनाख्यस्य केशराजाख्यकस्य च॥
सोमराजस्य भृङ्गाख्यराजस्य श्रीफलस्य च।
पारिभद्राग्निमन्थस्य वृद्धदारस्य तुम्बुरोः॥
मण्डूकपर्णी निर्गण्डी-पूतिकोन्मत्तकस्य च।
श्वेतापराजितायाश्च जयन्त्याश्चित्रकस्य च [जयन्त्याश्चार्द्रकस्य च]॥
ग्रीष्मसुन्दरकस्याटरुषकस्य रसेन तु।
रसैस्ताम्बुलवल्ल्या च पत्रोत्थैर्भावयेत् पृथक्॥
द्रवे किञ्चित् स्थिते चूर्णं मरिचस्य पलं क्षिपेत्।
ततश्चैव वटीं कुर्य्याच्चतुस्त्रिद्वेयकरक्तिकां॥
[ ततश्चैव वटीं कुर्य्यान्मात्रां दद्याद् यथोचिताम् ]॥
ज्वरे चैवातिसारे च कासे श्वासे क्षये तथा।
सन्निपाते ज्वरे चैव विविधे विषमे ज्वरे॥
क्षयरोगेषु सर्व्वेषु क्षीणशुक्रे च यक्ष्मणि।
ग्रहण्यां चिरजातायां सूतिकायां विशेषतः॥
शोथे शूले तथाऽसाध्ये स्थविरे चामवातके।
मन्दानलेऽवले चैव सकले श्लेष्मजे गदे॥
पीनसेऽपीनसे चैव पक्वेऽपक्वे विशेषतः।
अजीर्णे कर्णरोगे च स्थौल्येऽपि कृशदेहिनि॥
वातश्लेष्मणि वाते च विवद्धे च क्षये तथा।
अष्टासूदररोगेषु कोष्ठरोगे प्रशस्यते॥
अयं सर्व्वगदेष्वेव रसो वै परिकीर्त्तितः।

रसायनवरः प्रोक्तः वाजीकरणमुत्तमः ।
महाभ्रकमिदं ब्रह्मन् कमनीयकमीरितम् ॥
य इह सकलकालं कल्पकामं करोति ।
सरिषपपरिमाणं नित्यमभ्यास-योगात् ॥
स खलु विपुलरोगान् जित्वा रोगविमुक्तो ।
भवति पलितहीनः सप्तकल्पान्तजीवी ॥

अभ्र १ पल, ताम्र १ पल, लोहा १ पल, गन्धक १ पल, रस १ पल, मनःशीला १ पल, सुवगा १ पल, त्रिफला ३ पल, शोधित विष ॥० तोला, सर्व्वमेकीकृत्य एषां रसैर्भावयेत् प्रत्येक रस १ पल, सिद्धि पत्ररसेरे ७ दिन, केह-राजर रसेरे ७ दिन, सोमराज रसेरे ७ दिन, भृङ्गराजर रसेरे ७ दिन, बिल्वपत्र रसेरे ७ दिन, निम्बपत्र वा मदारर पत्रर रसेरे ७ दिन, गणियारी रसेरे ७ दिन, टुकरीया ललार रसेरे ७ दिन, तुम्बुरु रसेरे ७ दिन, मानिमुनि रसेरे ७ दिन, पचतीयार रसेरे ७ दिन, लाटामूलर रसेरे ७ दिन, धुतुरार रसेरे ७ दिन, श्वेतापराजिता ७, जयन्ती ७, चितार ७ अथवा आद्रकेर ७, आगिया ललार रसेरे ७, वाहकर रसेरे ७, पागर रसेरे ७ दिन प्रत्येक रस १ पल भावना दि किञ्चिद् द्रवे स्थिते, जालुकचूर्ण १ पल दि मर्द्दन करि १ रति, २ रति वा वटी कार्य्या । नित्य खाने सरियह परिमाण, यथा व्याधिहर अनुपानेरे ।

## इति महाभ्रवटिका ।

## शृङ्गाराभ्रम्

शुद्धं कृष्णाभ्रचूर्णं द्विपलपरिमितं शानमानं यदन्यत्
कर्पूरं जातिकोषं मजलामिभकणातेजपत्रं लवङ्गम् ।
मांसी तालीशचोचे गजकुसुमगदं धतकी चेति तुल्यम्
पथ्याधात्री विभीतं त्रिकटुरथ पृथक् त्वर्द्ध, शानं द्विशानम् ॥
एलाजातीफलाख्यं चिततलविधिना शुद्धगन्धाश्च कोलम्
कोलार्द्धं पारदस्य प्रतिपदविहितं पिष्टमेकत्र मिश्रम् ।
पानीयेनैव कार्य्या परिणतचनकस्विन्नतुल्याश्च वट्यः
प्रातः खाद्याश्चतस्रस्तदनु च हि कियच्छृङ्गवेरं सपर्णम् ॥
पानीयं पीतमन्ते ध्रुवमपहरति क्षिप्रमेतान् विकारान्
कोष्ठे दुष्टाग्निजातान् ज्वरमुदररुजो राजयक्ष्मक्षयञ्च ।
कासं श्वासं सशोथं नयनपरिभवं मेहमेदोविकारान्
छर्द्दिं शूलाम्लपित्तं तृषमपि महतीं गुल्मजालं विशालम् ॥
पाण्डुत्वं रक्तपित्तं गरगरलगदान् पीनसान् प्लीहरोगान्
हन्यादामाशयोत्थान् कफपवनकृतान् पित्तरोगानशेषान् ।

वल्योवृष्यश्चयोग्यस्तरुणतरकरः सर्व्वरोगे प्रशस्तः
पथ्यं मांसञ्च यूषैर्घृतपरिपुलितैर्गव्यदुग्धैश्च भूयः ॥
भोज्यं योज्यं यथेष्टं ललितललनया दीयमानं मुदा यत्
शृङ्गाराभ्रेण कामी युवतीजनशताभोगयोगात्तुष्टः ।
वर्ज्यं शाकान्नमादौ दिनकतिपयचित् स्वेच्छया भोज्यमन्यत्
दीर्घायुः काममूर्त्तिर्गतवलिपलितो मानवोऽस्य प्रसादात् ॥

कृष्णाभ्र २ पल, काफुर, जाइपत्री, सुगन्धवाला, गजपिप्पली, तेजपत्र, लवङ्ग, जटामांसी, तालीशपत्र, दालचिनि, नागकेशर, कुर, धाइफुल, एतेषां प्रति आधा तोलाके, शिलिग्वा, मोमोरा, आमलखी, आलुक, पिप्पली, आदा, एषां पयणां प्रति एमहाके, एलाचि, जातीफल, पातालीयन्त्र शोधित गन्धक एषां त्रीणां प्रति एटकाके, शुद्धरस आधा तोला, द्वयोः कज्जलीकृत्य, सर्व्वं चूर्ण एकत्र करि पानोरे वटी कार्य्या सिद्ध चनक प्रमाणा, अतः शृङ्गवेर पर्ण पत्राभ्यां प्रातः खादम् । अहरान्तरं किञ्चित् पानीयं पीतं ।

## इति शृङ्गाराभ्रं ।

## मकरध्वजो रसः

स्वर्णादष्टगुणं सूतं मर्द्दयेत् त्रिसुगन्धकं ।
रक्तकार्पासकुसुमैः कुमार्य्यद्भिर्विमर्द्दयेत् ॥
शुष्कं काचघटीं रुद्ध्वा वालुकायन्त्रगं पचेत् ।
भस्म कुर्य्याद् रसेन्द्रस्य नवार्क किरणोपमम् ॥
भागोऽस्य[एकोऽस्य]भागाश्चत्वारः कर्पूरस्य सुशोभनाः ।
लवङ्गं मरिचं जातीफलं कर्पूरमात्रया ॥
मेलयेन् मृगनाभिञ्च गद्यानक२मितं ततः ।
श्लक्ष्णपिष्टो रसो नाम जायते मकरध्वजः ॥
वल्लं वल्लद्वयं वाथ ताम्बुली दलसंयुतम् ।
भक्षयेन्मधुरं स्निग्धं मृदुमांसमवातलं ॥
शृतशीतं सितायुक्तं दुग्धं गोभवमाज्यकम् ।
मध्वाद्यं पिष्टमपरं मद्यानि विविधानि च ॥

२। अत्र गद्यानकं, षणमाषकं। वल्लं, द्विगुञ्जकं। एतदर्थे परिभाषामाह—
यवद्वयेन गुञ्जास्याद्, द्विगुञ्जो वल्ल उच्यते ।
धरणः स्याच्चतुर्माषैः, षड्भिर्गद्यानमुच्यते ॥ —आयुर्व्वेदसंग्रहे देवेन्द्रः ।

करोत्यग्निबलं पुंसां वलीपलितनाशनः।
मेधायुः कान्तिजननः कामोद्दीपनकृन्महान् ॥
अभ्यासात् साधकः स्त्रीणां शतं जयति नित्यशः।
रतिकाले च रत्यन्ते पुनः सेव्यो रसोत्तमः ॥
मानहानिं करोत्येष प्रमदानां सुनिश्चितम्।
कृत्रिमं स्थावरविषं जङ्गमं विषवारि च ॥
न विकाराय भवति साधकानाञ्च वत्सरात्।
मृत्युञ्जयो यथाभ्यासान्मृत्युं जयति देहिनां ॥
तथायं साधकेन्द्रस्य जरा मरणनाशनः ॥

स्वर्ण १ भाग, रस ८ भाग, गन्धक ३ भाग, रक्त कार्पास पुष्प, चालकुमारी द्वयोः स्वरसे, त्रिदिनानि भावयित्वा, काचकूप्यां धृत्वा वालुकायन्त्रे द्वादश प्रहरं पचेत्।

**इति मकरध्वजो रसः।**

## श्रीमदन [ कामदेव ] रसः

तारमभ्रं सुवर्णञ्च ताम्रं सूतक-गन्धकं।
लौहञ्च क्रमवृद्धानि कुर्य्यादेतानि मात्रया ॥
विमर्द्दय कन्यकाद्रावैर्न्यसेत् काचमये घटे।
एतच्च पिठरिमध्ये धारयेत् सैन्धवैः घृतैः ॥
पिठरिं मुद्रयेत् सम्यक् ततः चुल्ल्यां निवेशयेत्।
वह्निं शनैः शनैः कुर्य्याद्दिनैके तत उद्धरेत् ॥
स्वाङ्गशीतञ्च संचूर्ण्य भावयेदाविदुग्धकैः।
अश्वगन्धा च काकोली वानरी मुषली क्षुरैः ॥
सिन्दुवार रसं दत्वा शतावर्य्याथ भावयेत्।
पद्मकन्द रसेनैव काशमर्द्दैश्च भावयेत् ॥
कस्तूरीव्योष कर्पूर कक्कोलैला लवङ्गकं।
पूर्व्वं चूर्णादष्टमशं एतच्चूर्णं विमिश्रयेत् ॥
सर्व्वैः समां शर्कराञ्च दत्वा शानोन्मितं लिहेत्।
गोदुग्ध-द्विपलेनैव मधुराहार-सेविनः ॥
यस्य प्रभावात् सौन्दर्य्यं बलं तेजो विवर्द्धते।
तरुणी रमयेद् बह्वीर्न च हानिः प्रजायते ॥

रूप १, अभ्र २, सुवर्ण ३, ताम्र ४, रस ५, गन्धक ६, लोहा ७, एतानि सप्तद्रव्यानि, घालकुवरीरे सम्मर्द्य काचघटे न्यसेत्, मूषायां सैन्धवं घृतं दत्वा मुद्रयेत्, पश्चाद् वालुकायां स्थाल्यां, चुल्यां संस्थाप्य शनैः शनैर्वह्निं दिनमेकं दद्यात् सिते सचूर्णं एषां रसैर्भावयेत् छागी दुग्धेरे ३ वार, अश्वगन्धार रसेरे ३ वार, काकोली रसेरे ३, वान्दर केकोवार रसेरे ३, नागिनीमूर वन्धारसेरे ३, गोखुरकटार काथेरे ३, पचतीयार रसेरे ३, शतमूलर रसेरे ३, मृगालर रसेरे ३, अकलविरर रसेरे ३। पश्चात् गन्धकलाइ, त्रिकटु, कर्पूर, कक्कोल, एलाचि, लवङ्ग एषां चूर्णं १ भाग, पूर्व्व चूर्ण ७ भाग सर्व्वं सम्मिश्रय, सर्व्वं समां शर्करां दत्वा, पात्रे संस्थाप्य, पश्चात् ४० रति, गोदुग्ध द्विपनेन खाद्यं पथ्याशी।

इति श्रीमदन [ कामदेव ] रसः।

## कामिनीमदभञ्जनो रसः ३

शुद्धसूतं समं गन्धं त्र्यहं कह्लारकद्रवैः।
मर्द्दितं वालुकायन्त्रे यामं संपुटके पचेत्॥
रक्ताङ्गस्य द्रवैर्मर्द्यं दिनैकन्तु मितायुतं।
यथेष्टं भक्षयेच्चानु कामयेत् कामिनीशतम्॥

शुद्ध रस ८ तोला, शुद्ध गन्धक ८ तोला उभो कज्जलीं [ रक्तपद्मर चकार स्वरसेरे मर्द्दित्वा ] वगा भेटफुलर रसेरे मर्द्दित्वा, मूषायां धृत्वा वालुकायन्त्रे पचेत्। उद्धृत्य कुङ्कुमर जले, रक्त पद्म रसेरे सप्तदिन भावना दि, चेनिर ४ रति प्रमाणे खाद्यं।

इति कामिनीमदभञ्जनो रसः।

## अनङ्गसुन्दरो रसः

पलद्वयं द्वयं शुद्धं पारदं गन्धकन्तथा।
मृतहेम्नस्तु कर्षैकं कर्षैकं मृतताम्रकं॥
मृततारञ्च कर्षैकं मर्द्यं पञ्चामृतैर्द्दिनम्।
वद्ध्वा तुषैः पुटेत् पश्चाद्दिनैकञ्च समुद्धरेत्॥
पिष्ट्वा पञ्चामृतैः कुर्य्याद् वटिकां वदराकृतिम्।
अनङ्गसुन्दरं खादेद् रमेद् रामाशतं परम्॥

शुद्ध रस २ पल, शुद्ध गन्धक २ पल, मारित सुवर्ण २ तोला, मृत ताम्र २ तोला, रौप्य २ तोला, पञ्चामृतैर्द्दिनमेकं सम्मर्द्य मूषायां वद्ध्वा तुषे द्दिनमेकं पुटेत्। तदुद्धृत्य पञ्चामृतैः पिष्ट्वा वदराकृतिं वटीं कुर्य्यात्। क्षीर सिताभ्यामनुपिवेत्।

इति अनङ्गसुन्दरो रसः।

३। रसेन्द्रसारसंग्रहे कामिनीमदभञ्जनरसस्य नामान्तरं अनङ्गसुन्दरोरसः। अत्र रक्ताङ्गस्य स्थले रक्तागस्त्य सितायुतमित्यत्र च सिताम्बुजैरिति पाठभेदो दृश्यते।

## पूर्णचन्द्रमोदकः

शाल्मलीमुषलीयष्टि-विदारी-मधुयष्टिका ।
भृङ्गीमोचरसाशृङ्गी-वानरीवीजजीरके ॥
तालाङ्कुरोनागवला वलाजातीफलानि च ।
धात्रीमधुरिकाधान्यं चातुर्य्यातं त्रिकण्टकं ॥
श्वेतापुनर्णवा द्राक्षा कशेरुकुङ्वस्तिलाः ।
चूर्णांशं शुद्धगन्धञ्च गन्धकार्द्धं मृताभ्रकम् ॥
अभ्रतुल्यं ततो देयं सूतमादाय चोत्तमम् ।
शाल्मलीमूलतोयेन सर्व्वमेकत्र भावयेत् ॥
त्रिवारं भावयित्वा तु श्लक्ष्णचूर्णानि कारयेत् ।
चूर्णतुल्या सिता देया तत्तुल्यं मधुसर्पिषोः ॥
मोदकः पूर्णचन्द्रोऽयं वाजीकरणशेखरः ।
शानमात्रं गवां क्षीरैः प्रपिवेच्च सितान्वितैः ॥
त्रिसप्तदिवसैः क्षीणो भवेदक्षयधातुकः ।
क्षीणचन्द्रो यथा पुष्टिं लभते च दिने दिने ॥
तथा च लभते क्षीणस्तेजवीर्य्यवपुर्व्वलम् ।
प्रमदासेवने क्षेमः क्षयकास-क्षयकारकः ॥
मोदकः पूर्णचन्द्रोऽयं रमनीचित्तहारकः ।
आह्लादयति शास्त्राणि सेव्यमानो जनेन वै ॥

शिमलुछाल, नागिनो मूरवन्धार आलु, मञ्जिष्ठा, पातालीकुष्माण्ड, यष्टिमधु, भृङ्गराज, शिमलुर आठा, काकड़ाशृङ्गी, वान्दर केकोवार गुटि, मोगजीरा, कालजीरा, तालाङ्कुर कुकुरसूता, सोणवरियाल, जाइफल, आमलकी, गुवामरि, धनीया, दालचिनि, एलाचि, तेजपत्र, नागकेशर, गोखुरकाटा, श्वेतपुनर्णावा, द्राक्षा केहेल, कूर, [ गोखुरकटा गुटि शतमूल ] सर्व्वेषां सममाग चूर्णा चूर्णार चतुर्थांश गन्धक गन्धकार्द्ध मृताभ्रं, अभ्रतुल्यं सूतं सर्व्वं शाल्मली मूल तोयैस्त्रिम वयेत्; पुनः संचूर्ण्य तुल्या सिता देया, मधुसर्पिषोस्तु तुल्यं शानमात्रं गवां क्षीरैः सितायुक्तैः पिवेत्; शानं ४० रति ।

### इति पूर्णचन्द्रमोदकः ।

## कामदेवमोदकः

पलं गोक्षुरवीजस्य द्विपलं कपिकच्छुकं ।
पलं नागवलामूलं पलमेकं शतावरी ॥

विदारी कन्दचूर्णन्तु पलद्वयं तथा बला ।
द्विपलं त्रपुषीवीजं वाजिगन्धा पलत्रयं ॥
त्रिसुगन्धं कणा धात्री लवङ्गं नागकेशरं ।
सर्व्वेषाञ्च गुड़िं कृत्वा शर्करा समयोजितम् ॥
नष्टशुक्रदजं हन्ति मूत्रकृच्छ्राणि यानि च ।
शतं गच्छेत् नारीणां हयतुल्यः सुवीर्य्यवान् ॥
कामदेवमिदं नाम धन्वन्तरि-विनिर्म्मितम् ॥

गोक्षुरवीज १ पल, कपिकच्छु २ पल, कुकुर सनारमूल १ पल, शतावरी १ पल, पताली कोमोरा १ पल, सोयावरियाल २ पल, त्रिकोपवीज २ पल, अश्वगन्धा ३ पल, दालचिनि १ पल, एलाचि १ पल, तेजपत्र १ पल, पिप्पली १ पल, आमलकी १ पल, लवङ्ग १ पल, नागकेशर १ पल, सर्व्वचूर्णमेकीकृत्य सर्व्वसम शर्करां दत्वा, खल्लयित्वा, तोलकमाना क्षीर-सितामनुपिवेत् ।

इति कामदेवमोदकः ।

## रतिवल्लभमोदकः

समूलदलशाखस्य तुलां शक्राशनस्य च ।
संगृह्योदुखले छित्वा अपां द्रोणद्वये पचेत् ॥
क्वाथ पादावशिष्टञ्च वस्त्रपूतञ्च कारयेत् ।
क्षीरप्रस्थं समावाप्य खण्डस्यार्द्धशतं [ न्यसेत् ] पलम् ॥
शतावरीरसप्रस्थः पिप्पल्याः कुड़वन्तथा ।
सर्व्वमेतत् समालोड्य घृतप्रस्थेन पाचयेत् ॥
औषधानां ततश्चूर्णं दापयेत् पलिकं पृथक् ।
त्रिकटुत्रिफलाचव्यामलात्वक् पत्रकेशरम् ॥
चित्रकं पिप्पलीमूलं धान्यकाजाजीमेथिका ।
कुष्ठं हरेणु हाव्योषं भार्गीतालीशकेशरम् ॥
तालमूली त्रिवृद्दन्ती श्रेयसी हिङ्गुपौष्करं ।
लवङ्गं जातीकोषञ्च यमानी कारवी तथा ॥
लौहं तालं तथा रङ्गमभ्रकञ्च प्रदापयेत् ।
शुभाजातीफलं चन्द्रं भृङ्गी चैव विदारिका ॥
अष्टवर्गञ्च कक्कोलं श्लक्ष्णचूर्णञ्च कारयेत् ।
गुड़वद् विपचेद् वैद्यो मोदकं कारयेत्ततः ॥

तोलकं कारयित्वा तु शीतलं पाययेज्जलम् ।४
नाशयेत् शुक्रदोषञ्च प्रमेहञ्चातिदारुणम् ॥
क्षीणशुक्रोऽपि शुक्राढ्यो भवेन्मारुतविक्रमः ।
सेव्यमानो भवेत् कान्तिः स गच्छेत् प्रमदाशतम् ॥
द्विसप्ताहप्रयोगेण कन्दर्पसदृशो भवेत् ।
सम्वत्सरप्रयोगेण वलीपलितवर्जितः ॥
हन्त्यष्टादशकुष्ठानि शुक्रदोषं विशेषतः ।
मूत्राघातञ्च दग्धञ्च आमवातञ्च दारुणम् ॥
ग्रहणीं कामलां पाण्डुं शोथं कासं ज्वरन्तथा ।
यक्ष्माणञ्च क्षयं श्वासं स्वरघातन्तथैव च ॥
अम्लपित्तं तथा शूलमग्निमान्द्यञ्च विड्ग्रहं ।
भक्षितं देवदेवेन मोदकं रतिवल्लभं ॥
श्रीकरं लाघवकरं मेधावृद्धिविवर्द्धनम् ॥

मूलपत्र अग्रसहित माङ्ग १० सेर, पानी ५१ सेर १६ टका, शेष १२ सेर ३ पोवा ४ टका, वस्त्रे रे चेकि क्काथ लव। दुग्ध ६ पोवा ८ टका, खगाउ ५० पल ( ६।० सेर ), शतमूलर रस ६ पोवा ८ टका, पिप्पली १ पोवा १२ टका, सकलो एकत्र करि घृत ६ पोवा ८ टकाये सिद्ध करिव। तत एतेषां चूर्णं दद्यात्। त्रिकटु, त्रिफला, चै, आमला, दालचिनि, तेजपत्र नागकेशर, चिना, पिप्पलीमूल, धनीया, मोगजीरा, मिथि, कूर, रेणुका, हवुप, अकलविर, तालीशपत्र, तालमूली, तेलियाधूना, सोन्दरपग्वाल, गजपिप्पली, हिङ्गु, पौष्करमूल, लवङ्ग, जाइपत्री, यमानी, वनयमानी, लौह, हरिताल, राङ्ग, अभ्र, वंशलोचन, जातीफल, इन्द्रयव, काकटाश्रृङ्गी, पतालीकोमोरा, अष्टवर्ग, अष्टवर्गेर अभावत शतमूल, पतालीकोमारा, अश्वगन्धामूल, वाराहिकन्द, एतद् द्रव्यं दत्वा कक्कोल, एषां समभागं चूर्णं दत्वा, गुड़र निचिनाके वेधे पाक करिव। १ टका के खाब शीतल जल अनुपान।

## रतिवल्लभमोदकः ( अन्यप्रकारः )

शक्राशनस्य वीजानि चूर्णयित्वा पलाष्टकं ।
शतावरीरसप्रस्थं प्रस्थं शक्राशनस्य च ॥
अजायाश्च पयः प्रस्थं खण्डप्रस्थद्वये पचेत् ।
धात्री द्विजीरकं मुस्तं त्वगेलापत्रकेशरम् ॥

४। तथा०च—मेदा जीवक काकोली ऋद्धिद्वन्द्वे च चासति ।
वरी विदार्य्यश्वगन्धा वाराही च क्रमात् क्षिपेत् ॥

आत्मगुप्ता चातिवला तालाङ्कुरकशेरुकं ।
शृङ्गाटकं त्रिकटुकं लवङ्गं धान्यकन्तथा ॥
जातीफलं तथा द्राक्षाकाकोल्यौक्षुरकुन्तथा ।
कटुकामधुकं कुष्ठं लवङ्गं सारसैन्धवम् ॥
वाट्यालकञ्चाश्वगन्धा करिकर्णपलाशकम् ॥
रसगन्धकमभ्रञ्च लौहञ्च कर्षसम्मितम् ।
कुडवार्द्धं घृतञ्चैव माक्षिकञ्च तदर्द्धकम् ॥
मृगाण्डजानि कर्पूरं यथालाभं विनिःक्षिपेत् ।
मोदकं कर्षमेकन्तु शुभेऽह्नि परिकल्पयेत् ॥
रतिवल्लभनामेदं सेव्यमानं रसायनं ।
परमौजस्करं वल्यं परं वातहरं मतम् ॥
येषां गृहेषु वहुशः स्त्रियःसन्ति मनोरमाः ।
तेन सेव्यं सदा चेदं सम्यक् च रतिरतिवर्द्धनम् ॥
न भवेल्लिङ्गशैथिल्यं शुक्रस्य क्षयहेतुकं ।
वातगुल्महरञ्चैव वृद्धानां तुष्टिकारकम् ॥
नाशयेद् ध्वजभङ्गादीन् वह्निमान्द्यञ्च नाशयेत् ॥

इति वैद्यकसारोद्धारे रसायनवाजीकरणाधिकारः ॥

एकविंशः परिच्छेदः

# अभावे द्रव्यग्रहणोपदेशः

## ८९। अथ अभावे द्रव्यग्रहणम्[१]

मध्वभावे गुड़ोजीर्णः शाल्यभावे च षष्टिका ।
अङ्गेऽनुक्ते जटा देया पात्रेऽनुक्ते च मृन्मयं ॥

मधुर अभावत पुरातन गुड़, शालिर अभावत षष्टिका। औषधर अङ्ग उक्त नहले मूल दिव, पात्रर उक्त नहले मृत्तिकार पात्र।

भागेऽनुक्ते तु साम्यं स्यात् कालेऽनुक्ते प्रभातकम् ।
चित्रकाभावतो दन्ती क्षारः शिखरिजोऽथवा ॥

भाग उक्त नहले समभाग, कालर उक्त नहले प्रभात। चितार अभावत सोन्दरपग्वाल, अथवा अपामार्ग क्षार दिव।

तगरस्याप्यभावे त कुष्ठं दद्याद् भिषग्वरः ।
मूर्व्वाभावे त्वचो ग्राह्या जिङ्गिनी प्रभवा बुधैः ॥

तगरर अभावत कुर दिव, बनरिहार अभावत मजाठि दिव।

लक्ष्मणाया अभावे तु नीलकण्ठशिफा मता ।
वकुलाभावतो दद्यात् कह्लारोत्पल पङ्कजं ॥

कामलगरार अभावत, नीलकण्ठर शिपा दिव ; बकुलफुलर अभावत, पभरचका, पङ्कजर अभावत उत्पल।

नीलोत्पलस्याभावतः कंकुष्टं देयमिष्यते ।
जातिपुष्पं न यत्रास्ति लवङ्गन्तत्र दीयते ॥

कलाभेटर अभावत, वगाभेट दिव ; जातिपत्रीर अभावत लवङ्ग दिव।

---

१। कदाचिद् द्रव्यमेकं वा योगे यत्र न लभ्यते ।
तत्तद् गुणयुतं द्रव्यं परिवर्त्तेन गृह्यते ॥ —परिभाषाप्रदीपे।
यच्चान्यद् द्रव्यमप्राप्तं भेषजे परपूर्व्वत ।
ग्राह्यं तद्गुण साम्यात्तु न तत्र क्वापि दूषणम् ॥ —आयुर्व्वेदसंग्रहे देवेन्द्रः।

अर्कपर्णादिपयसोह्यभावे तद्रसो मतः ।
पौष्करामावतः कुष्ठं लवङ्गस्याप्यभावतः ॥

आकण एठार अभावत, आकणार रस दिव, पुष्करमूलर अभावत कुर दिव, लवङ्गर अभावत कुर दिव

स्थौनेयकस्य चाभावे भिषग्भिर्दीयते गदः ।
चविकागजपिप्पल्योः पिप्पलीमूलमेव च ॥

वर एलाचिर अभावत कुर दिव ; चौ, गजपिप्पलीर अभावत पिप्पली मूल दिव ।

अभावे सोमराजस्य प्रपुण्णाड़फलं समम् ।
यदि नस्याद् दारु निशा तदा देया निशा बुधैः ॥

सोमलतार अभावत मेदेलुवा दिव । आचुकाठर अभावत हरिद्रा दिव ।

रसाञ्जनस्याभावे तु सम्यग् दारुः प्रयुज्यते ।
[ रसाञ्जनस्य चाप्राप्तौ दार्व्वीक्काथं प्रयोजयेत् ] ।
सौराष्ट्राभावतो देया स्फटिका तद्‌गुणा जनैः ॥

रसाञ्जनर अभावत उपैकाठ दिव, सौरास्त्र मृत्तिकार अभावत फिट्किरि दिव ।

तालीशपत्रकाभावे स्वर्णतालीश इष्यते ।
भार्ग्यभावे तु तालीशं कण्टकारी जटा तथा ॥

अकलबिरर अभावत तालीश दिव, तालीशर अभावत कण्टकारी मूल ।

रुचकाभावतो दद्याल्लवणं पांशुपूर्व्वकम् ।
अभावे मधुयष्ट्यास्तु धातकीञ्च प्रयोजयेत् ॥

पञ्चलोयार अभावत सैन्धवलवण, मधुयष्टिर अभावत धाइफुल दिव ।

अम्लवेतसकाभावे शुष्कं दातव्यमिष्यते ।
द्राक्षा यदि न लभ्येत प्रदेयं काश्मरीफलम् ॥

थेकेरा फलर अभावत शुख थेकेरा दिव । द्राक्षार अभावत गमारी गुटी ।

लवङ्गकुसुमं देयं नखस्याभावतः पुनः ।
कक्कोलं दीयते नित्यं कस्तुर्य्यभावतो बुधाः ॥

नखीर अभावत लवङ्गफल दिव । कस्तूरीर अभावत कक्कोल दिव ।

ककोलस्याप्यभावे तु जातीपुष्पं प्रदीयते ।
कर्पूराभावतो देयं सुगन्धमुस्तकं वुधैः ॥

ककोलर अभावत जाइपत्री दिव । काफुरर अभावत गाठियया वा सुगन्ध मथा दिव ।

कुङ्कुमाभावतो दद्यात् कुसुम्भ प्रसूनं नवम् ।
श्रीखण्ड चन्दनाभावे कर्पूरं देयमिष्यते ॥

कुङ्कुमर अभावत न कुसुमफुल दिव । जातिचन्दनर अभावत तराकर्पूर दिव ।

रक्तचन्दनकाभावे नवोशीरञ्च दीयते ।
अतिविषाऽप्यभावे तु मुस्तकं तत्र दीयते ॥

रक्तचन्दनर अभावत गन्धविरिणा दिव । आतैचर अभावत मथा दिव ।

नागकेशरकाभावे पद्मकेशरमिष्यते ।
मेदाजीवक काकोली ऋद्धिद्वन्द्वे च चासति ।
वरी विदार्य्यश्वगन्धा वाराही च क्रमात् क्षिपेत् ॥

नागकेशरर अभावत पद्मकेशर दिव । अश्वगन्धार अभावत शतमूल अथवा पाताली कोमोरा दिव ।

भल्लातकामहत्त्वे तु रक्तचन्दनमिष्यते ।
भल्लाताभावातश्चित्रं चित्रे गोक्षुरको मतः ॥

मल्ला सह्य नहले रक्तचन्दन दिव । मलार अभावत चित्रक, चित्रकर अभावत गोक्षुर दिव ।

सुवर्णाभावतो रौप्यं माक्षिकं प्रक्षिपेद् वुधः ।
स्वेदन्तु माक्षिकन्देयं वुधैरजतवद् ध्रुवम् ॥

सुवर्णर अभावत रूप अथवा स्वर्णा माक्षिक, रूपर अभावत श्वेत माक्षिक दिव ।

माक्षिकस्याऽप्यभावे तु प्रदद्यात् स्वर्णगैरिकं ।

स्वर्णा माक्षिकर अभावत गैरिक दिव ।

सुवर्णमथवा रौप्यं योगे यत्र न लभ्यते ।
तत्र लौहेन कर्त्तव्या भिषक् तेन प्रतिक्रिया ॥

सुवर्ण रूप दुयोरो अभावत लोहा दिव ।

मौक्तिकस्याप्यभावे हि मुक्तशुक्तिं प्रयोजयेत् ।

मुक्तार अभावत तारे शुक्ति दिव ।

मत्स्यण्ड्यभावतो देया भिषजा सितशर्करा ।
क्षीराभावे रसोमौद्गो मासूरो वा प्रदीयते ॥

खण्डर अभावत चेनि, चेनिर अभावत खण्ड, क्षीरर अभावत मुद्‌ग रस वा मसूर रस दिव ।

## अथ स्वभावतो हितानि

शालीनां लोहितः शालिः षष्टिकेषु च षष्टिका ।
शूकधान्येष्वपि यवो गोधूमः प्रवरो मतः ॥

शालिर उक्त हले, रङा शालि दिव, आहुर षष्टिका दिव । शूक धान्यर उक्त हले यवधान वा गोमधान दिव ।

पत्रशाकेषु वास्तूकं जीवन्तीपोतिकावरा ।

पत्रशाकर श्रेष्ठ मतुवा, फलशाकर मध्यत पटोलफल, कन्दशाकर मध्यत ओल श्रेष्ठ ।

उक्तौ चन्दनशब्दस्य गृह्यते रक्तचन्दनम् ।
लवणे सैन्धवं विद्यान्मूत्रे गोमूत्रमिष्यते ॥

चन्दनर उक्त हले रक्तचन्दन दिव । लवणर उक्त हले सैन्धव दिव ; मूत्रर उक्त हले गोमूत्र दिव ।

जलेषु दिव्यं दुग्धेषु गव्यमाज्ये तथैव च ।
तैलेषु तिल्यं दातव्यमैक्षवेषु सिता हिता ॥

जलर उक्त हले आकाशाम्बु ( वरषुणार पानी माटित नपराकै धरि ), दुग्धर उक्त हले गरुर, घृतर उक्त हले गरुर, तैल बुलिले तिलर, ऐक्षव बुलिले चेनि दिव ।

## इति स्वभावतो हितानि ।

## औषधकरण-भक्षणे अग्निनमस्कारमन्त्रः

ब्रह्मा तथैव विष्णुश्च रुद्रश्च सह दुर्गया ।
आर्त्तस्य रोगनाशाय प्रत्यक्षो भव पावका ॥

## रोगिण आशीर्व्वादमन्त्रः

ॐ ब्रह्मादक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानिलानलाः ।
ऋषयश्चौषधिग्रामभूतसङ्घाश्च पान्तु ते ॥

रसायनमिवर्षीणां देवानाममृतं यथा ।
स्वाधा चोत्तमनागानं भैषज्यमिदमस्तु ते ॥
ॐ देवराजस्य यद्वीर्य्यं यद्वीर्य्यं शङ्करस्य च ।
वरुणस्य च यद्वीर्य्यं यद्वीर्य्यं केशवस्य च ॥
तदत्र वीजमव्यग्रमायातु व्याधिशान्तये ॥

इत्यौषध-वीर्य्यवर्द्धनं कृत्वा—

धन्वन्तरिर्दिवोदासः काशीराजस्तथाश्विनौ ।
नकुलः सहदेवश्च सतैते व्याधिघातकाः ॥
अच्युतानन्द [ अच्युतानन्त ] गोविन्दनामोच्चारण भेषजात् ।
नश्यन्तु सकला रोगाः सत्यं सत्यं वदाम्यहम् ॥

इत्यौषध-सेवनकाले मन्त्रपठनं ।

अथोपविश्याविभ्रान्तः प्रसन्नवदनेन्द्रियः ।
औषधं हेमरजतमृद्भाजन-परिस्थितम् ॥
पिवेत् प्रसन्नवदनः पीत्वा पात्रमधोमुखम् ।
निःक्षिप्याचम्य सलिलं ताम्बुलाद्युपसेवयेत् ॥

इत्यौषधभक्षणम ।

इत्यभावे द्रव्यग्रहणाधिकारः ॥

द्वात्रिंशः परिच्छेदः

# स्वरसादिकल्पनाध्यायः

## अथ स्वरसादिकल्पना

पञ्चकषायाः

स्वरसश्च तथा कल्कः क्वाथश्च हिमफाण्टकौ ।
ज्ञेयाः कषायाः पञ्चैते लघवःस्युर्य्यथोत्तरम् ॥

स्वरस, कल्क, क्काथ, हिम, फाण्ट एइ पञ्चविध कषाय ।

## ६० । स्वरसकल्पनामाह

आहृतात्तत्क्षणाद् द्रव्यात् क्षुण्णात् कीटादिवर्जितात् ।
यन्त्रनिष्पीड़ितो यस्तु भवेत् स्वरस उत्तमः ॥

स्वरसर निमित्ते औषध ग्रहण करिब ; स्थान शुद्ध कीट पोके नोखोवा, पटात केचा औषध खुन्दि बस्त्रौ चेकि लब, एइविध स्वरस ।

अथान्यः— कुडवं चूर्णितं द्रव्यं क्षिप्तञ्च द्विगुणे जले ।
अहोरात्रं स्थितं तस्माद् भवेद् वा रस उत्तमः ॥
[ अहोरात्रं स्थितं भाण्डे भवेत् स्वरस उच्यते ] ।

येइ सेइ औषध १६ तोला, जल ३२ तोला, आधासेर परिमित चूर्ण द्विगुण जलत रात्रिदिनावधि तियाइ थब, पाचे चाकि रस १ पल खाब, एइ एकविध स्वरस ।

अपरञ्च—आदाय शुष्कं द्रव्यं वा स्वरसानामसम्भवे ।
जलेऽष्टगुणिते साध्यं पादशिष्टञ्च गृह्यते ॥

शुकान औषध १ पल, जल ८ पल, सिद्ध शेष १ पल ।

विशोधितं चाग्निसिद्धं पलमात्रं परं पिवेत् ।

अग्निसिद्धं पलमात्रं पेयम् ।

तस्य प्रक्षेपः— सितामधु-गुड़क्षार-जीरकं लवणन्तथा ।
घृतं तैलञ्च चूर्णादीन् कोलमात्रान् रसे क्षिपेत् ॥

चिनि, मधु, गुड़, यवक्षार, सोगजीरा, सैन्धव, घृत, तिलतैल, चूर्णा द्रव्य स्वरसस १ तोला प्रक्षेप दिब ।

अमृताया रसः क्षौद्रयुक्तः सर्व्वप्रमेहजित् ।

गुड़ूची स्वरस १ पल, मधु १ तोला प्रक्षिप्य पेयम् ।

## अथ पुटपाकः

पुटपक्कस्य कल्कस्य स्वरसो गृह्यते यतः ।
अतस्तु पुटपाकानां युक्तिरत्रोच्यते मया ॥
पुटपाकस्य पाकोऽयं यावल्लेपस्य रक्तता ।
लेपञ्च द्व्यङ्गुलं स्थूलं कुर्य्याद्वाङ्गुष्ठमात्रकम् ॥
काश्मरी-वटजम्ब्वादि पत्रैर्व्वेष्टनमुत्तमम् ।
पलमात्रो रसो ग्राह्यः कर्षमात्रं मधु क्षिपेत् ॥

औषध पोके नोखोवा केचाइ आनि, पटात बाटि गमारी, बट, जाम्बु, पलाश, एइ सकलर पत्रे मेराइ टोपोला कुशेरे वान्धि, मृत्तिकारे लिपि शुकाइ गोमयाग्नित पुरिब, मृत्तिका अग्निवर्ण हले, अग्नि निलगाइ माखि रस चेपि लब १ पल, प्रक्षेप मधु १ तोला दि पेयं ।

## अथ कुटजपुटपाकः

तत्कालाकृष्ट-कुटज-त्वचं तण्डुलवारिणा ।
पिष्ट्वा चतुःपलमितां जम्बूपल्लववेष्टितां ॥
सूत्रेण वद्ध्वा दर्भेऽपि मृत्तिका परिलेपिताम् ।
लिप्त्वा च घनपङ्केन गोमयवह्निना दहेत् ॥
अङ्गारवर्णञ्च मृदः दृष्ट्वा वह्नेः समुद्धरेत् ।
ततो रसं गृहीत्वा च शीतं क्षौद्रयुतं पिवेत् ।
जयेत् सर्व्वानतिसारान् दुस्तरान् सुचिरोत्थितान् ॥

केचा कुटज छाल ४ पल, तण्डुल जलेरे आधा बटा करि जामुर पातेरे मेराइ, वान्धि, कुशेरे मेराइ, सुतारे वान्धि, पङ्क लिपिब, शुकाइ गोमयाग्नित पुरिब, अग्निवर्ण हले गुचाइ, चेपि रस लब, मधु प्रक्षिप्य पेयम् ।

तण्डुलजलमाह— कण्डितं तण्डुलपलं जलेऽष्टगुणिते क्षिपेत् ।
भावयित्वा जलं ग्राह्यं देयं सर्व्वत्रकर्म्मसु ॥

शालि तण्डुल १ पल, जल ८ पल, मोहारि खचि तण्डुल जल सर्व्वत्र दिव ।

## ६१ । अथ क्वाथ-कल्पना

पानीयं षोड़शगुणं क्षुण्णे द्रव्यपले क्षिपेत् ।
मृत्पात्रे क्वाथयेद् ग्राह्यमष्टमांशावशेषितम् ॥
तज्जलं पाययेद् धीमान् कोष्णं मृद्वग्निसाधितम् ।
कठिनात् कठिनं यच्च तत्र षोड़षिकं जलम् ॥

अति शुकान औषध ४ तोला, जल ६४ तोला, शेष ८ तोला पात्र मृत्तिका पेयं ।

मृदौ चतुर्गुणं देयं कठिनेऽष्टगुणं जलम् ।

केचा औषध ४ तोला, जल १६ तोला, शेष ४ तोला पेयम । अल्प शुकान औषध ४ तोला, जल ३२ तोला, शेष ८ तोला पेयं । यथा—

गुडूची धान्यकारिष्टपद्मकं रक्तचन्दनम् ।
गुडूच्यादिगणक्वाथः सर्व्वज्वरहरः स्मृतः ॥

आमरिलता, धनिया, निम, पद्मकाठ, रक्तचन्दन एसां मिलि २ तोला, जल ३२ तोला, शेष ८ तोला पेयम । एवं सर्व्वत्र क्वाथे बोध्यम् ।

जीरकं गुग्गुलुं क्षारं लवणञ्च शिलाजतु ।
हिङ्गु त्रिकटुकञ्चैव क्वाथे शानोन्मितं क्षिपेत् ॥

मोगजीरा, गुग्गुल, यवक्षार, सैन्धव लवण, शिलाजतु, हिङ्ग, त्रिकटु, ए सकल क्वाथत प्रक्षेप २४ रतिकै दिव । व्याधि विपरीतत मधु सरहकै दिव । गोक्षीर, घृत, गुड़, तिलतैल, गोमूत्र, वटाकल्क, चूर्ण इसब क्वाथत प्रक्षेप २ तोलाकै दिव ।

इति क्वाथनिर्णयः ।

### अथ प्रमथ्या

प्रमथ्या प्रोच्यते द्रव्यपला कल्कीकृता शृता ।
तोयेऽष्टगुणिते तस्याः पानमाहुः पलद्वयं ॥

केचा औषध १ पल बाटि जल ८ पल दि सिद्ध करि शेष २ पल पेय ।

सा यथा—मुस्तकेन्द्र यवैः सिद्धा प्रमथ्या द्विपलोन्मिता ।
सुशीता मधुसंयुक्ता सर्व्वातिसारनाशिनी ॥

मथा, इन्द्रयव मिलित १ पल, जल ८ पल, शेष २ पल, शीते मधु दत्वा पेयम ।

इति प्रमथ्या ।

अथ यवागूः१

साध्यं चतुष्पलं द्रव्यं चतुःषष्टिपलेऽम्बुनि ।
तत् क्वाथेनार्द्धसिद्धेन यवागूं साधयेद् बुधः ॥
यवागूः षड्गुणे तोये संसिद्धा विरलद्रवा ॥

शुद्ध शालिचूर्ण ४ पल, जल ६४ पल, शेष ३२ पल पेयं ।

सा यथा—आम्राम्रातकजम्बूत्थं कषायं विपचेद्बुधः ।
यवागूं शालिभिर्य्युक्तां तां भुक्त्वा ग्रहणीगदे ॥

आमछालर चूर्ण, आमराछालर चूर्ण, जामुछालर चूर्ण, शालि तण्डुल चूर्ण, एषां मिलित्वा चूर्ण ४ पल, जल ६४ पल, शेष ३२ पल, मधु दत्वा पेयम् ।

इति यवागूः ।

अथ यूषः

कल्कद्रव्यपलं शुण्ठी पिप्पली चार्द्धकार्षिकं ।
वारिप्रस्थेन विपचेत् तद्रसो यूष उच्यते ॥
यूषः किञ्चिद् घने पाके पेया च परिकीर्त्तिता ।

मुद्गादि कल्क औषध १ पल, आदा १ तोला, पिप्पली १ तोला, जल १ पोवा ८ तोला, शेष ३ भाग, रहिव १ भाग इयाक यूष बोले ।

सा यथा— कुलत्थयवकोलैश्च मुद्गैर्मूलकशुण्ठीभिः ।
सिद्धं धान्याकयुक्तैश्च यूषः श्लेष्मानिलापहः ॥
सप्तमुस्तिक इत्येषः सन्निपातज्वरापहः ।
आमवातहरः कण्ठ्यः स्रुवक्त्राणां विशोधनः ॥

१ । यवागूः—षड्गुणा जलपक्व घनद्रव द्रव्य विशेषः ।
अन्नं पञ्चगुणे साध्यं विलेपी च चतुर्गुणे ।
मण्डश्चतुर्दशगुणे यवागूः षड्गुणेऽम्भसि ॥ —शब्दकल्पद्रुमे ।

कुलत्थ, यव, बदर, मुद्गमूलक, आदा, धन्याक एषां मिलि १ पल, जल ६ पोवा ८ तोला, सिद्ध शेष ३ भाग रहिव, १ भाग पेयम् ।

इति यूषः ।

## अथ षडङ्गपानीय-कल्पना

क्षुण्णं द्रव्यपलं साध्यं चतुःषष्टिपले जले ।
अष्टशिष्टन्तु तद्देयं पाने भक्तादि संविधौ ॥

आधा वटा औषध ८ टका,जल ६ सेर १ पोवा १२ टका, शेष ३ सेर १४ टका पानभोजनादौ पेयम् ।

यथा—उशीरपर्पटोदीच्य मुस्तनागरचन्दनैः ।
जलं शृतं हिमं पितं पिपासाज्वरशान्तये ॥

विरिखाशिपा, श्वेतकपूरा, सुगन्धबाला, मथा, आदा, रक्तचन्दन एषां मिलित्वा ८ टका, जल ६ सेर १ पोवा १२ टका, शेष ३ सेर १४ टका पेयं ।

इति षडङ्गपानीयं ।

## अथ उष्णोदकविधिः

अष्टमेनांशशेषेण चतुर्थेनार्द्धकेन वा ।
अथवा क्वथनेनैव सिद्धमुष्णोदकं वदेत् ॥

जल ८ भागर ७ भाग शेष १ भाग राखिव । जल ४ भाग शेष १ भाग जल उष्ण करिव, अर्द्ध टुटाव ।

श्लेष्मामवातमेदोघ्नं वस्तिशोधनदीपनम् ।
कासश्वासज्वरं हन्ति पीतमुष्णोदकं निशि ॥
दिवा शृतन्तु यत्तोयं रात्रौ तद् गुरुतां व्रजेत् ।
रात्रौ शृतं दिवा चापि गुरुत्वमधिगच्छति ॥

दिवसत तप्त जल रात्रि नेखाव । रात्रि तप्त जल दिवसत नेखाव ।

इत्युष्णोदकविधिः ।

## अथ क्षीरपाकविधिः

क्षीरश्चाष्टगुणं द्रव्यात् क्षीरान्निरं चतुर्गुणम् ।
क्षीरावशेषं कर्त्तव्यं शूलमामोद्भवं जयेत् ॥

औषध १ तोला, क्षीर ८ तोला, जल ३२ तोला, सिद्ध शेष ८ तोला पेयम् ।

इति क्षीरपाकविधिः ।

## अथान्नप्रक्रिया

अथान्नप्रक्रियाचैव प्रोच्यते नातिविस्तरात् ।
सुधौतं तण्डुलान् स्फीतां स्तोये पञ्च गुणे पचेत् ।
तद्भक्तं प्रस्तुतञ्चोष्णं विशदं गुणवन्मतम् ॥

शालि चाउल काढ़िब, धौत करिव १ भाग, पाकार्थ जल ५ भाग सिद्धं, तदन्नं किञ्चिदुष्णं खाद्यम् ।

इत्यन्नम् ।

## अथ यवागूः

यवागूः षड् गुणे जले सिद्धं स्यात् कृकराघना ।

पिठागुरि १ भाग, जल ६ भाग, अल्प वह्नियोवा घन हव । धौत काथित चाउल १ भाग, पाकार्थ जल ६ भाग सिद्धे खाद्यम् ।

मसूरमुद्गमाषैश्च लाजैर्वा शोधिताहिता ।

मसूर, मुग वा माहकलाइ १ भाग, पाकार्थ जल ६ भाग सिद्धे खाद्यम् । आखै १ भाग, जल ६ भाग सिद्धे खाद्यम् ।

यवागूः ग्राहिणी वल्या तर्पणी वातनाशिनी ।

इति यवागूः ।

## अथ विलेपी

विलेपी घनसिक्था च सिद्धा नीरे चतुर्गुणे ।
विलेपी तर्पणी हृद्या मधुरा पित्तनाशिनी ॥

पिठागुरि १ भाग, जल ४ भाग सिद्धे खाद्यम् ।

इति विलेपी ।

## अथ पेया

द्रव्याधिका स्वल्पसिक्था चतुर्द्दशगुणे जले ।
सिद्धा पेया बुधैर्ज्ञेया यूषः किञ्चिद् घनस्ततः ॥
पेया लघुतरा ज्ञेया ग्राहिणी धातुपुष्टिदा ।
यूषो वल्यस्ततः कण्ठ्यो लघुपाके कफापहः ।

पिष्टक चूर्ण १ भाग, जल १४ भाग सिद्धं, अल्प सिक्था थाकिव, ताके पेया बोले । मुग १ भाग, जल १४ भाग, सिद्धं । पेयात् करि किछु घन करिले यूष बोले ।

इति पेयायूषौ ।

### अथ भक्तमण्डः

जले चतुर्द्दशगुणे तण्डुलानां चतुःपलम् ।
विपचेत् स्रावयेन्मण्डं सभक्तो मधुरो लघुः ॥

तण्डुल ४ पल, जल १४ भाग सिद्धं खाद्यं ।

इति भक्तमण्डः ।

### अथ शुण्ठमण्डः

नीरे चतुर्द्दशगुणे सिद्धोमण्डस्त्वसिक्थकः ।
शुण्ठीसैन्धवसंयुक्तः पाचनो दीपनः स्मृतः ॥

पिठागुरि १ भाग, पाकार्थ जल १४ भाग, सिठा नरव । पि खाव परा हव । प्रक्षेप आदाचूर्ण ३२ रति, सैन्धव ३२ रति दत्वा पेयं ।

इति शुण्ठमण्डः ।

### अथ आज्यमण्डः

सुकण्डितैस्तथा भृष्टैराज्यमण्डो यवैर्भवेत् ।
कफपित्तहरः कण्ठ्यो रक्तपित्तप्रसादनः ॥

काण्डित यवतण्डुल घृत भर्जित १ भाग, जल १४ भाग सिद्धे खाद्यम् ।

इति आज्यमण्डः ।

### अथ लाजामण्डः

लाजैर्व्वा तण्डुलाभृष्टैर्लाजामण्डः प्रकीर्त्तितः ।
श्लेष्मपित्तहरोग्राही पिपासाज्वरजिन्मतः ॥

आखै वा गोट कराइ वा १ भाग, जल १४ भाग सिद्धं खाद्यं ।

इति लाजामण्डः ।

## ६२ । अथ फाण्टः

चूर्णे द्रव्यपले सम्यक् जलमुष्णं विनिक्षिपेत् ।
मृत्पात्रे कुडवोन्मानं ततस्तु स्रावयेत् पटात् ॥

सस्याच्चूर्णद्रवः फाण्टः तन्मानं द्विपलोन्मितम् ।
क्षौद्र-सितागुड़ादींस्तु क्वाथवत्तत्र निःक्षिपेत् ॥

वटा औषध १ पल, उष्ण जल १६ टका पेलाइ थै मर्हि कापोरत चेकि, सिठा गुवाइ, मधु चिनि वा गुड़ दि २ पल औषध खाव ।

स यथा— मधुकपुष्पं गाम्भारी चन्दनोशीरधान्यकम् ।
द्राक्षायाश्च कृतः फाण्टः शीतः शर्करयायुतः ॥
तृष्णापित्तहरः प्रोक्तो दाहमूर्च्छाभ्रमान् जयेत् ॥

मधुकर पुष्प ( मउलफुल ) गमारी, रक्तचन्दन, विरिणा, धनीया एषां मिलि खुन्दा द्रव्य १ पल, जल १६ टकात औषध पेलाइ खचि कापोरत चाकि लव २ पल, चिनि २ तोला दि खाव ।

इति फाण्टः ।

अथ मन्थः

मन्थोऽपि फाण्टभेदः स्यात्तेन चात्रैव कथ्यते ।

फाण्टभेदके मन्थ बोले ।

स यथा— जले चतुःपले शीते क्षुण्ण-द्रव्यपलं क्षिपेत् ।
मृत्पात्रे मन्थयेत् सम्यक् तस्माच्च द्विपलं पिवेत् ॥

वटा औषध १ पल, शीतल जल ४ पलत पेलाइ मृत्तिका पात्रत मथिव, कापोरत चेकि २ पल खाव । यथा—

खर्ज्जुरादिमन्थः—खर्ज्जुरदाड़िमद्राक्षा तिन्तीड़ीकाम्लिका पलैः ।
स पुरुषैः कृतोमन्थः सर्व्वमद्यविकारनुत् ॥

खाजुरफल, डालिमफल, गमारीफल, नेतेलीफल, थेकेरा, माटि आमलकी एषां मिलि खुन्दा १ पल, शीतल जल ४ पल, मृत्तिकार पात्रत मथि कापोरत चाकि २ पल, चेनि मिश्रित करि खाव ।

इति खर्ज्जुरादिमन्थः ।

मसूरादिमन्थः

क्षौद्रयुक्तमसूराणां शक्तवो दाड़िमाम्भसा ।
मथितावारयन्त्याशु छर्दिं दोषत्रयोद्भवां ॥

मसूर चूर्ण १ पल, डालिम रस १६ तोलात मथिव मृत्तिकापात्रत चाकि मधु मिश्र करि खाव ।

इति मसूरादिमन्थः ।

## ६३ । अथ हिमविधिः

क्षुण्णं द्रव्यपलं सम्यक् षड्भिर्नीरपलैः प्लुतम् ।
निशोषितः हिमः स स्यात् तथा शीतकषायकः ।।
[ तस्य मानं मतं पाने पलद्वयमितं बुधैः ]
तन्मानं फाण्टवत् ज्ञेयं सर्व्वत्रैवैष निश्चयः ।।

बटा औषध ८ टका, जल २ पोवा ८ टका, मृत्तिकार पात्रत मिश्र करि निशा नियरत थव, प्रातसे छाकि २ पल खाव चेनि २ टका मिहलाइ ।

### आम्रादिहिमः

आम्रजम्ब च ककुभं चूर्णीकृत्य जले क्षिपेत् ।
हिमं तस्य पिवेत् प्रातः सक्षौद्रं रक्तपित्तजित् ।।

आम्र, जम्बु, अर्ज्जुन एषां मिलि चूर्ण १ पल, जल २ पोवा ८ टका मृत्तिकापात्रत मिश्र करि, रात्रि नियरत थव, प्रातसे वस्त्रेरे चाकि मधु मिश्र करि २ पल खाव ।

इति आम्रादिहिमः ।

### अमृताहिमः

अमृताया हिमः पेयो जीर्णज्वरहरः स्मृतः ।

गुड़ूची १ पल, जल ६ पल, मृत्तिकारपात्रत रात्रि थै चाकि प्रातसे २ पल मधु दत्वा पेयम् ।

### धान्याकहिमः

प्रातः सशर्करः पेयो हिमो धान्याकसम्भवः ।
अन्तर्दाहं तथा तृष्णां जयेत् स्रोतोविशोधनः ॥

धनीयाचूर्ण ८ टका, जल २ पोवा ८ टका, मृत्तिकार पात्रत रात्रि नियरत थै, चाकि प्रातसे चाकि चिनि मिहलाइ २ पल खाव ।

### धान्यादिहिमः

धान्याकधात्रीवासानां द्राक्षापर्पटयोर्हिमः ।
रक्तपित्तं ज्वरं दाहं तृष्णां शोषञ्च नाशयेत् ।।

धान्याक, आमलखी, बाहक, गमारीगुटि, घेतकपरा एषां मिलि ८ टका, जल २ पोवा ८ टका, मृत् पात्रत रात्रि नियरत थव, प्रातसे चाकि २ पल खाव मधुदत्वा ।

इति हिम-कल्पना ।

## ६४। अथ कल्कः

द्रव्यमार्द्रं शिलापिष्टं शुष्कं वा जलमिश्रितम्।
तदेव सुरिभिः पूर्व्वैः कल्क इत्यभिधीयते ॥
आवापस्त्वथ प्रक्षेपस्तस्य पर्य्याय उच्यते।
[ प्रक्षिप्या वा सकल्कास्ते तन्मानं कर्षसम्मितम् ॥
कल्के मधु घृतं तैलं देयं द्विगुणमात्रया।
सितां गुड़ं समं दद्याद् द्रवादेयाश्चतुर्गुणाः ॥

औषध केचा, शुकान हले जल दि पाटात बाटिब, ताके कल्क औषध बोले। घृत तैलादित, कल्क प्रक्षेप दिब लागिले ताके दिब। खाब लागिले ताके खाब। मात्रा १ तोला, कल्क १ तोला, घृत २ तोला, मिश्रं खाद्यं, कल्क १ तोला मधु २ तोला मिश्रं खाद्यं, कल्क १ तोला, चिनि १ तोला मिश्रं खाद्यं। कल्क १ तोला क्वाथ ४ तोला पेयम्, एवं सर्व्वत्र।

### वर्द्धमान-पिप्पलीकल्कः

स यथा—त्रिवृद्धया पञ्चवृद्धया वा सप्तवृद्धयाऽथवा कणाः।
पिवेत् पिष्ट्वा दशाहन्तु यथा तथापकर्षयेत् ॥
एकविंशदिनं खाद्यं पिप्पलीवर्द्धमानकम्।
अनेन पङ्गुवाताश्च कासश्वासरुचिज्वराः ॥
उदरार्शः क्षय श्लेष्म वातानश्यन्त्यूरोग्रहाः ॥

एकदिन ३ टा पिप्पली बाटि तप्त जल १ तोलारे खाब। द्वितीय दिन ४ टा बाटि तप्त जल १॥ तोलारे खाब। एने नियमे ७ दिन खाब। पिप्पली ५ टा बाटि तप्त जल ७ महारे खाब। पिप्पली ६ टा तप्त जल २ तोला बाटि खाब। एने नियमे ७ दिन खाब। पिप्पली ७ टा तप्त जल ९ महारे बाटि खाब। पिप्पली ८ टा तप्त जल १० महारे बाटि खाब। एवं एकविंशति दिनानि खाद्यम्।

### इति वर्द्धमान-पिप्पलीकल्कः२।

२। तथा च आयुर्वेदसंग्रहे देवेन्द्रः—

दशवृद्धया दशाहानि दशपिप्पलीकं दिनम्।
वर्द्धयेत् पयसा सार्द्धं तथैवापनयेत् पुन ॥
जीर्णोऽजीर्णे च भुञ्जीत षष्टिकं क्षीर सर्पिषा।
पिप्पलीनां सहस्रस्य प्रयोगोऽयं रसायनः ॥
दशपैप्पलिकः श्रेष्ठो मध्यमः षट्प्रकीर्त्तितः।
त्रिहि पिप्पलीपर्य्यन्तः प्रयोगः सोऽवरः स्मृतः ॥

लेपान्निम्बदलैः कल्को व्रणशोधन रोपणः ।
भक्षणाच्छर्द्दिकुष्ठानि-पित्तश्लेष्मक्रिमीन् जयेत् ॥

निमुर केचा पात बाटि लिपि दिले व्रण पाके ; शुकान पात बाटि दिले शुकाइ । निमपात १ तोला बाटि जल ४ तोला सह खाले, बाटि कुष्ठ पित्त कफ क्रिमि गुचे ।

शुद्धः कल्को रसोनस्य तिलतैलेन मिश्रितः ।
वातरोगान् जयेत्तीव्रान् विषमज्वरनाशनः ॥

बाकलि गुचुवा नहरु १ तोला, तिलतैल २ तोला, मिश्रकरि बाटि खाव ।

## रसोनकल्कः

पक्व-कण्डरसोनस्य गुटिका निस्तुषीकृताः ।
पातयित्वा च मध्यस्थं दुरीकृत्य तदङ्कुरम् ॥
तदुग्रगन्धनाशाय रात्रौ तक्रे विनिःक्षिपेत् ।
अपनीय च तन्मध्यात् शीलायां पेषयेत्ततः ॥
तन्मध्ये पञ्चमांशेन चूर्णमेषां विनिःक्षिपेत् ।
सौवर्च्चलं यमानीञ्च भर्जितं हिङ्गुसैन्धवम् ॥
कटुत्रिकं जीरकञ्च समभागानि चूर्णयेत् ।
एकीकृत्य ततः सर्व्वं कल्कं कर्षप्रमाणतः ॥

बृंहणं वृष्यमायुष्यं प्लीहोदरविनाशनम् ।
वयसः स्थापनं मेध्यं पिप्पलीनां रसायनम् ॥
पञ्च पिप्पलीकश्चापि श्रूयते वर्द्धमानकः ।
पिष्टास्ता बलिभिः पेयाः शृत॰ मध्यबलैर्नरैः ।
शीतीकृता ह्रस्वबलैर्देहदोषामयान् प्रति ॥

प्रथम दिनत पिप्पली १० टा, द्वितीय दिनत २० टा, तृतीय दिनत ३०टा, चतुर्थ दिनत ४० टा एनेकै प्रत्यह दह दहटी वर्द्धित करि दुग्ध सह क्रमागत १० दिन सेवन करि, दहदिनर पिचत पुनर्व्वार प्रत्यह १० टी करि ह्रास करिब । एनेकै सहस्र पर्य्यन्त पिप्पली सेवन करिब । प्रत्यह १० टी करि बर्द्धन करा प्रधान योग ; ६ टी-करि वृद्धि मध्यम, एवं ३ टी करि अधम । ५ टी करि वृद्धि करारो नियम आछे । पिप्पली वृद्धिर सहित दुग्धर मात्राओ वृद्धि करिब । बलवान् व्यक्ति पिप्पली पेषण करि, मध्यबली व्यक्ति पिप्पली क्वाथ करि एवं अल्पबल व्यक्ति शीतकषाय प्रस्तुत करि, एइ पिप्पली बर्द्धमान योग अभ्यास करिब । पथ्य षष्टिक तण्डुलर अन्न, दुग्ध आो घृत । बर्द्धमान पिप्पली सेवन करिले प्लीहादि रोग नष्ट हय । बलवीर्य्य आो आयुवृद्धि है थाके ।

खादेदग्निबलापेक्षी ऋतुदोषाद्यपेक्षया ।
अनुपानं ततः कुर्य्यादेरण्ड शृतमन्वहं ॥
सार्व्वाङ्गिकाङ्गजं वातमर्द्दितञ्चापतन्त्रकम् ।
अपस्मारं तथोन्मादमुरुस्तम्भञ्च गृध्रसीं ॥
उरः पृष्ठ कटी पार्श्वं कुक्षि पीड़ां क्रिमिं जयेत् ।
अजीर्णमातपं रोषमतिनीरं पयोऽथवा ॥
रसोनमश्नन् पुरुषस्त्यजेदेतन्निरन्तरम् ।
मद्यं मांसं तथाम्लञ्च रसं सेवेत नित्यशः ॥

एक सुन्दर नहरु बाकलि गुचाइ फालि, माजर अङ्कुर गुचाइ टेङ्गा घोलत [ टेङ्गा गाखोरत ] एकरात्रि पेलइ थब । प्रातसे जलत प्रक्षालन करिव ७ बार, धुइ उग्रगन्ध गुचाइ अल्प शुकाइ बाटि कल्क लब ३ पोशा ४ तोला । सौवर्च्चल, यनी, भर्ज्जित हिङ्गु, सैन्धव, त्रिकटु, मोगजीरा एषां मिलित चूर्ण ११ तोला मिझाइ एका काथ अनुपानकै नित्ये १ तोलाकै खाब ।

इति रसोनकल्कः ।

पिप्पली-पिप्पलीमूल-भल्लातक-फलानि च ।
एतत् कल्कश्च सक्षौद्र उरुस्तम्भनिवारणः ॥

पिप्पली, पिप्पलीमूल, शोधित भल्ला एषां मिलि १ तोला बाटि मधु २ तोला मिझलाइ खाब ।

विष्णुक्रान्ता जटाकल्कः सिताक्षौद्रगुड़ैर्य्युतः ।
परिणामभवं शूलमामवातञ्च नाशयेत् ॥

बगा अपरा फुलर मूल १ तोला चिनि मधुभ्यां खाद्यं ।

शुण्ठी-तिल-गुड़ैः कल्को दुग्धेन सहयोजितः ।
परिणाममवं शूलमामवातञ्च नाशयेत् ॥

आदा, तिल मिलि १ तोला बाटि गुड़ दुग्धाभ्यां खाद्यम् ।

अपामार्गस्य वीजानां कल्कस्तण्डुलवारिणा ।
पीतोरक्तार्शसां नाशं कुरुते नास्ति संशयः ॥

वनसटर शिपा वा गुटि १ तोला बाटि तण्डुल जल ४ तोला खाद्यं ।

वदरीमूलकल्केन तिलकल्कश्च योजितः ।
मधुक्षीरयुतः पीतो रक्तातिसारनाशनः ॥

वदरीमूल, तिल मिलि १ तोला बाटि दुग्धमधुभ्यां खाद्यम् ।

इति कल्कः ।

## अथ चूर्णम्

अत्यन्त शुष्कं यद् द्रव्यं सुपिष्टं वस्त्रगालितम् ।
तस्य चूर्णं रजः खादेत् तन्मात्राकर्षसम्मिता ॥

औषध शुकाइ खुन्दि, वस्त्रे चालि लव । सेइ चूर्ण २ तोला खाय ।

चूर्णे गुडः समोदयः शर्करा द्विगुणा मता ।
चूर्णे सभर्जितं हिङ्गु देयं नोत्क्लेदकृद् भवेत् ॥
पिबेच्चतुर्गुणैरेव चूर्णमालोडितं द्रवैः ।
पित्तवातकफातङ्के त्रिद्वेयक पलमाहरेत् ॥

चूर्ण १ तोला, गुड़ १ तोला खाय । चूर्ण २ तोला, चिनि ४ तोला खाय । चूर्णेते भर्जित हिङ्गु अति गन्ध हइमाने दिव । चूर्ण १ तोला, क्षीर ४ तोला आलोड्य पेयम् । चूर्ण १ तोला, घृत २ तोला, खाय । पित्त, वात, कफ विपर्य्ययात् । चूर्ण १ तोला, काथ २ पल आलोड्य पेयम् । तद् यथा—

## आमलक्यादिचूर्णम्

आमलं चित्रकं पथ्या पिप्पलीसैन्धवन्तथा ।
सुचूर्णोऽयं गणो ज्ञेयः सर्व्वज्वरविनाशनः,
भेदोरुचिकरः श्लेष्मजेता दीपन पाचनः ॥

आमलकी, चित्रक, शिलिखा, पिप्पली, सैन्धव एषां सममागचूर्ण १ तोला, काथ २ पल आलोड्य पेयम् ।

## मधुपिप्पली

मधुना पिप्पलीचूर्णं लिहेत् कासज्वरापहम् ।
हिक्काश्वासहरं कण्ठ्यं प्लीहघ्नं बालकोचितम् ॥

## त्रिफला

एका हरीतकी योज्या द्वौ च योज्यौ विभीतकौ ।
चत्वार्य्यामलकान्येव त्रिफलैषा प्रकीर्त्तिता ॥
त्रिफला चैव मेहार्शो नाशयेद् विषमज्वरान् ।
दीपनी श्लेष्मपित्तघ्नी कुष्ठं हन्ति रसायनी ॥
सर्पिर्मधुभ्यां संयुक्ता सैव नेत्रामयान् जयेत् ॥

शिलिखा एटा, मोमोरा दुटा, आमलकी ४ टा त्रिफला ।

## त्र्यूषणं

पिप्पली-मरिचं शुण्ठी त्रिभिः त्र्यूषणमुच्यते ।
दीपनं श्लेष्म मेदोघ्नं कुष्ठश्लीपदनाशनम् ॥
जयेदरोचकं साम-मेहगुल्मगलामयान् ॥

पिप्पली, गोलमरिच, आदा, त्र्यूषण वा त्रिकटु ।

## पञ्चकोलम्

पिप्पली-चव्य-विश्वाह्वा पिप्पलीमूलचित्रकैः ।
पञ्चकोलमिति ख्यातं रुच्यं पाचनदीपनम् ॥
आनाह-पित्तगुल्मघ्नं शूलश्लेष्मोदरापहम् ॥

पिप्पली, चै, आदा, पिप्पलीमूल, चिता । इति पञ्चकोलम् ।

## अथ त्रिजातक चतुर्ज्जातकौ

त्वगेला पत्रकैः प्रोक्तं त्रिसुगन्धि त्रिजातकम् ।
नागेश्वरयुतं तच्च चातुर्ज्जातकमुच्यते ॥
त्रिगन्धञ्च चतुर्ज्जातं रुक्षोष्णं कफपित्तहृत् ।
वल्यं रुचिकरं तीक्ष्णं विषश्लेष्मामयान् जयेत् ॥

एलाचि, दालचिनि, तेजपात । इति त्रिजातकम् । त्रिजातकर सगत नागकेशर दिले चातुर्ज्जातक बोले ।

## त्रिमदम्

विडङ्गं चित्रकं मुस्तं त्रिमदं समुदाहृतम् ।

विडङ्ग, चिता, मथा, त्रिमद ।

## पञ्चलवणम्

सिन्धु सौवर्च्चलञ्चैव विड्सामुद्रिकं गड्ं ।
एक द्वि त्रि चतुःपञ्च लवणानि क्रमाद् विदुः ॥
तन्मुख्यं सैन्धवं विद्यादनुक्ते तच्च योजयेत् ।
सैन्धवाद्यं रोमकान्तं शं य लवणपञ्चकम् ॥
मधुर-सृष्ट-विन्मूत्र-स्निग्धं सूक्ष्ममलापहम् ।
वीर्य्योष्णं दीपनं तीक्ष्णं कफपित्तविवर्द्धनम् ॥

सैन्धव, सौवर्च्चल, विड, सामुद्रिक, कर्कच एइ पञ्चलवण । पञ्चलोमर अभावत सैन्धव दिव ।

तिलक्षारइक्षुक्षारौ यवक्षारश्च स्वर्जिका ।
ज्ञेयौ वह्निसमौ क्षारौ स्वर्जिकायावशूकजौ ॥
क्षाराश्चान्येऽपि गुल्मार्शो ग्रहणीरुक्छिदः शिराः ।
पाचनाः क्रिमिपुंस्त्वघ्नाः शर्कराश्मरीनाशनाः ॥

पलाश त्रिक्षु, अर्क, वनसट्, तिल, अर्ज्जुन कला एहसकल अन्य क्षार ।

इति चूर्णकल्पना ।

## अथ वटिकाकल्पना

वटका अथ कथ्यन्ते तन्नाम वटिकागुटी ।
मोदको गुटिका पिण्डी गुडोवर्त्तिस्तथोच्यते ॥
[ लेहवत् ] लोहवत् साध्यते वह्नौ गुडो वा शर्कराऽथवा ।
गुग्गुलुर्वा क्षिपेत्तत्र चूर्णं तन्निर्म्मितं वटी ॥
द्रवेण मधुनावापि गुटिकां कारयेद् बुधः ।
सिताचतुर्गुणा देया वटीषु द्विगुणो गुडः ॥
चूर्णे चूर्णसमः कार्य्यो गुग्गुलुर्मधु तत्समम् ।
द्रवश्च द्विगुणं देयं मोदकेषु भिषग्वरैः ॥
कर्ष प्रमाणा तन्मात्रा वलं दृष्ट्वा प्रयुज्यते ।

गुटिका वटि मोदकत पिण्ड गुड़ द्विगुण, गुग्गुलु मधु समान । गुड़, गुग्गुलु मात्रा १ तोलाके खाब ।

## जीवनीवटिका

यथा वटिका—विडङ्गनागरं कृष्णा पथ्यामलविभीतकाः ।
वचागुडूचीभल्लातं सविषञ्चात्र योजयेत् ॥
एतानि समभागानि गोमूत्रेणैव पेषयेत् ।
गुञ्जा तु वटिका कार्य्या दद्यादार्द्रकजैरसैः ॥
एकामजीर्णे युक्ते च द्वे विसूच्याञ्च योजयेत् ।
तिस्रस्तु सर्पदष्टे च चतस्रः सान्निपातिके ॥
गुटिका जीवनीनाम्नी सञ्जीवयति मानवम् ॥

विडङ्ग १, आदा १, पिप्पली १, शिलिखा १, आमलकी १, मोमोरा १, बच १, गुडची १, भल्ला १, विष १ एतानि गोमूत्रेण पिष्ट्वा रक्तिका प्रमाणा वटिका कार्य्या । आर्द्रक रसमनुपानम् ।

इति गुटिकाधिकारः ।

## अथावलेह-कल्पना

काथादेर्य्यत् पुनः पाकाद् घनत्वं सारसक्रिया ।
सोऽवलेहश्च लेहश्च तन्मात्रा स्यात् पलोन्मिता ॥
सिता चतुर्गुणा कार्य्या चूर्णाच्च द्विगुणो गुड़ः ।
द्रवं चतुर्गुणं दद्यादिति सर्व्वत्र निश्चयः ॥
तोयपूर्णे यदा पात्रे क्षिप्तो न प्लवते गुड़ः ।
सुपक्वे तण्डुलोयावदवलेहोऽप्सु मज्जनम् ॥

क्काथ करि चाकि सिठा गुचाइ पुनः गुड़ वा चिनि दि पाक करि चूर्णादि प्रक्षेप दिले तारे नाम रस क्रिया अवलेह बोले । खावर मात्रा ४ तोला । चेनि ४ गुण, गुड़ २ गुण, रसयुक्त द्रव्य ४ गुण एवं सर्व्वत्र । पाक हते सूत्र काटे, जलत पेलाले निबियले तल याइ, एइ प्रमाण ।

गन्धवर्णरसादीनां मम्पत्तौ सिद्धमुच्यते ।
तस्यानुपानं— दुग्धमिक्षुरसं यूषं पञ्चमूलकषायकम् ।
वासाक्वाथं यथायोग्यमनुपानं सुखावहं ॥ सुगमम् ।

## अथ घृततैल-कल्पना

कल्काच्चतुर्गुणी कृत्य घृतम्वा तैलमेव वा ।
चतुर्गुण द्रवे साध्यं तस्य मात्रा पलोन्मिता ॥
निःक्षिप्यं क्वाथे यत्तोयं क्वाथ्यद्रव्याच्चतुर्गुणम् ।
पादशिष्टं गृहीत्वा च स्नेहस्तेनैव साधयेत् ॥

कल्क १ गुण, घृत वा तैल ४ गुण, काथरस, क्षीर, स्वरस ४ भाग दिव । काथ परिमाण क्काथ द्रव्य १ भाग, जल ४ भाग, शेष १ भाग तेन क्काथेन साधितं ।

चतुर्गुण मृदु द्रव्ये कठिनेऽष्टगुणं जलम् ।
अत्यन्त कठिने द्रव्ये जलं षोड़शिकं मतम् ॥

केचा औषधत जल ४ गुण, शुकान औषधत ८ गुण, अत्यन्त शुकान औषधत १६ गुण एवं घृत तैलाभ्यां क्षीर नीर समं देयं ।

शब्दहीनोऽग्निनिःक्षिप्तः स्नेहसिद्धो भवेत्तदा ।
यदा फेनोद्गमस्तैले फेनशान्तिश्च सर्पिषि ॥

अग्नित कल्क दिले शब्द करिव ना लागे, तैलत फेन उठिव । घृतत फेन गुचिव, घृत तैल सिद्ध हय ।

गन्धवर्ण रसोत्पत्तिः स्नेहसिद्धस्तदा भवेत् ।
स्नेहपाक त्रिधा प्रोक्तो मृदुर्मध्यःखरस्तथा ॥
ईषत् सरसकल्कस्तु स्नेहपाकोमृदुर्भवेत् ।
मध्यपाकस्य सिद्धिश्च कल्कोनिरस कोमलः ।
ईषत् कठिन कल्कस्य चाहपाको भवेत् खरः ॥

मृदु पाक, मध्य पाक, खर पाक एइ ३ विध पाक । कल्कत रस थाकिले मृदु पाक बोले । कल्क कोमले थाकिले जल नाथाकिले मध्य पाक बोले । कल्क जल गुचि खरखरिया हले खरपाक बोले ।

तदूर्द्ध दग्धपाकः स्याद्दाहकृन्निष्प्रयोजनः ।
आमवातश्चनिर्व्वीर्य्यो वह्निमान्द्यकरो गुरुः ॥

खरपाकत करि डले ( कल्क द्रव्य दैगले ) ताके दग्ध पाक बोले । दग्ध पाक दाह करे निष्प्रयोजन । आधा सिजा हले जल थाकिले वीर्य्य नष्ट करे, अग्नि मन्द करे, गुरु गरिष्ठ ।

नस्यार्थे स्यान्मृदुः पाको मध्यमः सर्व्वकर्म्मसु ।
अभ्यङ्गार्थे खरः प्रोक्तो युज्यादेवं यथोचितं ॥

नाके उजाव मृदु पाक, सर्व्वकर्म्मत मृदु पाक, गात सहिव खर पाक ।

घृत तैल गुडादींश्च नैकाहादवतारयेत् ।
प्रकुर्व्वन्त्युषितास्त्वेते विशेषेण गुणान् यतः ॥

घृत तैल गुड एदिनत नकरिव, अनेक दिनिया हले गुण सञ्चय हय ।

**इति घृततैल-कल्पना ।**

## अथ सन्धानम् (काञ्जिकभेदः)

संहितं धान्यमण्डादि काञ्जिकं कथ्यते जनैः ।

धान्य सिजाइ वा निसिजोवाके जलेरे कुम्भत तियाव । चाले ( चेकि लले ) ताके संहित वा सन्धान बोले । काञ्जि पारिभाषिक नाम ।

तथा च वाग्भटादौ—धान्यमेकगुणं सिद्धं जलमष्टगुणं मतम् ।
त्रिरधं घटे चोष्णतोये काञ्जिकादिषु साधनम् ॥
नानाधान्य कृतं यत्तु ब्रुवते तद्गुणाधिकम् ॥

अनेन धान्य संहित कृतत्वात् प्रचुर गुणत्वम् ।

काञ्जिकं भेदितीक्ष्णोष्णं पाचनं रोचनं लघु ।
दाहज्वरहरं स्पर्शात् पानाद् वातकफापहम् ॥

धान्य १ सेर नवीन कुम्भत थै २० दिनत काञ्जि हय । अनेकविध धान्येरे करिव ।

चरकानुमतन्तु—धान्यमेकगुणं सिद्धं जलञ्चैव चतुर्द्दश ।

धान्य १ सेर, उष्ण जल १४ सेर दि नवीन मायडत २० दिन थव, काञ्जि हय ।

माषादिवटकैर्य्यत्तु क्रियते तद्‌गुणाधिकम् ।
लघुवातहरं तत्तु रोचनं पाचनं परम् ॥
शूलाजीर्णं विवन्धामनाशनं बस्तिशोधनम् ॥

माटि माह बाटि ४ टकीया मोदक करिव, रौद्रत शुकाइ लव १ भाग, उष्ण जल १४ भाग नवीन मायडत २० दिन थै काञ्जि करिव ।

इति काञ्जिकम् ।

## अथ तुषोदकम्

तुषोदकैर्य्यवैरामैः सतुषैः सकली कृतैः ।
तुषाम्बु दीपनं हृद्यं कण्डूक्रिमिगदापहम् ॥
तीक्ष्णोष्णं पाचनं पित्तरक्तहृद्वस्तिशूलनुत् ॥

यव खुन्दि तुषेरे सहिते १ सेर, जल १४ सेर स्निग्ध मायडे स्थाप्यं ।

इति तुषोदकम् ।

## अथ सौवीरः

सौवीरस्तु यवैरामैः पक्वैर्व्वा निस्तुषीकृतैः ।
गोधूमैरपि सौवीरमाचार्य्याः केचिदूचिरे ।
सौवीरन्तु ग्रहण्यर्शः कफघ्नं भेदि दीपनम्
उदावर्त्तभ्रमच्छर्द्दिशूलानाहेषु शस्यते ॥

यव तुष गुचाइ १ सेर लव, जल १४ सेर दि नवीन मायडत थव ।

इति सौवीरः ।

## अथ आरणालम्

आरणालन्तु गोधूमैरामःस्यान्निस्तुषीकृतैः ।
पक्वैर्व्वा संहितैस्तत्तु सौवीर-सदृशं गुणैः ॥

तुष नाइकिया गोमधान्य सिजाए वा निसिजोवाके वा जलत पेलाइ थव ।

इत्यारणालम् ।

## अथ धान्याम्लम्

धान्याम्लं शालिचूर्णाच्च कोद्रवादिकृतम्भवेत् ।
धान्याम्लं धान्ययोनित्वात् प्रीणनं लघु दीपनम् ॥
उदावर्त्तभ्रमच्छर्द्दितृष्णानाहेषु शस्यते ॥

तुष गुचुवा शालि पिष्टक १ सेर, जल १४ सेर स्निग्धं घटे स्थाप्यं ।

## अथ सौण्डाकी

सौण्डाकी राजिकायुक्तैः स्यान्मूल कदलद्रवैः ।
सर्षप स्वरसैर्व्वापि शालिपिष्टकसयुतैः ॥

लाइ १ पोवा, मूला १ पोवा, कदलीकन्द १ पोवा, सर्षप १ पोवा, जल १८ सेर स्निग्धं घटे स्थाप्यं ।

## अथ शुक्तम्

कन्दमूलफलादीनि सस्नेह-लवणानि च ।
यत्र द्रव्येऽपि भूयन्ते तच्चुक्तमभिधीयते ॥
शुक्तं कफघ्नं तीक्ष्णोष्णं रोचनं पाचनं लघु ।
पाण्डु-क्रिमिहरं रुक्षं भेदनं रक्तपित्तहृत् ॥

कन्दमूल, अम्लफल ( सोलेङ्ग ) तैल लवण एतानि समभागानि जल १४ भाग स्निग्धं घटे स्थाप्यम ।

वाग्भटमदन्नु सर्व्वत्र जलाष्टभागमिति पठन्ति । मया पूर्व्वत्र चरकानुमतं लिखितं । द्रव्य १ भाग, जल ८ भाग इति वाग्भटादौ ।

## अथ शुक्तम् वा चुक्तम्

यन्मस्त्वादि शुचौ भाण्डे सगुड़-क्षौद्रकाञ्जिकम्
धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्तं तदुच्यते ॥

मस्तु दधि ( घोल ) १ सेर, गुड़ १ सेर, मधु १ सेर काञ्जि १ सेर, नवीन भाण्डत ३ राति धानर भितरत थव । शुक्तं भवति ।

## अथ मद्यम्

मद्यन्तु सिधुमैरेय मिरा च मदिरा सुरा ।
कादम्बरी वारुणी च हालापि वनवल्लभा ॥
पेयं यन्मोदेकं लोके तन्मद्यमभिधीयते ।
विधिना मात्रयाकाले हितैरन्नैर्य्यथावलम् ॥
प्रहृष्टो यः पिवेन्मद्यं तस्य स्यादमृतोपमम् ।
अयुक्तियुक्तं रोगाय युक्तियुक्तं रसायनम् ॥

अव्यवहारत्वान्न लिखितम् ।

## इति मद्यम् ।

## अथ लौहासवः

लौहचूर्णं त्रिकटुकं त्रिफलाञ्च यमानिकाम् ।
विडङ्गं चित्रकं मुस्तं चतुःसंख्यापलं पृथक् ॥
चूर्णीकृत्य ततः क्षौद्रं चतुषष्टिपलं क्षिपेत् ।
दद्याद् गुड़तुलान्तत्र जलद्रोणद्वये तथा ॥
घृतभाण्डे विनिःक्षिप्य विदध्यान्माषमात्रकम् ।
लौहासवं पिवेत् सद्यः पानाद्वह्निकरं परम् ॥
पाण्डु श्वयथुगुल्मादि जठरान्यर्शसां रुजां ।
कुष्ठं प्लीहोदरं कण्डूं कासं श्वासं भगन्दरम् ॥
अरोचकञ्चग्रहणीं हृद्रोगञ्च विनाशयेत् ॥

लौहचूर्ण ३२ तोला, त्रिकटु ९६ तोला, त्रिफला ९६ तोला, यमानी ३२ तोला, विड़ङ्ग ३२ तोला, चिता ३२ तोला, मथा ३२ तोला, मधु ६ सेर १ पोवा १२ टका, गुड़ १० सेर, जल ५१ सेर १६ टका, स्निग्धभाण्डे एकमास मुख बान्धि थव अतः २ तोला पेयं ।

## इति लौहासवः ।

## कुटजारिष्टः

तुलां कुटजमूलस्य मृद्वीकार्द्धतुलां तथा ।
मधुकपुष्प-काश्मर्य्योर्भागान् दशपलोन्मितान् ॥
चतुर्द्रोणेऽम्भसः पक्त्वा द्रोणञ्चैवावशेषितम् ।
धातक्या विंशतिपलं गुड़स्य च तुलां क्षिपेत् ।
मासमात्रं स्थितो भाण्डे कुटजारिष्टसंज्ञितः ॥

ज्वरान् प्रशमयेत् सर्व्वान् कुर्य्यात्तीक्ष्णं धनञ्जयं ( अग्निं ) ।
दुर्व्वारां ग्रहणीं हन्ति रक्तातिसारमुल्वनम् ॥

कुटजमूल चूर्ण १० सेर, गमारीगुटि चूर्ण ५ सेर, मधु १ सेर, सोणार चूर्ण १ सेर, जल १०२ सेर १ पोवा १२ टका, पक्त्वा शेष २५ सेर २ पोवा ८ टका, धाइफुल चूर्ण २ सेर, गुड़ १० सेर, मिलिय भायडे १ मास स्थाप्य अतो पेयम् ।

इति कुटजारिष्टः३ ।

## अथ मधु

मधुमाक्षिकमाध्वीक क्षौद्रसारध्यमीरितम् ।
मक्षिकावरटीभृङ्गवान्तपुष्परसोद्भवम् ॥
मधुशीतं लघु स्वादु रुक्षं ग्राहि विलेखनम् ।
चक्षुष्यं दीपनं स्वर्य्यं व्रणशोधनरोपणम् ॥
सौकुमार्य्यकरं सूक्ष्मं परं स्रोतो विशोधनम् ।
कषायानुरसंह्लादि प्रसादजनकं परम् ॥
वल्यं [ वर्ण्यं ] मेधाकरं वृष्यं विशदं रोचनं हरेत् ।
कुष्ठार्शःकासपित्तास्र [ पित्तास्र ] कफमेहक्लमक्रिमीन् ॥
मेदस्तृष्णावमिश्वास-हिक्कातिसार-विड्ग्रहान् ।
दाहक्षत क्षयां स्तत्तु योगवाह्यल्पवातलम् ॥

## अथ गुड़ः

इक्षुरसो यः सम्पक्वः जायते लोष्ट्रवद् दृढ़ः ।
सगुड़ो गौरदेशे तु मत्स्यण्डीव गुड़ोमतः ॥
गुड़ो वृष्यो गुरुः स्निग्धो वातघ्नो मूत्रशोधनः ।
नातिपित्तकरोमेदः कफक्रिमिवलप्रदः ॥

इक्षुरसर गुड़ पागिव ।

३ । आयुर्व्वेदसंग्रहादौ कुटजारिष्टः—

कुटज छाल १२॥० सेर, द्राक्षा ६।० सेर, मउल फुल १० पल, गाम्भारीछाल १० पल, पाकार्थ जल २५६ सेर, शेष ६४ सेर एइ काथत धाइफुल २० पल, गुड़ १२॥० सेर मिश्रित करि आवृत पात्रत १ मास राखिब । पिचत चेकि लब । एइ अरिष्ट पान करिले दुर्निवार ग्रहणी रक्तातिसार आर सर्व्वप्रकार ज्वर प्रशमित एवं अग्नि तीक्ष्ण हय ।

गुड़ोजीर्णो लघुःपथ्यमभिष्यन्द्यग्निपुष्टिकृत् ।
पित्तघ्नोमधुरो वृष्यो वातघ्नोऽसृक्प्रसादनः ॥

गुणाः— खण्डस्तु मधुरं वृष्यं चक्षुष्यं बृंहणं हिमम् ।
वातपित्तहरं स्निग्धं बल्यं वान्तिहरं परम् ॥

खण्डस्तु सिकतारूपं सुश्वेतं शर्करासिता ।
सितामृतमधुरा रुच्या वातपित्तास्रदाहकृत् ।
मूर्च्छाच्छर्दिज्वरान् हन्ति सुसिता शुक्रकारिणी ॥

सिता चेनि ।

इति खण्डः ।

### मधुखण्डः

मधुजा शर्करारुक्षा कफपित्तहरा गुरुः ।
छर्द्यतिसार तृड्दाह रक्तं हन्ति वरा हिमा ॥
यथा यथैषां नैर्म्मल्यं मधुरत्वं तथा तथा ॥

### अथ क्षीराणां निर्णयः

दुग्धं क्षीरं पयः स्तन्यं वालजीवनमित्यपि ।
दुग्धं सुमधुरं स्निग्धं वातपित्तहरं परम् ॥

एते सर्व्वे दुग्धस्य पर्य्यायाः ।

गव्यं-दधि विशेषेण मधुरं रसपाकतः ।
शीतलं तृप्तिकृत् स्निग्धं वातपित्तास्रनाशनम् ॥
दोषधातुमल-स्रोतः किञ्चित् क्लेदकरं गुरु ।
जरा-मरक-रोगाणां शान्तिकृत् सेवितं महत् ॥

### अथ वर्णभेदे गुणभेदाः

कृष्णाया गोर्भवेद् दुग्धं वातहारिगुणाधिकम् ।

काला गरुर गाखीरे वायु शान्त करे । सवातो कै श्रेष्ठ ।

पीताया हरते पित्तं तथावातहरं भवेत् ।

हालधीया गरुर गाखीरे पित्तवात दुइको शान्त करे ।

श्लेष्माणं गुद शुक्लायाः रक्ताचित्रा च वातहृत् ।

बगा गरुर दुग्धे कफ करे, उदर गुरु करे । रक्तापखरा गाबी दुग्धे वात शान्ति करे ।

वालवत्साविवत्सानां गवां दुग्धं त्रिदोषजित् ।

दुइ तिनि माहत पोवालीमरा गरुर गाखीरे तिनिओ दोष नष्ट करे ।

वस्कयिन्या स्त्रिदोषघ्नं तर्पणं वलकृत् पयः ।

वखनीया गरुर दुग्धे त्रिदोष नष्ट करे, तृप्तिकारक ओ वलकारक ।

## अथाहारविशेषे गुणविशेषः

स्वल्पान्न भक्षणाजातं क्षीरं गुरुकफप्रदम् ।
तत्र वल्य परं वृष्यं स्वस्थानां गुणदायकम् ॥

घाहनोपोवा गरुए बिछादि खाइ, मेइ गो दुग्धे कफ करे, गुरुपाकि । घाह पोवा गो दुग्धे वल करे, कान्तिकरे, अनेक गुणदायक ।

पलालतृण४ कार्पास-वीजजं रोगिणे हितम् ।

धानखेर, दुर्व्वा, कपाहरगुटि, इसकल खोवा गो दुग्धे अनेक रोग नष्ट करे ।

## अथ महिषीदुग्धस्य गुणाः

माहिषं मधुरं क्षीरं स्निग्धं शुक्रकरं गुरु ।
निद्राकरमभिष्यन्दि क्षुधास्थैर्यं करं हिमम् ।

माहिषी क्षीर, मधुर सुन्दर करे, वीर्य्यं करे, निद्रा करे, कफ करे मोक नेलागे ।

## अथ छागीदुग्धस्य गुणाः

छाग कषायं मधुरं शीतं ग्राही पयोलघु ।
रक्त पित्तातिसारघ्नं क्षयकासज्वरापहम् ॥
अजानामल्पकायत्वात् कटुतिक्तादि भक्षणात् ।
स्तोकाम्बुपानाद् व्यायामात् सर्व्वरोगापहं पयः ॥

छागदुग्ध कषाय मधुर, शीत लघु, जीर्ण हइ । रक्तपित्त,अतिसार, क्षय,कास, ज्वर इसब नष्ट करे । छागर अल्प शरीर । . ज्वला, तिता, सकलो खाइ, अति स्थिरे नेथाके, अतएव छागदुग्धपानात् सकलो रोग गुचे ।

---

४ । पलालः शष्पशून्यधान्यनाल । पोयाल इति भाषा-शब्दकल्पद्रुमे ।

## अथ धारोष्णादिगुणाः

धारोष्णं गोपयो बल्यं लघुशीतं सुधासमम् ।
दीपनञ्च त्रिदोषघ्नं तद्धार-शिशिरं त्यजेत् ॥
धारोष्णं शस्यते गव्यं धाराशीतन्तु माहिषम् ।
मृतोष्णमाविकं पथ्यं मृत-शीतमजा पयः ॥

गरुर धारोष्ण क्षीर अमृत समान, बल अग्नि दीप्ति करे । लघुशीत त्रिदोष नष्ट करे । सर्व्वत्र प्रशस्त । महिषर धारोष्णाशीत । भेरार धारोष्णा उष्ण खाव । छागलर धारोष्णा चेचा करि खाव । व्याधि विशेषे गुण विशेषाः ।

मृतोष्णं कफवातघ्नं मृतशीतन्तु पित्तनुत् ।
अर्द्धोदकं क्षीरशिष्टमेयां लघुतरं पयः ॥

पगा उष्ण क्षीरे कफवात नष्ट करे, पगा शीत क्षीरे पित्त नाश करे । क्षीर १ भाग, जल १ भाग सिद्धे शेष १ भाग । क्षीर १ भाग, जल ४ भाग सिद्धे शेष १ भाग पेयम । एइ क्षीर प्रशस्त ।

### इति क्षीराणां निर्णयः ।

## अथ खण्डादियुक्त दुग्धगुणाः

खण्डेन सहितं दुग्धं कफहृत् पवनापहम् ।
सितामितोपलायुक्तं बल्यञ्च त्रिमलापहम् ॥

बन्धा गुड़के खयाड बोले । खयाड सहित क्षीर खाने कफ नाश करे, वायु शान्त करे । चिनिरे दुग्ध खाले वीर्य्य बाढ़े, त्रिदोष नाश करे ।

## अथ निन्दितदुग्धम्

विवर्णं विरसं चाम्लं दुर्गन्धि ग्रथितं पयः ।
वर्ज्जयेल्लवणैर्य्युक्तं कुष्ठादिकृद् यतो मतः ॥

क्षीर विवर्णा सेरङ्गा, अम्ल, दुर्गन्धि, क्षीराले गोट बान्धे इसव निन्दित दुग्ध । टेङ्गार लवणेरे मिहलाव क्षीर खाने कुष्ठादि रोग जन्मे ।

### इति क्षीराणि ।

अम्लन्तु दीपनं पित्तरक्तश्लेष्मविवर्द्धनम् ।
अत्यम्लं दीपनं रक्तपित्तदुष्टिकरं परम् ॥

दन्त सिर सिराइ लोम सिहरे । गोदधिर तलनित यि जल थाके ताके मस्तु बोले ।

## अथ दधिगुणाः

गव्यं दधि विशेषेण स्वादु बल्यं रुचिप्रदम् ।
पवित्रं दीपनं स्निग्धं पुष्टिकृत् पवनापहम् ॥

किञ्चित् अरुचिकरं । शेषं सुगमम् ।

उक्तं दध्नामशेषाणां मध्ये गव्यं गुणाधिकम् ।

महिषर, छागर दधित चाइ गोदधि श्रेष्ठ ।

पक्व दुग्धभवं रुच्यं दधि-स्निग्धं गुणोत्तरम् ।
पित्तानिलापहञ्चैव धात्वग्निबलवर्द्धनम् ॥

पका दुग्धर दधि रुचिकारक, सुन्दर शरीर करे, गुणश्रेष्ठ, पित्तवात नष्ट करे, सप्तधातु वृद्धि करे, अग्निबल वृद्धि करे ।

असारं दधि संग्राहि शीतलं वातलं लघु ।
विष्टम्भी दीपनं रुच्यं मधुरं नाति पित्तकृत् ॥

चामनि तुचोवा दधि ग्रहण्यादित हित, लघु त्रिदोष नाश करे । विष्ठा बद्ध करे, अग्निदीप्ति करे, रुचिकारक । अतिपित्त नकरे ।

सशर्करं दधिश्रेष्ठं तृष्णापित्तास्रदाहजित् ।
सगुडं वातनुद् वृष्यं वृंहणं तर्पणं गुरु ॥

चिनि सहित दधि श्रेष्ठ, पिपासा, रक्तपित्त, दाह इसब घुचे । गुड़ सहित दधि खाले वातनाश, शुक्र शरीर व्यापे, तृप्ति करे, गुरुपाकी ।

न नक्तं दधि भुञ्जीत न चाप्यघृतशर्करम् ।
नामुद्‌ग सूपं नाक्षौद्रं नोष्णं नामलकैर्विना ॥

अयमर्थः—रात्रौ दधि न भुञ्जीत, भुञ्जीत चेत्तदा घृत शर्करमुद्‌गसूप क्षौद्र आमलकादियुक्तं भुञ्जीत । अग्न्यादि द्वारा उष्ण करि दधि नेखाव । तेन घृतशर्करादियुक्तं दधि रात्रावपि भुञ्जीतेत्यर्थः ।

तथा च चरके— शस्यते दधि नो रात्रौ शस्तञ्चाम्बु घृतान्वितम् ।
रक्तपित्त कफोत्थेषु विकारेषु न तत् शुभम् ॥

एतेषु रोगेषु दधि न भुञ्जीत ।

ज्वरासृक् पित्त विसर्प कुष्ठ पाण्ड्वामय भ्रमान् ।
प्राप्नुयात् कामलां चोग्रां विधिं हित्वा दधिप्रियः ॥

## इति दधिनिर्णयः ।

### अथ तक्रम्

तक्रं पादजलं प्रोक्तमुदश्विदर्द्धवारिकम् ।
चच्चिका सरहीनं स्यादच्छं प्रचुरवारिका ॥
शर्करया हितं घोलं रसानां वल्गु मन्थनात् ॥

सरगुचोवा दधि ३ भाग, जल १ भाग मथि हातत लगा सर गुचाइ लव, इयाके तक्र व'

तक्रं ग्राहि कषायाम्लं स्वादु पाकरसं लघु ।
वीर्य्योष्णं दीपनं वृष्यं प्रीणनं वातनाशनम् ॥
ग्रहण्यादौ मतं पथ्यं भवेत् सग्राहि लाघवात् ।
किञ्चित् स्वादुविपाकित्वान्न च पित्तप्रकोपनम् ॥

न तक्रसेवी व्यथते मनुष्यः ।
न तक्रदग्धाः प्रभवन्ति रोगाः ॥
यथा सुराणाममृतं सुखाय ।
तथा नराणां भुवि तक्रमाहुः ॥

नैव तक्रं क्षते दद्यान्नोष्णे काले न दुर्व्वले ।
न मूर्च्छा भ्रमदाहेषु न रोगे रक्तपित्तके ॥ सुगमम् ।

सरगुचुवा दधि २ भाग, जल २ भाग, इयाक उदश्वित् बोंले । दधिर सर गुचाले चच्चिका बोले । घोलमथते शर्करागुदि गुचिव ।

उदश्वित् कफकृद् वल्यं श्रमघ्नं परमं मतम् ।
चच्चिका शीतला लघ्वी पित्तश्रमतृषाहरी ॥
वातनुत् कफकृत् सा तु दीपनी लवणान्विता ।
वातपित्तहरं घोलं किञ्चित् कफकरं गुरु ॥

**इति तक्रादीनां निर्णयः ।**

### अथ नवनीतम्

नवनीतं हितं गव्यं वृष्यं वर्णबलाग्निकृत् ।
संग्राहि वातपित्तासृक् क्षयार्शोऽर्दितकासहृत् ॥

तद्धितं वालके वृद्धे विशेषादमृतं शिशोः।
नवनीतं हि सद्यस्कं स्वादु ग्राहि हिमं लघु॥

पगा गाखीरर चामनिके नवनीत बोले।

इति नवनीतम्।

### अथ घृतनिर्णयः

पर्य्यायः— घृतमाज्यं हविः सर्पिः कथ्यन्ते तद्‌गुणा अथ।
घृतं रसायनं स्वादु चक्षुष्य वह्निदीपनम्।
शीतवीर्य्यं विषालक्ष्मी पापपित्तानिलापहम्॥
अल्पाभिष्यन्दि कान्त्योजस्तेजोलावण्यवृद्धिकृत्।
स्वरस्मृतिकरं मेध्यमायुष्यं वलकृद् गुरु॥
उदावर्त्तज्वरोन्मादशूलानाह व्रणान् जयेत्।
स्निग्धं कफकरं रुक्षं क्षयविसर्परक्तनुत्॥

सर्व्वघृतस्य।

### अथ गव्यघृतस्य गुणाः

गव्यं घृतं विशेषेण चक्षुष्यं वृष्यमग्निकृत्।
स्वादुपाकरसं शीतं वातपित्तकफापहम्॥
मेधालावण्यकान्त्योजस्तेजोवृद्धिकरं परम्।
अलक्ष्मीपापरक्षोघ्नं वयसः स्थापकं गुरु॥

### अथ महिषीघृतस्य गुणाः

माहिषन्तु घृतं स्वादु पित्तरक्तानिलापहम्।
शीतलं श्लेष्मणं वृष्यं गुरु स्वादु विपच्यते॥

### अथ छागघृतस्य गुणाः

आजमाज्यं करोत्यग्निं चक्षुष्यं वलवर्द्धनम्।
कासे श्वासे क्षये चापि हितं पाके भवेत् कटु॥

## अथ तप्तदुग्ध-घृतस्य गुणाः

घृतं दुग्धभवं ग्राहि शीतलं नेत्ररोगहृत् ।
निहन्ति पित्तदाहास्र मदमूर्च्छा भ्रमानिलान् ॥

## अथ पुराण-घृतस्य गुणाः

वर्षादूर्द्धं भवेदाज्यं पुराणं तत् त्रिदोषनुत् ।
मूर्च्छाकुष्ठविषोन्मादापस्मारतिमिरापहम् ॥
यथा यथाऽखिलं सर्पिः पुराणमधिकं भवेत् ।
तथा तथा गुणैःस्वैः स्वैरधिकं तदुदाहृतम् ॥

## अथ नवीन-घृतस्य विषयाः

योजयेन्नवमेवाज्यं भोजने तर्पणे श्रमे ।
बलक्षये पाण्डुरोगे कामला नेत्ररोगयोः ॥

## अथ घृत-प्रयोगस्य विषयाः

राजयक्ष्मणि वाले च वृद्धे श्लेष्मकृते गदे ।
रोगे सामे विसूच्याञ्च विबन्धे च मदात्यये ॥
ज्वरे च दहने मन्दे न सर्पिर्बहु मन्यते ॥

## इति घृतनिर्णयः ।

## अथ मूत्रनिर्णयः

गोमूत्रं कटुतीक्ष्णोष्ण-क्षारं तिक्तं कषायकम् ।
लघ्वग्निदीपनं मेध्यं पित्तकृत् कफवातहृत् ॥
शूलगुल्मोदरानाह कण्ड्वक्षिमुखरोगजित् ।
किलासगद-वाताम-वस्तिरुक् कुष्ठनाशनम् ॥
कासश्वासापहं शोथ-कामलापाण्डुरोगहृत् ॥
कण्डूकिलास-गदशूल-मुखाक्षिरोगान्,
गुल्मातिसारमुदरामय मूत्ररोधान् ।
कासं सकुष्ठ जठरक्रिमिपाण्डुरोगान्,
गोमूत्रमेकमपि पीतमपाकरोति ॥

सर्व्वेष्वपि च मूत्रेषु गोमूत्रं गुणतोऽधिकम् ।
अतोऽविशेषात् कथने मूत्रं गोमूत्रमुच्यते ।
प्लीहोदरश्वासकासशोथवर्च्चोग्रहापहम् ।
शूलगुल्मरुजानाह कामलापाण्डुरोगहृत् ॥
कषायं तिक्ततीक्ष्णञ्च पूरणात् कर्णशूलनुत ॥

इति गोमूत्रम् ।

अथ नरमूत्रम्—नरमूत्रं गरं हन्ति सेवितं तद्रसायनम् ।
रक्तपामाहरं तीक्ष्णं सक्षारलवणं स्मृतम् ॥
गोऽजावि महिषाणान्तु स्त्रीणां मूत्र प्रशस्यते ।
खरोष्ट्रेभ नराश्वानां पुंसां मूत्रं हितं मतम् ॥

इति मूत्रनिर्णयः ।

## अथ तैलवर्गः५

### अथ तिलतैल गुणाः

तिलतैलं गुरुस्थैर्य्य-वलवर्णकरं सरं ।
वृष्यं विकाशि विशदं मधुरं रसपाकयोः ॥
सूक्ष्मं कषायानुरसं तिक्तं वात कफापहम् ।
वीर्य्येणोष्ण हिमं स्पर्शे वृंहणं रक्तपित्तकृत् ॥
लेखनं वद्ध विन्मूत्रं गर्भाशय विशोधनम ।
दीपनं वृद्धिद मेध्य व्यवायि व्रणमेहनुत् ॥
श्रोत्रयोनि-शिरःशूलनाशनं लघुताकरम् ।
त्वच्यं केश्यञ्च चक्षुष्यमभ्यङ्गे भोजनेऽन्यथा ॥
छिन्नभिन्नच्युतोत्पिष्ट मथिते क्षतपिच्चिते ।
भग्नस्फुटित विद्धाग्नि दग्धविश्लिष्ट दारिते ॥

५ । तिलादि स्निग्धवस्तूनां स्नेहस्तैलमुदाहृतम् ।
तत्तु वातहरं सर्व्वं विशेषात्तिलसम्भवम् ॥
घृतमब्दात् परं पक्वं हीनवीर्य्यं प्रजायते ।
तैलं पक्वमपक्वं वा चिरस्थायि गुणाधिकम् ॥ —आयुर्व्वेदसंग्रहे देवेन्द्रः ।

तथाभिहत निर्भुग्न मृगव्याघ्रादि विद्यते ।
वस्तौ पानेऽन्न संस्कारे नस्ये कर्णाक्षिपूरणे ।
सेकाभ्यङ्गावगाहेषु तिलतैलं प्रशस्यते ॥

इति तिलतैलम् ।

## अथ सार्षप-तैलगुणाः

दीपनं सार्षपं तैलं कटुपाकं रसं लघु ।
लेखनं स्पर्शवीर्य्योष्णं तीक्ष्णं पित्तास्रदूषकम् ॥
कफमेदोऽनिलार्शोघ्नं शिरःकर्णामयापहम् ।
कण्डूकुष्ठ क्रिमिश्वित्र कोठ दुष्टव्रण प्रणुत् ॥

इति सार्षप-तैलम् ।

## अथ राजिका-तैल गुणाः

तद्वद् राजिकयोस्तैलं विशेषान्मूत्रकृच्छ्रकृत् ।

## अथैरण्डतैलगुणाः

एरण्डतैलं तीक्ष्णोष्णं दीपनं पिच्छिलं गुरु ।
वृष्यं त्वच्यं वयःस्थापि मेधाकान्तिवलप्रदम् ॥
कषायाणुरसं सूक्ष्मं योनिशुक्र विशोधनम् ।
विस्रं स्वादुरसं पाके सतिक्तं कटुकं सरम् ॥
विषमज्वरहृद्रोग-पृष्ठगुह्यादि शूलनुत् ।
हन्ति वातोदरानाह गुल्माष्ठीला-कटिग्रहान् ।
वातशोणित विड्‌वन्ध ब्रध्नशोथामविद्रधीन् ।
आमवात गजेन्द्रस्य शरीर वनचारिणः ।
एक एव निहन्तायमेरण्ड स्नेहकेशरी ॥

इति तैलनिर्णयः ।

## अथ स्नेहानुपानम्

तैलं घृतं वा युञ्जीत दृष्ट्वा दोष वलावलम् ।
घृते कोष्णजलं पेयं तैले यूषः प्रशस्यते ॥

त्रयोविंशः परिच्छेदः

# चिकित्सास्थाने रोगिचिकित्सोपदेशः

## ९५। अथ पञ्चकर्म्माणि[1]

शरत्काले वसन्ते च प्रावृट्काले च देहिनां[2]।
वमनं रेचनञ्चैव कारयेत् कुशलो भिषक ॥

आश्विन कार्त्ति शरतऋतु, चैत्र वैशाख वसन्तऋतु, शाउनभाद्र प्रावृट्ऋतु ; [भाद्र आश्विन शरत फाल्गुन चैत्र वसन्त, आषाढ श्रावण प्रावृट् ऋतु इत्येकमतम ] एइ तिनि ऋतुत वान्ति विरेचन वैद्ये कराव।

वलवन्तं कफव्यार्त्तं हृल्लासादि निपीड़ितम्।
तथा वमनसात्म्यञ्च धीरचित्तञ्च वामयेत् ॥

शरीर वलवन्त हुव, वुकत कफे धरे, एने जनक वान्ति कराव शान्त हय।

विषदोषे शूलरोगे [स्तन्यरोगे] मन्देऽग्नौ श्लीपदेऽर्व्वुदे।
हृद्रोगे कुष्ठविसर्पे मेहेऽजीर्णे भ्रमेषु च ॥
विदारिकापचीकास-श्वासपीनसवृद्धिषु।
अपस्मारे ज्वरोन्मादे तथा रक्तातिसारिषु ॥
नासाताल्वोष्ठपाकेषु कर्णस्रावेऽधिजिह्वके।
गलशुण्ड्यामतिसारे पित्तश्लेष्मगदे तथा ॥
मेदोगदेऽरुचौ चैव वमनं कारयेद् भिषक् ॥
न वामनीयस्तिमिरी न गुल्मी नोदरीकृशः।
नातिवृद्धो गर्भिणी च न स्थूलो न क्षतातुरः ॥

---

१। प्रथमं वमनं पश्चाद् विरेकश्चानुवासनम्।
एतानि पञ्चकर्म्माणि निरूहो नावनन्तथा ॥ —आयुर्व्वेदसंग्रहे देवेन्द्रः।

२। द्वौ द्वौ माघादिमासः स्याद् ऋतु स्तैरयणं त्रिभिः। —इत्येकमतम्।
मासैर्द्विसंख्यैर्माघाद्यैः क्रमात् षड् ऋतवः स्मृताः।
शिशिरोऽथ वसन्तश्च ग्रीष्म वर्षा शरद्धिमाः ॥
शिशिराद्यै स्त्रिभिस्तैस्तु विद्यादयनमुत्तरम्।
वर्षादिभिस्त्रिभिश्चैव विद्याद्द दक्षिणायनम् ॥ —आयुर्व्वेदसंग्रहे देवेन्द्रः।

मदार्त्तो बालको रूक्षः क्षुधितश्च निरूहितः ।
उदावर्त्त्यूर्द्धरक्ती च दुश्चछर्दः केवलानिली ॥
[ पाण्डुरोगी क्रिमिव्याप्तः पवनात् स्वरघातवान् ]
एषु रोगेषु वमनं न कर्त्तव्यं भिषग्वरैः ॥

वमनौषधमाह— क्वाथद्रव्यस्य कुड़वं श्रापयित्वा जलाढ़के ।
अर्द्धभागावशिष्टञ्च वमनेष्ववचारयेत् ॥
कृष्णां राटफलं सिन्धुं कफे कोष्णजलैः पिवेत् ॥

कोटकरा फल ( मदन फल ) ३२ टका, जल ६ सेर ३२ टका, सिद्धे शेष ३ सेर १६ टका, पिप्पली चूर्ण ३२ रति, सैन्धव ३२ रति दत्वा आलोड्य पेयं । कफे वमेत ।

पटोलवासानिम्बञ्च पित्ते कोष्णजलैः पिवेत् ।

पटोलपत्र, वासकपत्र, निम्बपत्र एषां मिलि ३२ टका, जल ६ सेर ३२ टका, सिद्धे शेष ३ सेर १६ टका पीत्वा वमेत् पित्ते ।

सश्लेष्म वातपीड़ायां सक्षीरं मदनं पिवेत् ।

मदनफल मज्जा २ तोला, क्षीर ३२ तोला, पिष्ट्वा आलोड्य पेयं । कफवात पीड़ायां वमेत ।

इति वमनम् ।

## अथ विरेचनविधिः

बालो वृद्धो भृशं स्निग्धः क्षतक्षीणो भयान्वितः ।
श्रान्तस्तृषार्त्तः स्थूलश्च गर्भिणी च नवज्वरी ॥
नवप्रसूता नारी च मन्दाग्निश्च मदात्ययी ।
शल्यार्द्दितश्च रूक्षश्च न विरेच्यो विजानता ॥

इसवत रेचन नकरिव ।

जीर्णज्वरी गरव्याप्तो वातरक्ती भगन्दरी ।
अर्शः पाण्डूदर ग्रन्थि हृद्रोगारुचिपीड़िताः ॥
योनिरोगप्रमेहार्त्ता गुल्मप्लीहव्रणार्द्दिताः ।
विद्रधिच्छर्द्दिविस्फोट-विसूचीकुष्ठसंयुताः ॥
कर्णनासाशिरोवक्त्र गुदमेढ्रामयान्विताः ।
प्लीहशोथाक्षिरोगार्त्ताः क्रिमिक्षारानलार्द्दिताः ।
शूलिनो मूत्राघातार्त्ता विरेकार्हा नरा मताः ॥

इसब व्याधित रेचन कर ब ।

बहुपित्तो मृदुः प्रोक्तो बहुश्लेष्मा च मध्यमः ।
बहुवातः क्रूरकोष्ठो दुर्व्विरेच्यः स कथ्यते ॥
मृद्वी मात्रा मृदौ कोष्ठे मध्यकोष्ठे च मध्यमा ।
क्रूरे तीक्ष्णा मता द्रव्यैर्मृदुमध्यमतीक्ष्णकैः ॥

पित्ते मृदुरेचनमाह—

मृदुर्द्राक्षापयश्चञ्चु तैलैरपि विरिच्यते ।

गमा॰गुदिर साह २ तोला बाटि जल ३२ तोला, अर्द्धमृत प्रक्षेप एरण्ड तैल २ तोला दत्वा पेयम् ।

कफे मध्यमरेचनमाह—

मध्यमस्त्रिवृता तिक्ता राजवृक्षैर्विरिच्यते ।

तेउडिया, कटकीतिता द्वयोश्चूर्णा २ तोला, सोणारु क्वाथ पलेकेन पेयं ।

वाते तीक्ष्णरेचनमाह—

क्रुरः स्नुक्पयसा हेमक्षीरिदन्तीफलादिभिः ॥

शूले भरे, पेट उबहे अनेक उपद्रव हय, तस्य रेचनम् । टेपर क्वाथ २ तोला, जल २ तोला, शोधित सिजु आठा १ रति दत्वा पेयम् । अथवा टेपरर क्वाथ ८ तोला शोधित जयपाल १ रति दत्वा पेयम् ।

एरण्डतैलं त्रिफला क्वाथेन द्विगुणेन वा ।
युक्तं पीतं पयोभिर्व्वा न चिरेण विरिच्यते ॥

त्रिफला क्वाथ २ पल, एरण्ड तैल २ तोला प्रक्षिप्य पेयं । दुग्धेरे वा एरण्ड तैल २ तोला पेयं । शीघ्रे रेचन हय ।

## अभयामोदकः

सर्वदोषे—अभयामरिचं शुण्ठी विडङ्गामलकानि च ।
पिप्पली पिप्पलीमूलं त्वक् पत्रं मुस्तमेव च ॥
एतानि समभागानि दन्ती तु त्रिगुणा भवेत् ।
त्रिवृताष्टगुणा ज्ञेया षड्गुणा चात्र शर्करा ॥
मधुना मोदकान् कृत्वा कर्षमात्रा प्रमाणतः ।
एकैकं भक्षयेत् प्रातः शीतञ्चानु पिवेज्जलम् ॥
तावद् विरिच्यते जन्तुर्य्यावदुष्णं न सेवते ।
पानाहारविहारेषु भवेन्निर्यन्त्रणः सदा ॥
विषमज्वरमन्दाग्नि पाण्डुकासभगन्दरान् ।
दुर्नाम कुष्ठगुल्मार्शो-गलगण्डभ्रमोदरान् ॥

विदाहप्लीहमेहांश्च यक्ष्माणं नयनामयान्।
वातरोगांस्तथा ध्मानं मूत्रकृच्छ्राणि चाश्मरीं ॥
पृष्ठपार्श्वोरुजघन जङ्घोदररुजं जयेत्।
सततं शीलनादेषां पलितानि प्रणाशयेत्॥
अभयामोदका ह्येते रसायन वराः स्मृताः ॥

शिलिखा, मरिच, आदा, विड़ङ्ग, आमलकी, पिप्पली पिप्पलीमूल, दालचिनि, तेजपत्र, मथा एतानि सममागानि १० तोला, सोन्दरपखाल चूर्ण ३ गुण ३० तोला, तेड़िया चूर्ण आट माग ८० तोला चेनि वा गुड़ ६० तोला. मधु दरवा, तोलक प्रमाणा मोदा, शीतल जलमनुपेयं, तप्तजल खाले रह। आहार नकरिव। इति अभयामोदकः।

## इति विरेचनम्।

## अथ वस्तिविधिः३

वस्तिर्द्विधानुवामाख्यो निरूहश्च ततः परम्।

अनुवासन, निरूह एइ दुइ प्रकार वस्ति।

यः स्नेहैर्दीयते स स्यादनुवासननामकः।
कषायक्षीरतैलैर्यो निरुहः स निगद्यते ॥

वस्ति विधित उक्त औषध घृत तैल मिश्र करि मलद्वारेरे दिले (खाले) अनुवासन वस्ति बोले। काथत, क्षीरत, तैलन, मिश्र करि मलद्वारेरे दिले [खाले] निरूह वस्ति बोले।

## अथानुवासनवस्तिः

शताह्वा सैन्धवाभ्याञ्च देयं स्नेहे च चूर्णकम्।

शुल्फा वा गुवामलि चूर्ण २४ रति, सैन्धव २४ रति, घृत वा तैल ८ तोला मिश्रयित्वा गुदे देयम् (खाम)। लङ्घने थाकिव, तप्त जलेरे स्नान करिव। एवमनुवासन वस्तिः।

३। शाखागतः कोष्ठगताश्च रोगा मर्म्मोर्द्ध सर्व्वावयवाङ्गजाश्च।
ये सन्ति तेषां न तु कश्चिदन्यो वायोः परं जन्मनि हेतुरस्ति ॥
विट्श्लेष्मपित्तादिमलाचयनां विक्षेप संहारकरः स यस्मात्।
तस्यातिवृद्धस्य शमायनान्यद् वस्तेर्व्विना भेषजमस्ति किञ्चित् ॥
तस्माच्चिकित्सार्द्ध इति प्रदिष्टः कृत्स्ना चिकित्सापि च वस्तिरेकैः।
तथा निजागन्तु विकारकारि रक्तौषधत्वेन शिराव्यधोऽपि ॥
—इति आयुर्वेदसंग्रहे देवेन्द्रः

## अथ निरूहः

निरूहवस्तिर्व्वहुधा भिद्यते कारणान्तरैः ।
तैरेव तस्य नामानि कृतानि मुनिपुङ्गवैः ॥

निरूह वस्ति वहु प्रकार, सर्व्वशरीर भेद निमित्ते मुनिसकले कहिछे ।

निरूहस्यापरं नाम प्रोक्तमास्थापनं वुधैः ।
स्वस्थान स्थापनाद्दोष धातूनां स्थापनं मतम् ॥

निरूह वस्तिके आस्थापन वस्ति बोले । सप्त धातुत दोष जन्मिले सेइ धातु सकलक स्थिर करे अतएव ताके आस्थापन वस्ति बोले ।

रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणि धातवः ।

एतेषां स्थापनं पोषणं ।

## अथानास्थाप्याः

अति स्निग्धः क्लिष्टदोषः क्षतोरस्कः कृशस्तथा ।
आध्मानच्छर्द्दिहिक्कार्शः शोथश्वास प्रपीड़ितः ॥
गुदशोथोऽतिसारार्त्तो विसूची कुष्ठसंयुतः ।
गर्भिणी मधुमेही च नास्थाप्याश्च जलोदरी ॥

एइ सकल व्याधित आस्थापन नकरिव ।

वातव्याधावुदावर्त्ते वातासृग् विषमज्वरे ।
मूर्च्छातृष्णोदरानाह मूत्रकृच्छ्राश्मरीषु च ॥
वृद्ध्यसृग्दरमन्दाग्नि प्रमेहेषु निरूहणं ।
शूलेऽम्लपित्ते हृद्रोगे योजयेद्विधिवद् वुधः ॥
उत्सृष्टानिल विन्मूत्रं स्निग्धं स्विन्नमभोजनम् ।
मध्याह्ने गृहमध्ये च यथायोग्यं निरूहयेत् ॥

एषु रोगेषु निरूहण करिव । विष्ठा मूत्रत्याग हुइ, अभोजने मध्याह्नत निरूह करिव ।

निरूहे चैव मतिमान् क्षारमूत्राम्बु सैन्धवैः ।
यस्य क्रमेण गच्छन्ति विटपित्तकफवायवः ॥
लाघवञ्चोपजायेत सुनिरूढ़ं तमादिशेत् ।
विविक्तता मनस्तुष्टिः स्निग्धता व्याधिनिग्रहः ॥
निरूहस्य प्रमाणञ्च प्रस्थः पादोत्तरं परं ।
अनेन विधिना दद्यान्निरूहं वस्तिदानवित् ॥

गावीमूत्र ८ टका, जल ८ टका, यवक्षार ३२ रति, सैन्धव ३२ रति आलोड्य देयम् [ पेयं ]। विष्ठा चले, पित्त शान्त करे, कफ नाश करे, वायु शान्त करे, शरीर लघु करे। अल्प रेचने तृप्ति करे, शरीर शुद्ध हइ। स्निग्ध हइ, व्याधिसकल नष्ट करे, अतएव इहार नाम निरूहवस्ति बोले।

द्वितीयम्वा तृतीयम्वा चातुर्थम्वा यथोत्तरं ।
सस्नेह एकः पवने पित्ते द्वौ पयसा सह ॥
कषायकटुमूत्राद्याः कफे कृष्णास्त्रयो हिताः ।
पित्तश्लेष्मानिलाधिक्यात् क्षीरयूषरसैः क्रमात् ॥
निरूढं भोजयित्वा च ततस्तमनुवासयेत् ॥

घृत तैलेरे १म निरूह, वातदोषत क्षीरेरे, पित्तदोषत द्वितीय निरूह ज्वलामूत्रादि, कफदोषत पिप्पली। त्रिदोष कुपित हने, गोक्षीर यूष, मांस रस इसब पथ्य करि खुवाव।

तबे निरूह करि पथ्य भोजन करि उपवास करिब। राजकुमार, वृद्धक, बालकक, क्लीक एइ सकलक तीक्ष्ण बस्ति तीक्ष्ण रेचन तीक्ष्ण औषध निदिब। शमनीय वस्ति दिब।

## अथोत्क्लेशवस्तिः

वान्ति कराके बोले। एरण्डवीजं मधुकं पिप्पली सैन्धवं वचा ।
हवुषाफलकल्कश्च वस्तिरुत्क्लेशनः स्मृतः ॥

एरा गुटि, यष्टिमधु, पिप्पली, सैन्धव, वच, हवुषा एषां मिलित चूर्ण ३२ रति, उष्ण जल १५ तोला आलोड्य पिरवा वमेत्। इत्युत्क्लेशवस्तिः।

मधु तैलिक वस्तिः—एरण्डक्काथ तुल्यांशं मधुतैल पलाष्टकं ।
शतपुष्पापलार्द्धेन सैन्धवार्द्धेन संयुतम् ॥
गन्धतैलक सञ्ज्ञेयं वस्तिर्दारुविलोड्डितः ।
मेदोगुल्मक्रिमिप्लीहमलोदावर्त्तनाशनः ॥
बलवर्णकरश्चैव वृष्योदीपनवृंहणः ॥

एरण्डमूल १ पल, जल ८ पल, शेष २ पल, मधु ४ पल, तिल तैल ४ पल, शुल्फा चूर्ण २ तोला, सैन्धव १ तोला दत्वा पेयं [ देयं ]। उष्ण उदकेरे स्नान करिब, दिवसत निद्रा नकरिब। अजीर्णत भोजन नकरिब, एइ धरणे प्रवर्त्तिब।

## अथोत्तरवस्तिः

अतःपरं प्रवक्ष्यामि वस्तिमुत्तरसंज्ञितं ।
निरूहादुत्तरो यस्मात्तस्मादुत्तरसंज्ञकः ॥

उत्तर वस्ति बोले निरूहर पर यिहेतु।

द्व्यङ्गुलं मूत्रमार्गे च सूक्ष्मं नेत्रं नियोजयेत् ।
मूत्रकृच्छ्रविकारेषु बालानान्त्वेकमङ्गुलम् ॥
शनैर्निष्क्रम्य साधेय सूक्ष्म नेत्रं विचक्षणैः ॥

मूत्रकृच्छ्र, मूत्राघात, विकार, सूक्ष्म नेत्र बुलि सरु शलाका करिब, दीर्घ १२ आङ्गुल तार मध्यत कर्णिका मालतीफुलर बेंटुर सदृश, ताते औषध तैल घृत तियाइ पुरुषर लिङ्गद्वारत २ आङ्गुल प्रवेश, बालकर १ आङ्गुल लिङ्गरन्ध्र सरु यिहेतु, शलाका दालि सरु करिब । स्त्रीर योनिरन्ध्र बहल यिहेतु, शलाका डाङ्गर करि वर्त्ति करिब । मूत्रादिरे, क्षीरिवृक्षर कषयादिरे घृत तैलादिरे एइ उत्तर बस्ति । प्रमेहत निदिब ।

घृताभ्यक्ते गुदे कृत्वा श्लक्ष्ण स्वाङ्गुलसन्निभा ।
मलप्रवर्त्तिनी वर्त्तिः कफवर्त्तिश्च सा स्मृता ॥

त्रिफला, पिप्पलीचूर्ण जलेरे वर्त्ति करि शुकाइ घृतेरे तियाइ, गुह्यद्वारत दिब । विष्ठा बाहिर हइ ।

## अथ नस्यग्रहणम्

नस्यं तत् कथ्यते धीरैर्नासा ग्राह्यं यदौषधम् ।
नावनं नस्तकर्म्मेति तस्य नामद्वयं मतम् ॥
तस्य भेदो द्विधा प्रोक्तो रेचनं स्नेहनं तथा ।
कफपित्तानिलध्वंसे पूर्व्वंमध्यापराह्णके ॥

नस्य दुइ प्रकार, चूर्ण उजोवा एकप्रकार । तैल नस्य एकप्रकार । कफ, पित्त, बात प्रकुपित हले भोजनर पूर्व्वे नस्य करिब, मध्याह्नत, अपराह्नत कफ धातु प्रधानत रात्रिते नस्य करिब ।

नस्यं त्यजेद्भोजनान्ते दुर्द्दिने चापतर्पितः ।
तथा नव प्रतिश्यायी गर्भिणी ज्वरदूषितः ॥
अजीर्णी दन्तवर्त्तिश्च पीत स्नेहोदकासवः ।
क्रुद्धः शोकाभिभूतश्च तृषार्त्तो वृद्धबालकौ ॥
वेगावरोधी स्नातश्च स्नातुकामश्च वर्ज्जयेत् ॥

एषां नस्यं न दत्तम् ।

नस्यकर्म्मणि दातव्यं शानैकं तीक्ष्णमौषधम् ।
हिङ्गुःस्याद् यवमात्रन्तु माषैकं सैन्धवं मतं ॥

त्रिकट वा राजिका चूर्ण वा २४ रति, हिङ्गु १, यवधान्य सम सैन्धव ६ रति एषां चूर्णीकृत्य नस्य दातव्यम् । कफ मस्तक शूले चेदम् । पित्तवातशूलादौ—

क्षीरञ्चैवाष्ट शानं स्यात् पानीयञ्च त्रिकार्षिकी।
कार्षिकं मधुरं द्रव्यं नस्यकर्म्मणि योजयेत् ॥

क्षीर २ तोला, जल ३ तोला, यष्टिमधु वा दालचिनि वा चूर्ण १ तोला आलोड्य नस्यम्।

अवपीड़ःप्रधमनं द्वौ भेदौ परमौ स्मृतौ।
शिरोविरेचनस्यार्थं तौ तु देयौ यथातथम् ॥

अवपीड़न एकप्रकार, प्रधमन एकप्रकार—एइ दुइ प्रकार औषध शिरोविरेचन नाम नस्य बोले।

कल्कीकृतौषधादीनां पीड़ितो निसृतो रसः।
सोऽवपीड़ः समुद्दिष्टः तीक्ष्णद्रव्यसमुद्भवः ॥

बटा द्रव्य चेपि रसलै तीक्ष्ण चूर्ण सहिते नस्य करिले अवपीड़ नस्य बोले।

गलरोगे सन्निपाते निद्रायां विषमज्वरे।
मनोविकारे क्रिमिषु युज्यते चावपीड़नं ॥

एषु रोगेषु देयं।

भीरु स्त्री कृश बालानां नस्यं स्नेहं न शस्यते।

एषु न देयं।

नस्यं स्याद् गुड़ शुण्ठीभ्यां वचमरिचसैन्धवैः।

आदार रस १ तोला, गुड़ आधातोला मिश्रयित्वा नस्यम्। वचचूर्ण २४ रति, सैन्धव ६ रति मिश्रयित्वा नस्यम्।

सैन्धवं श्वेतमरिचं सर्षपाः कुष्ठमेव च।
वस्तुमूत्रेण सपिष्टं नस्यं तन्द्रा निवारणम् ॥

सैन्धव ६ रति, सजिनावीज चूर्ण २४ रति, सर्षप चूर्ण २४ रति, कुर २४ रति मिश्रयित्वा छागमूत्र २ तोला आलोड्य नस्यम्।

रोहितमत्स्यपित्तेण भावितं मरिचं वचा।
कट्फलञ्चोत तच्चूर्णं देयं प्रधमनं बुधैः ॥

मरिच चूर्ण, वच चूर्ण रोमाछर पित्तेरे ७ दिन भावना दि सेइ चूर्ण नस्य करिब। इहाक प्रधमन नस्य बोले।

### अथ बृंहणनस्यम्

सशर्करं पयःपिष्टं युतमाज्येन कुङ्कुमं ।
नस्य प्रयोगतो हन्याद् वातरक्तभवारुजः ॥

चिनि आधा तोला, क्षीर २ तोला, घृत १ तोला, कुङ्कुम एक रुरति घर्षित्वा नस्यम् ।

भ्रशङ्खाक्षिशिरःकर्ण सूर्य्यावर्त्तार्द्धभेदकान् ।

षड्विन्दु नारायण विष्णु इसव तैल नस्यार्थे दिव ।

### इति पञ्चकर्म्माणि ।

## ९६ । अथ विधयः

### अथ धूमपानविधिः

धूमस्तु षड्विधः प्रोक्तः शमनो बृहणस्तथा ।
रेचनः कामहा चैव वामनो व्रणधूपनः ॥

शमन १, बृंहण २, रेचन ३, कासहा ४, वामन ५, व्रण धपन ६ एवं षट् धूमपानभेदाः ।

धूमोद्वादशवर्षाद् वै गृह्यतेऽशीतिकान्तं च ।

धूमपान १२ वछरीयार परा ८० वत्सर पर्य्यन्ते दिव ।

कासश्वास-प्रतिश्यायान् मन्याहनुशिरोग्रहान् ।
वातश्लेष्मविकारांश्च हन्याद्धूमः सुयोजितः ॥
धूमोपयोगात् पुरुषः प्रसन्नेन्द्रिय वाङ्मनाः ।
दृढ़केश द्विज श्मश्रुः सुगन्धि वदनो भवेत् ॥

एते धूमपानार्हाः ।

धूमनाड़ीभवेत्तत्र त्रिखण्डा च त्रिपर्व्विका ।
कनिष्ठिका परिणाहा राजमाषागमान्तरे ॥

धोवा खोवार नली तिनि खण्ड तिनि पाव, कनिष्ठा अङ्गुलिमान डाङ्गर रन्ध्रेत कलामाह याब परा हव

दीर्घमाह—धूमनाड़ी भवेद् दीर्घा समाना रोगिणोऽङ्गुलैः ।
चत्वारिंशन्मितैस्तद्वा द्वात्रिंशद्भिर्मं दुर्मता ॥

दशाङ्गुलैर्व्वामनीयै स्तथास्याद् व्रणनाड़िका ।
इषिकागर्भनलिका द्वादशाङ्गुलमानिका ॥

धूमपानर नलि रोगीर अङ्गुलीरे समान करि लव । तीक्ष्ण धूमपानत ४० अङ्गुल, मृदुत ३० अङ्गुल वान्ति धूमपानत, व्रणधूमपानत १० अङ्गुल । १२ अङ्गुलीयाक इषिका गर्भनलि बोले ।

अङ्गारैर्दीपितां कृत्वा धृत्वानेत्रस्य रन्ध्रके ।

अङ्गारर टिकिरा करि, नेत्रवोजे चिलिम, तात वदरीपात, वासकपात एइ मृदु । तामाग्नु पचतीया तीक्ष्ण धूम एइ सकल धूमपान करिव ।

वदनेन पिवेद् धूमं वदनेनैव सन्त्यजेत् ।
नासिकाभ्यां ततः पीत्वा मुखेनैव वमेत् सुधीः ॥

मुखे पान करिव । मुखे त्याग करिव । नासिकारे पान करि मुखेरे त्याग करिव ।

## धूमपानस्यौषधमाह

एलादि कल्कं शमनं स्निग्धं सर्ज्जरसं मृदौ ।
रेचने तीक्ष्णकं च स्यात् श्वासघ्नं कासनाशनं ॥

एलाचि, दालचिनि, तेजपात, नागकेशर इसव शमन धूमपानत । धूनार धूमपान मृदु । पचतीया निम धूमर, कफ रेचन करे तीक्ष्ण । भेकुरि पत्र पिप्पलीर धूम श्वासकास नाश करे । निम्ब वचर धूमे व्रणादि क्षत नष्ट करे ।

अन्येऽपि योगा रोगेषु कर्त्तव्या व्याधिशान्तये ।

## भूतादिदोषे धूपमाह

मयूरपिच्छं निम्बस्य पत्राणि वृहतीफलम् ।
मरिचं हिङ्गुमांसी च वीजं कार्पाससम्भवं ॥
छागरोमाहि निर्म्मोक विष्ठा वैरालिकी तथा ।
गजदन्तश्च तच्चूर्णं किञ्चिद् घृतविमिश्रितम् ॥
गेहेषु धूपनं दत्तं सर्व्वान् वालग्रहान् हरेत् ।
पिशाचान् राक्षसान् हत्वा सर्व्वज्वरहरं भवेत् ॥

मरा चकर, निमपात, भेकुरि वीज, जालुक, हिङ्गु, जटामांसी, कपाहगुटि, छागलोम सापर कलप, विरालर विष्ठा, हस्तिदन्त घृत सवाके मिहलाइ धूप दिव ।

इति धूमनिर्णयः ।

## अथ गण्डूषः

स्नेहक्षीरकषायादि रसैः सम्पूर्णमाननं।
आपूर्य्य स्थीयते तावद् विधि गण्डूषधारणम् ॥

घृत, तैल, क्षीर काथरसयुक्त एइ सकल मुखत लव पूर्ण करि। इहाक गण्डूष बोले।

नेत्रघ्राण स्मृति र्य्यावत्तावद् गण्डूषधारणम्।
गण्डूषः संस्थितः कुर्य्यात् स्विन्नतालुगलादिकः ॥

चक्षु, नासिका, स्मृति, ज्ञान इसव तृप्ति करे, गलत, जिह्वात कफ धरिले, ताको नाश करे—रुचि करे, गण्डूष औषध मुखत धरिजे।

तथा च सुश्रुते—चतुर्व्विधः स्याद् गण्डूषः स्नैहिको व्रणशोधनः।
शोषणोरोपणश्चैव कवलश्चापि तादृशः ॥

घृत, तैलर १, व्रणशोधन २, मुखे पानी याइ ताक शोषे ३, मुखर घा शुकाइ ४। वात दोषत घृत तैल उष्ण करि लव। पित्तत स्वादु शीतल द्रव्य लव। कफत जला लवण, जामिर, सोलेङ्ग उष्ण करि लव। वटा दरव १ तोला, रस वस्तु २ तोला, रसत चूर्ण प्रक्षेप करि लव आधा तोला।

हरेदास्यस्य वैरस्यं शोषपाकं पुनस्तृषां।
दन्तचालञ्च गण्डूषो वैरस्यञ्च करोति हि ॥

### इति गण्डूषनिर्णयः।

## अथ कवलः

वातपित्तकफघ्नस्य द्रव्यस्य कवलं मुखे।
अर्द्धं निःक्षिप्य संचर्व्या निष्ठिवेत् कवलो विधिः ॥

पित्त कफ नष्ट करे यि औषध, अर्द्ध मुख भरि चोवाइ पेलाव पुनः पुनः।

तृष्णाशोषञ्च वैरस्यं दन्तचालञ्च नाशयेत्।

### इति कवलविधिः।

## अथ प्रतिसारणम्

दन्तजिह्वामुखानां यच्चूर्णं कल्कावलेहकौ।
शनैरङ्गुल्या दीयन्ते तदुक्तं प्रतिसारणम् ॥

दन्त, जिह्वा, आढय, मुखरोग, अरुचित चूर्ण औषध वा वटा दरव, अवलेह एइ सकल अङ्गुलीयैरे बारम्बार बहाके प्रतिसारण बोले।

वैरस्यं मुखदुर्गन्धं मुखशोषं तथा तृषां ।
अरुचिं दन्तपीड़ाञ्च निहन्यात् प्रतिसारणम् ।

इति प्रतिसारणम् ।

## अथ स्वेदः

स्वेदश्चतुर्व्विधः प्रोक्तस्तापोष्ण स्वेदसंज्ञितः ।
उपनाहो द्रवः स्वेदः सर्व्वे वातार्त्तिहारिणः ॥

ताप, उष्म, द्रव, उपनाह एइ चारिविध स्वेद गेकके बोले ।

स्वेदौ तापोष्णजौ प्रायः श्लेष्मघ्नौ समुदीरितौ ।
उपनाहश्च वातघ्नः पित्तरोगे द्रवो हितः ॥

उष्म सेतु ( सेक ) कफ दोषत दिव, वातत वान्धि दिव । पित्तत जलधारा दिव, दाहताप शान्त हइ । सितस्वेद बोले, तिताकापोर सेराइ दियाक ।

अजीर्णी दुर्व्वलो मेही क्षतक्षीणः पिपासितः ।
अतिसारी रक्तपित्ती पाण्डुरोगी तथोदरी ॥
मेदस्वी गर्भिणी चैव न हि स्वेद्या विजानता ।

एइ सकल व्याधित स्वेद निदिव, दिलेओ मृदु स्वेद करिव ।

तत्र तापस्वेदमाह—तेषु तापाभिधः स्वेदः वालुकावस्त्रपाणिभिः ।
प्रस्तरैरम्लसिक्तैश्च काष्ठेन वस्त्रवेष्टितैः ॥

वालि तप्त करि कापोरत वान्धि सेओ ( सेक ) दिव । कमलि सेराइ सेओ दिव

उष्णस्वेदमाह—अथवा वातनिर्नाश द्रव्यक्वाथरसादिभिः ।
उष्णैर्घटं पूरयित्वा पार्श्वे छिद्रं विधाय च ॥

वात दोष नष्ट करा दरव कलहत सिजाइ वाथ करि वाढ दि भाप दिव

उपनाहस्वेदमाह—अथोपनाहं स्वेदञ्च कुर्य्याद् वातहरौषधैः ।
प्रदद्याद् देहे वातार्त्तः क्षीरमांसरसादिभिः ॥
अम्लपिष्टैः सलवणैः सुखोष्णैः स्नेहसंयुतैः ।
दधि सौवीरक क्षीरैर्व्वीरतर्व्वादिना तथा ॥
कुलत्थमाषगोधूमैरतसी-तिलसर्षपैः ।
शतपुष्पादेवदारुशेफालीमूलजीरकैः ॥

एरण्डमूलवीजैश्च रास्नामूलक-शिग्रुभिः ।
मिसिकृष्णाकुठेरैश्च लवणैरम्लसंयुतैः ॥
प्रसारण्यश्वगन्धाभिर्बलाभिर्दशमूलकैः ।
गुडूच्या वानरीवीजैर्य्यथालाभं समाहृतम् ॥
क्षुण्णैश्छिन्नैश्च वस्त्रेण बद्धैः संस्वेदयेन्नरम् ।
सहसोल्वन संशोऽयं योगः सर्व्वानिलार्त्तिजित् ॥

कुलत्थ माह, गोमधान, माष, आतइच, तिल, सेवासरियह, शुल्फा, उर्व, शेवाली, भोगजीरा, एरण्डमूल, वीज, रास्नामूल, सजिना, पिप्पली, कुठग्वा, सैन्धव, अम्ल, श्वेत भेदेली, अश्वगन्धा, वरियाल, दशमूल, गुडूची, वान्दर केकोा वीज इयार भितरत यिवस्तु प्राप्त हइ ताके कुटि मांस सिजोवा रस वा गाखीर मिहलाइ खोलात माजि, कापोरेरे टोपोला वान्धि सेक दि। । अथवा वाटि सवाके, विष करे यिअङ्गन ताते लिपि दि सेओो ( सेक ) दिव । इति स्वेदः ।

## अथ मूर्द्धतैलविधिः

अभ्यङ्गः परिसेकश्च पिचुर्व्वस्तिरिति क्रमात् ।
मूर्द्धतैलं चतुर्द्धा स्याद् वलवत् तदयथोत्तरम् ॥

अभ्यङ्गः तैलेन शिरसो मर्दनं । परिसेकः शिरसि तैलधारा पातनं । पिचुः मस्तके तैलाक्तम् । वस्तिः पूर्व्वे वक्ष्यमाणः ।

शिरोवस्तिमाह— शिरोवस्तिविधिश्चात्र वक्ष्यते सुशमम्मतः ।
शिरोवस्तिश्चर्मणः स्यादुच्छ्रितो द्वादशाङ्गुलः ॥
शिरः प्रमाणं तं वद्धा मस्तके माषपिष्टकैः ।
सन्निरोधे कृते चैव स्नेहैः कोष्णैः प्रपूरयेत् ॥
तावद्धार्य्यस्तु यावत् स्यात् नासाकर्णमुखस्रुतिः ।
वेदनोपशम प्रायो सर्व्वत्रैवं विनिश्चयः ॥
विनाभोजनमेष हि शिरोवस्तिः प्रशस्यते ॥

छागछाल वहल १२ वार आङ्गुल, दीर्घ मस्तकत मेराव परा करि मेराइ वान्धि, म इवटा पिठावटारे लेपदि वन्ध मारिव । औषधील अल्प तप करि पूराइ दिव माथात, नासा कर्णमुखर वेदना नाश हइ, भोजन कान्तर प्रातसे ।

ऊर्द्धकायन्ततः कोष्णनीरैः स्नानञ्च कारयेत् ।
अनेन दुर्जया रोगा वातजा यान्ति संक्षयम् ।
शिरःकम्पादयस्तेन सर्व्वकालेषु युज्यते ॥

इति मूर्द्धतैलम् ।

## अथ कर्णपूरणम्

स्वेदयेत् कर्णदेशन्तु किञ्चित् पार्श्वशायिनः ।
मूत्रैः स्नेहै रसैरुक्तैः कोष्णैः कर्णं प्रपूरयेत् ॥
कर्णञ्च पूरितं रक्षेत् सप्तपञ्चशतानि च ।
सहस्रं वापिमात्राणां श्रोत्रकण्ठशिरोगदे ॥
रसाद्यैः पूरणं कर्णे भोजनात् प्राक् प्रशस्यते ।
तैलाद्यैः पूरणं कर्णे भास्करेऽस्तमुपागते ॥

कर्णर किञ्चित् काखरत सेञ्रो ( सेक ) दिव मूत्रेरे औषधर स्वरसेरे अल्प उष्ण करि. भोजनर पूर्व्वकालत कर्णत दिव पूर करि २ दण्डमान वा अल्पवेचिके कर्णत राखिब ; यिहेतु कर्ण, कण्ठ, शिर इसवर वेदना गुचिब लागे । तैल घृतेर कर्ण पूरण करिब सूर्य्य अस्तकालत ।

तद् यथा— कर्णशूलातुरे कोष्णं वत्समूत्रं [ वस्त मूत्रं ] ससैन्धवं ।
निःक्षिप्य तेन शाम्यन्ति शूलपाकादिजा रुजाः ॥

दामुरि गरुर मूत्र वा छागीमूत्र सैन्धवं मिश्रयित्वा उष्णं कृत्वा कर्णे पूरणम् ।

### इति कर्णपूरणम् ।

## अथ लेपः

पर्य्यायः— आलेपस्य तु नामानि लिप्तिर्लेपश्च लेपनम् ।
दोषघ्नो विषहा वर्ण्यो स चालेपस्त्रिधा मतः ॥

दोषघ्नलेपो यथा—शोथघ्नी दारुसिद्धार्थ शुण्ठीमोभाञ्जन त्वचा ।
आरणालेन पिष्टानां प्रलेपः सर्व्वशोथजित् ॥

पुनर्णवा, आचूकाठ, श्वेतसर्षप, आदा, सजिना छाल एतैः सममागैः, काञ्जिकेन पिष्ट्वा लेपः

विषहालेपो यथा—अजादुग्धतिलैर्लेपो नवनीतेन संयुतः ।
शोथमारुस्कर हन्ति लेपो वा कृष्णमृत्तिलैः ॥

छागदुग्ध तिल महिष नवनीतेन लेपः । अथवा पोरा माटि तिलैर्लेपः ।

सवर्णलेपो यथा—रक्तचन्दनमञ्जिष्ठालोध्रकुष्ठप्रियङ्गवः ।
वटाङ्कुर मसूराश्च व्यङ्गघ्नामुख कान्तिदाः ॥

रक्तचन्दन, मञ्जिष्ठा, भूमलति, कुर, प्रियङ्गु, तदभावे वनमाला, वरखुरि ( वटाङ्कुर ), मसूर एतैः जलेन पिष्ट्वा लेपः । चेलु शालमन चोम गुचे ।

न रात्रौ लेपनं कुर्य्याद् दत्तञ्च पतितं भवेत्।

रात्रि लेप दिले सरिं परे अतएव न दातव्यं।

इति लेपः।

## अथ शोणितस्रावः

शोणितं स्रावयेजन्तोरामयं प्रसमीक्ष्य च।
प्रस्थं प्रस्थार्द्धमथवा प्रस्थार्द्धार्द्धमथापि वा॥

यि सकल व्याधित शोणितस्राव कराव लागे सेइ व्याधित शोणितस्राव कराले शान्त हइ। प्रस्थ १ सेर ॥० आदसेर ८ टका, अथवा अर्द्धप्रस्थ ३ पोवा ४ टका, अथवा अर्द्धार्द्ध प्रस्थ। एपोवा १२ टका शोणित स्राव कराव।

वाते— शरत्काले स्वभावेऽपि कुर्य्याद् रक्तश्रुतिं नरः।
त्वग्दोष ग्रन्थिशोथाद्या नश्यन्ति वातदूषिताः॥

अल्प रक्तवर्ण, फेनयुक्त, शुष्क रुक्ष कपिन वर्ण सेइ्र्क्तारक्त तत्काले ओलाइ एइ वात दूषित रक्त।

पित्ते—पीतं हरितं वा नीलं श्यावञ्च रक्तकम्।
अम्लमुष्णं मक्षिकाणां पिपीलीनामनिष्टकम्॥

पित्ते—पीतवर्ण, हरिद्रावर्ण, नीलवर्ण शाकवर्ण स्वादमाह अम्ल तपत, मक्षिका पिपीलिकार अनिष्टकारक।

शीतलं वहलं स्निग्धं गैरिकोदकसन्निभं।
मांसपेशी प्रभ स्कन्दी मन्दकं कफदूषितं॥

कफे वेचा, बियलि यार, गेम्माटि तियोवा येन मह्महसिद्ध करा येन। मन्द मन्द वेदना करे, दुइ दोषत रक्त सुगन्धि, सर्व्वदोष दूषित रक्त काञ्जिर वर्ण।

रोगभेदे रक्तस्रावमाह—

शोथे दाहेऽङ्गपाके च रक्तवर्णेऽसृजः श्रुतौ।
वातरक्ते तथा कुष्ठे स पित्ते दुर्ज्जयेऽनिले॥
पाणिरोगे श्लीपदे च विषदुष्टे तथैव च।
ग्रन्थ्यर्व्वुदापची क्षुद्ररोग रक्ताधिमन्थिषु॥
विदारी स्तनरोगेषु गात्राणां सादगौरवे।
रक्ताभिष्यन्द तन्द्रायां पूतिघ्राणास्य देहके॥

यकृत् प्लीह्नोः विसर्पे च विद्रधौ पीड़कोद्गमे ।
तथा कर्णोष्ठवक्त्राणां पाके दाहे शिरोरुजि ॥
उपदंशे रक्तपित्ते रक्तस्रावः प्रशस्यते ।
एषु रोगेषु शृङ्गैर्व्वा जलौकाऽलाबुकैरपि ॥
अथवापि शिरामोक्षैः कारयेद् रक्तपातनम् ॥

एइ सकल रोगत शृङ्ग, जोकेरे वा, अलाबु माग्डेरे वा शिरावेधन करि शोणित मोचन करिव ।

न कुर्व्वीत शिरामोक्षं कृशस्यातिव्यवायिनः ।
क्लीवस्य भीरोगर्भिण्याः प्रमेह पाण्डुपीड़ितः ॥
पञ्चकर्म्म विशुद्धस्य पीतस्नेहस्य चार्शसां ।
सर्व्वाङ्ग शोथयुक्तानामुदरीश्वासकासिनां ॥
छर्द्यतिसारकुष्ठिनामतिस्विन्नतनोरपि ।
ऊनषोड़श वर्षस्य गत सप्ततिकस्य च ॥
आघातात् श्रत रक्तस्य शिरामोक्षो न शस्यते ॥

एषु शिरा मोक्षं न कारयेत ।

गोशृङ्गेन जलौकाभिरलाबुभिरपि त्रिधा ।
वातपित्तकफैर्दुष्टं शोणितं स्रावयेद् बुधः ॥

गोशिङ्ग, जोक, लाउ, वातपित्त कफ एइ तिनि, द्विदोष त्रिदोषत शोणिताकर्षणम् ।

गृह्णाति शोणितं शृङ्गं दशाङ्गुलमितं वलात् ।
जलौका हस्तमात्रन्तु तुम्बी च द्वादशाङ्गुलम् ।

शिङ्गाइ तेज आने १० दश आङ्गुलर, जोके आने १ एक हस्तर, लाउवे आने १२ बार आङ्गुलर

पदमङ्गुलमात्रन्तु शिरासर्व्वाङ्गशोधनी ।

टोकर नरणि सूचाइ आने १ अङ्गुलर, शिरा मेलिले सकलो अङ्गर शोधन करि आने ।

कुतः रक्तं न स्रवेत् तदाह—

शीते निरन्नमूर्च्छातिनिद्राभीतिमदभ्रमैः ।
युतानां न स्रवेद् रक्तं तथा विन्मूत्रसङ्गिनां ॥

शीतकालत, अभोजनत, मूर्च्छितत, अतिनिद्रात, भययुक्तत, आफु माङ्ग खाइ भ्रम हवात विष्ठा मूत्र न चलात रक्त नचले ।

शोणिते न प्रवृत्ते तु कुष्ठ त्रिकटुसैन्धवैः।
मर्द्दयेद् व्रणवक्त्रञ्च तेन रक्तं प्रवर्त्तते॥

कूर, त्रिकटु, सैन्धव पिष्ट्वा घर्षणं रक्तस्रावं भवति।

अति प्रवर्त्तते रक्तं तत्र कुर्य्यात् प्रतिक्रियां।
अति प्रवृत्ते रक्ते तु लोध्र सर्ज्जरसाञ्जनं॥
यव गोधूमचूर्णैश्च धवधन्वानगैरिकैः।
सर्पनिर्म्मोक चूर्णैर्व्वा भस्मना क्षौमवस्त्रयोः॥
मुखं व्रणस्य रुद्ध्वा च शीतैश्चोपचरेद् व्रणम्॥

भूमरति, धूना, रसाञ्जन, पिष्ट्वा लेपः शोणितं धत्ते। यवधान्य गोमधान्य पिष्ट्वा लेपः। सापर कलप पिष्ट्वा लेपः, आहिव लगा रक्त राखिने, तारपरा अन्य रोग जन्मे। अतिशय करि रक्त गलेओ मनुष्य मरे।

## अथ नेत्रप्रसादन-कर्म्माणि

सेक आश्च्योतनं पिण्डी विड़ालस्तर्पणं तथा।
पुटपाकोऽञ्जनञ्चैभिः कल्पैर्नेत्रमुपाचरेत्॥

सेक, आश्च्योतन, पिण्डी, विड़ाल, तर्पण, पुटपाक, अञ्जन, एइ सप्तविधियेरे चक्षुर क्रिया आचरिव।

तत्र सेकविधिः—सेकस्तु सूक्ष्मधाराभिः सर्व्वस्मिन्नयने हितः।
मीलिताक्षस्य मर्त्यस्य प्रदेयश्चतुरङ्गुलः॥

एरण्ड मूलर क्काथ करि, अल्प उष्ण करि, अल्प धारा करि चक्षु मेलि थाकिव, चक्षुर हित सेक बोले।

स यथा—एरण्डदलमूलत्वक् सृतमाजपयोहितम्।
सुखोष्णं नेत्रयोः सिक्तं वाताभिष्यन्दनाशनम्॥

एरण्ड पत्र, मूल, छाल मिलित्वा २ तोला, छागी क्षीर ४ तोला जल १६ तोला, सिद्धे शेष क्षीर ४ तोला, किञ्चिदुष्णे देयं चक्षुषी सेकः।

## अथाश्च्योतनविधिः४

क्काथ क्षौद्रासव स्नेहविन्दूनां यत्तु पातनं।
चक्षुलोन्मिलिते नेत्रे प्रोक्तमाश्च्योतनं हि तत्॥

४। चक्रदत्ते आश्च्योतनमाह—

शुक्लौ प्रलम्बयान्येन पिचुवर्त्याकनीनिके।
दश द्वादश वा विन्दून् द्व्यङ्गुलादवसेचयेत्॥

पिचुवर्त्त्या तुलकवर्त्त्या, कनीनिके, नासिका सन्निहित चक्षुः कोने, द्व्यङ्गुलादिति, नेत्रकनीनिकस्योपरि अङ्गुलमुत्तोलितया, दश द्वादश वा विन्दून् अवसेचयेदित्यर्थः।

काथ मधु आसव मधंन्द, घृत तैल, एइ औषध सकल चक्षु मेलि २ आङ्गुल उपरर परा तार एकविन्दु मान दिव ।

आश्च्योतनं न कर्त्तव्यं निशायां केनचित् क्वचित् ।

आश्च्योतन रात्रित कदाचितो नकरिव ।

तद्यथा—बिल्वादि पञ्चमूलेन वृहत्येरण्डशिग्रुभिः ।

क्वाथ आश्च्योतने कोष्णोवाताभिष्यन्दनाशनः ॥

वेल, मातघिला, गमारी, गथियरी, पारलि, भेकुरि, एरण्ड, चजिना एवां मिलि २ तोला, जल ४ पल शेष १ पल किञ्चिदुष्णे चक्षुषोः विन्दुमात्रं देयम् ।

## अथ पिण्डीविधिः

युक्तभेषजकल्कस्य पिण्डी च कोलमात्रया ।

वस्त्रखण्डेन संवद्धा नेत्राभिष्यन्दनाशिनी ॥

उक्त २०५ · तोला सजल खोलके उष्ण करि कानिरे चेपि रसविन्दु मात्र चक्षुषि देयः । वातदोषत स्निग्ध द्रव्य उष्ण करि दिव । पित्ते उष्णशीत, कफे शुकान उष्ण करि दिव ।

स यथा— एरण्डपत्रमूलत्वक् निर्म्मिता वातनाशिनी ।

एरण्ड पत्र मूल छाल एकत्र बाटि उष्ण करि वस्त्रेरे चेपि उष्ण रस दिव ।

धात्री विरचिता पित्ते शिग्रुपत्रकृता कफे ।

पित्तदोषत केचा आमलखो वाटि २ तोला उष्ण करि वस्त्रेरे चेपि चेचा करि चक्षुत रस दिव । कफत चजिना पात २ तोला वाटि तप्त करि वस्त्रेरे चेपि रस चक्षुत दिव ।

## अथ विड़ालकविधिः

विड़ालको वहिर्लेपो नेत्रे पक्ष्मविवर्ज्जिते ।

तस्य मात्रा परिज्ञेया मुखलेपविधानवत् ५ ॥

चक्षुर वाहिरे भ्रुवर समीपत, लेप दियाके विड़ालक लेप बोले । मुख लेपर विधाने दिव ।

---

५ । मुखलेप इति चक्रदत्ते पाठः ।

मुखलेपो यथा भावप्रकाशे—

अङ्गुलस्य चतुर्थांशो मुखलेपः कनिष्ठिकः ।

मध्यमस्तु त्रिभागः स्यादुत्तमोऽर्द्धाङ्गुलो भवेत् ॥

स्थितिकालोऽपि तस्योक्तो यावत् कल्को न शुष्यति ।

शुष्कस्तु गुणहीनः स्यात्तथा दूषयति त्वचम् ॥

स यथा— यष्टिगैरिक सिन्धूत्थ दार्व्वीतार्क्ष्यं१ समःशिकैः ।
जलपिष्टैर्बहिर्लेपः सर्व्वनेत्रामयापहः ॥

यष्टिमधु गेरुमाटि, सैन्धव, दारुकाठ, रसाञ्जन एतै समभागैर्ज्जलपिष्टै लेंपः ।

## अथ तर्पणविधिः

वातातपरजोहीने वेश्मन्युत्तानशायिनः ।
आधारौमाषचूर्णेन क्लिन्नेन परिमण्डलौ ॥
समौ दृढावमन्धानौ कर्त्तव्यौ नेत्रकोषयोः ।
पूरयेद् घृतमण्डेन विलीनेन सुखोदकैः ॥
सर्पिषा शतधौतेन क्षीरजेन घृतेन वा ।
निमग्नान्यक्षिपक्ष्माणि यावत् स्युस्तावदेव हि ॥
पूरयेन्मीलिते नेत्रे तत उन्मीलयेच्छनैः ।
भिषग्भिरेषकथितः पुराणैस्तर्पणो विधिः ॥
एकाहं वा त्र्यहं वापि पञ्चाहं वापि तर्पयेत् ॥

बताह रोद धूला इसकल नहोवा, गृहर भितरत ओपरलै मुख करि शुइ माहकलाइर धूर्गात पानी मिहलाइ, दुयो चकुर कोषत मण्डलाकार औषधर हे येनकै लिपि दिब। तार मध्यत मण्डकाथ, घृत, नबनीत शतधौत घृत एइ सकल औषधेरे भ्रुव पर्य्यन्ते पूराइ दिव। चक्षु मेलि दिव। इहात चक्षुर विष, मन्दद्दष्टि, अभ्यन्तरजात नेत्ररोग भ्रसरा चक्षु फेचकुरियाइ, शिरविष, चक्षुव्यथा अन्धकार देखा फुलपरा, चक्षुलोओवा, चक्षुर मांस, चक्षुशोथ, चक्षुशूल दाह, तर्पण करिले इसव गुचे।

इति तर्पणविधिः।

## अथ पुटपाकविधिः

द्वे बिल्वे स्निग्धमांसस्य परं द्रव्यं पलं मतम् ।
द्रव्यस्य कुडवोन्मानं सर्व्वमेकत्र पेषयेत् ॥
तदेकत्र समालोड्य पत्रैः सुपरिवेष्टितम् ।
पुटपाकविधानेन तत् पक्त्वा तद्रसं बुधः ॥
तर्पणोक्तेन विधिना यथावद् विनियोजयेत् ।
दृष्टिमध्ये निषेक्तव्यो नित्यमुत्तानशायिनः ॥
स्नेहनो लेखनश्चैव रोपणश्चेति स त्रिधा ।

१। तार्क्ष्यं रसाञ्जनमिति भावमिश्रः—भावप्रकाशे

छागर, तित्तिरर, बटार, कैरर, एइ सकलर सद्यमारित अस्थिरहित स्निग्ध मांस १६ तोला, उक्तहले औषध ४ तोला आधावटा करि, जामुपात पलाश पातदि पुट करि कुशरे मेराइ बान्धि वोकालेपि, अमित, वा करिपामित पाककरि, मृत्तिका अग्निवर्ण हले गुचाइ मेलि चेपि रसलै, तर्पण उक्त विधिरे, उपरलै चक्षुके शुइ चक्षुत पूराइ दिब। स्नेहन लेखन व्रण रोपण, चक्षुहित, दृष्टिकारक, पित्त, रक्त, वात, व्रण दोष चक्षुर इसब व्याधि गुचे, इहाक पुटपाक बोले।

## इति पुटपाकः।

## अथाञ्जनविधिः७

अथ संपक्व दोषस्य प्राप्तमञ्जनमाचरेत्।
अञ्जनं क्रियते येन तद् द्रव्यं चाञ्जनं मतम्॥

चक्षुत परिपक्व प्रधान दोष हइ, अञ्जनस्वरूप औषध दिब। ताके अञ्जन बोले। भ्रुवत चक्षुर प्रान्तत आचरिव।

वटीरसस्तथाचूर्णमिति त्रिविधमञ्जनं।
यथापूर्व्वं वलन्तेषु हीनानिस्युर्य्यथोत्तरम्॥
तत् प्रत्येकं त्रिधा प्रोक्तं लेखनं रोपणन्तथा।
स्नेहनञ्चेति लिङ्गानां तेषां विस्तरतः शृणु॥

वटिर, स्वरस काथादिर, चूर्णर, एइ तिनिविध अञ्जन दिब। अञ्जन तिनि विध—स्नेहन, लेखन, रोपण। घृत तैल मधुर अञ्जन दिले स्नेहन बोले। क्षार, जला, अम्ल एइ सकलर अञ्जनके लेखन बोले। तिक्त द्रव्यरस, कषाय रस अञ्जनके रोपण बोले।

शलाकामाह—ताम्रर लोहर शला साजिव।

दीर्घ ८ आङ्गुल, प्रशस्त वरकला माहर मान डाडर। शलार मूर खनि, मणिर आकार करि ताते औषध लगाइ चक्षुत दिब। स्नेह घृत तैलदिया शलाका रूपर वा सुवर्णर।

यथा—तुत्थमाक्षिक सिन्धूत्थ सिता शङ्ख मनःशिला।
गैरिकं सिन्धूफेणञ्च मरिचञ्चेति चूर्णयेत्॥
संयोज्य मधुना कुर्य्यादञ्जनार्थे रसक्रिया।
मर्म्मरोगात्मतिमिर काचशुक्लहरीपरा॥

---

७। नेत्र रोगे पुनर्नवा प्रयोगः। —आयुर्व्वेदसंग्रहे देवेन्द्रः।
दुग्धेन कण्डूं क्षौद्रेण नेत्रस्रावञ्च सर्पिषा।
पुष्पं तैलेन तिमिरं काञ्जिकेन निशान्धताम्॥
पुनर्नवा हरत्याशु भास्कर स्तिमिरं यथा॥

शोधित तुतिया, शोधित सुवर्ण माक्षिक, सैन्धव चिनि, शोधित न.मिशाड़, शोधित मन:शिला, गेरुमाटि, शोधित समुद्रफेन, आलुक सममागचूर्ण मधु मिश्रित शलाकया अञ्जयेत् ।

## इति नेत्रप्रसादनम् ।

## अथ औषधभक्षणे कालमाह

भैषज्यमभ्यवहरेत् प्रभाते प्रायशो बुधः ।
कषायस्तु विशेषेण तत्र भेदस्तु दर्शितः ॥
ज्ञेयः पञ्चविधः कालः भैषज्यग्रहणे नृणाम् ।
किञ्चित् सूर्य्योदये जाते तथा दिवसभोजने ॥
सायन्तने भोजने च मुहुश्चापि तथा निशि ॥

सूर्य्योदये, दिवस भोजनत, सायाह्नकालत, रात्रि भोजनत वारम्वार ।

तत्र प्रथमकालमाह—प्रायः पित्तकफोद्रेके विरेकवमनार्थयोः ।
लेखनार्थे च भैषज्यं प्रभातेऽन्नमाहरेत् ॥

पित्तकफप्रकोपत, विरेचनार्थत, वमनार्थत, लेखनार्थत प्रभाते औषध भक्षण करिव । इति प्रथमः कालः ।

द्वितीयकालस्तु— भैषज्यं विगुणेऽपाने भोजनाग्रे प्रशस्यते ।
अरुचौ चित्रभोज्यैश्च मिश्रं रुचिरमाहरेत् ॥
[ समान वाते विगुणे मन्देऽग्नावति दीपनम् ।
दद्याद् भोजनमध्ये च भैषज्यं कुशलो भिषक् ॥
व्यानकोपे तु भैषज्यं भोजनान्ते समाहरेत् । ]
हिक्काक्षेपककम्पेषु पूर्व्वमन्ते च भोजनात् ॥

अपानवायु प्रकुपित हले, अरुचित, क्षुधा लगान, रुधिर वान्तित, रक्तपित्तत, आक्षेपक वातत, कम्पवातत भोजन करि पाछे औषध खाव । इति द्वितीयः कालः ।

तृतीयकालस्तु—उदाने कुपिते वाते स्वरभङ्गादिकारिणि ।
ग्रासग्रासान्तरे देयं भैषज्यं सान्ध्यभोजने ॥
प्राणे प्रदुष्टे सान्ध्यस्य भुक्तस्यान्ते प्रदीयते ।
औषधं प्रायशो धीरैः कालोऽयं स्यात् तृतीयकम् ॥

उदानवात प्रकुपित हले, भातभागिले भोजनर ग्रासे ग्रासे औषध खाव । प्राणवायु प्रकुपित हले भोजनर अन्तत औषध खाव । इति तृतीयः कालः ।

चतुर्थकालस्तु—मुहुर्मुहुश्च तृट् छर्दि हिक्काश्वासगरेषु च ।
सान्नञ्च भेषजं दद्यादितिकालश्चतुर्थकः ॥

पिपासात, वान्तित, हेकटित, श्वासरोगत, विषदोषत तत्काले पुनः पुनः औषध खाव । अन्नर सहित । इति चतुर्थः कालः ।

पञ्चमकालस्तु—ऊर्द्ध्व जत्रुविकारेषु लेखने वृंहणे तथा ।
पाचने शमने देयमनन्नं भेषजं निशि ॥

चक्षुर, कर्णर, नासिकार, मुखर, शिरर इसवत, लेखनत, वृंहणत [ स्नेहणत ], शमनत उपवास करि खाव, रात्रित औषध खाले उपवास । इति पञ्चमः कालः ।

जीर्णौषधलक्षणमाह—अनुलोमोऽनिलः स्वास्थ्यं क्षुत्तृष्णा सुमनस्कता ।
लघुत्वमिन्द्रियाणाञ्च एषा जीर्णौषधाकृतिः ॥

सर्व्व शरीर वायु शान्त, क्षुधातृषा, मन इसव लघु स्वस्थ हय, शुद्ध उगार आहे । पक्क औषधर लक्षण ।

अपक्क औषधस्तु—श्रमो दाहोऽङ्गसदनं भ्रममूर्च्छाशिरोरुजः ।
अरतिर्व्वलहानिश्च अपक्कौषध-लक्षणम् ॥

उत्साह नाश, दाह, भ्रम, मूर्च्छा, शिरःपीड़ा, अकाम, वलहानि औषध अशुद्ध हले, जोखा करि नेखाले इसव करे ।

## अथौषधकरणे भक्षणे च वारतिथिनक्षत्राणि

द्व्यङ्गोदये गुरुबुधेन्दुसितेषु तेषां,
वारे रवेश्च सुविधौ सुतिथौ सुयोगे ।
भेषूग्र पन्नग विशाख शिवेतरेषु,
जन्मर्क्षविष्टि रहितेष्वगदः शुभाय ॥

शुभेषु ११।२०।२५।१०।२।९।१६।६ एतेषामितरेषु नक्षत्रेषु ।

इत्यौषधकरणकालः ।

## अथौषधभक्षणे नक्षत्राणि

दहनमृगधनिष्ठा रेवतीवात पुष्या,
हरिभमदिति चित्रा मूलशक्रोत्तराश्च ।
दिनकरमनुराधा चाश्विसौम्यान्यहानि,
हरति सकलरोगान् भक्षणञ्चौषधस्य ॥

इत्यौषधभक्षणे नक्षत्राणि ।

## ६६। अथ रोगिणः परीक्षा

दर्शन स्पर्शन प्रश्नैः परीक्षा च त्रिधा मता।
दर्शनं मूत्रजिह्वादेः स्पर्शनं नाड़िकादीनाम्॥
प्रश्नो दूतादि वचनैरिति त्रैध्यमुच्यते॥

चक्षु, मूत्र, जिह्वा, एइ सकल दर्शन, नाड़िकादि स्पर्शन, दूतादिर प्रश्न।

### तत्र नेत्रपरीक्षा

वाते—नेत्रं स्यात् पवनाद् रूक्षं धूम्रवर्णं तथारुणम्।
कोटरान्तः प्रविष्टञ्च तथास्तब्ध विलोकनम्॥

वात दोषत म्लान धूम्रवर्ण, अल्प रक्त।

पित्ते—हरिद्राखण्डवर्णम्वा रक्तं वा हरितं तथा।
दीपद्वेषि सदाहञ्च नेत्रं स्यात् पित्तकोपतः॥

हरिद्रावर्ण दीप देखिव नोवारे, चक्षुत दाह हय पित्तदोषत।

कफे—चक्षुर्बलास वाहुल्यात् स्निग्धं स्यात् सलिलप्लुतम्।
तथा धवलवर्णञ्च ज्योतिर्हीनं बलान्वितम्॥

चक्षु मेलिवर इच्छा नेयाय. निर्म्मल जल स्रवि थाके, धवलवर्ण, कान्तिहीन एइ सकल हय कफ दोषत।

द्विदोषे—नेत्रं द्विदोषवाहुल्यात् स्याद्दोषद्वयलक्षणम्।

दुइ दोष लगहले द्वन्द्वज वोले।

त्रिदोषे—त्रिदोष लिङ्गसङ्गेन तन्मारयति रोगिणं।
त्रिदोष दूषितं नेत्रमन्तर्लग्नस्तु सम्भवेत्॥
त्रिलिङ्गे मलीनस्रावी प्रान्ते नोन्मीलत्यपि।

चक्षु कोटर प्रवेश हइ, जल स्रावे, कालेरे, अल्प मेलिव पारे।

### इति नेत्रपरीक्षा।

### अथ जिह्वापरीक्षा

शाकपत्रप्रभारुक्षा स्फुटना रचनानिलात्।
रक्ताश्यावा भवेत् पित्ताज्जिह्वार्द्रा धवलाकफात्॥

परिदग्धा खरस्पर्शा कृष्णादोषत्रयेऽधिके ।
सैव दोषद्वयाधिक्ये दोषद्वितय लक्षणा ।

शाक पत्रवर्णा सूक्ष्म, मध्यत फुटे वात दोषत, रक्तवर्णा, श्यामवर्णा पित्तत, कफपूर्णा धवलवर्णा जिह्वा कफत, पोराईन खरखरिया, विरस, कालवर्णा एइ सान्निपातिक जिह्वा ।

इति जिह्वापरीक्षा ।

## अथ मूत्रपरीक्षा

वातेन पाण्डुरं मूत्रं सफेनं कफरोगिणां ।
रक्तवर्णं भवेत् पित्ते द्वन्द्वजे मिश्रितं भवेत् ॥

इति मूत्रपरीक्षा ।

## अथ नाड़ी परीक्षा[८]

प्रातःकृत समाचारः कृताचार परिग्रहम् ।
सुखासीनः सुखासीनं परीक्षार्थमुपाचरेत् ॥

प्रात.कृत पूर्व्वकं, कृत शौचादिकं, विशिष्टासने उपविश्य । व्याधेः परीक्षार्थं, शरीरस्य शैत्योष्णादि ज्ञानार्थं स्पर्शन कार्य्यं ।

पुंसो दक्षिणहस्तस्य स्त्रियो वामकरस्य तु ।
अङ्गुष्ठमूलगा नाड़ी परीक्षेत भिषग्वरः ॥
तथैवाङ्गुष्ठमूले च कुर्परे मणिवन्धके ।
अङ्गुलीभिस्तु तिसृभिर्नाड़ीकायाः वहिः स्पृशेत् ॥
तच्चेष्टया सुखं दुःखं जानीयात् कुशलोऽखिलम् ॥

---

८ । तथा च नाड़ीप्रकाशे—

वातं पित्तं कफं द्वन्द्वं सन्निपातं तथैव च ।
साध्यासाध्यविवेकञ्च सर्व्वं नाड़ी प्रकाशयेत् ॥
आदौ च वहते वातो मध्ये पित्त तथैव च ।
अन्ते च वहते श्लेष्मा नाड़िकात्रय लक्षणम् ॥
भूलता गमनप्राया स्वास्था स्वास्थ्यमयी शिरा ।
वाताद् वक्रगता नाड़ी चपला पित्तवाहिनी ।
स्थिरा श्लेष्मवती ज्ञेया मिश्रिते मिश्रिता भवेत् ॥

तिनि आङ्गुलीयेरे अङ्गुष्ठमूलत धरि, सावहित चित्ते थाव, प्रातःकृत्यादि समापन करि, सुखासीन हब। नाड़ीर गतिरे, सुख दुःख साध्य, वैद्ये जानिब।

सद्यः स्नातस्य सुप्तस्य क्षुत्तृष्णातपशालिनः।
व्यायामश्रान्तदेहस्य सम्यङ् नाड़ी न बुध्यते॥

स्नानकरि उठात, निद्रानाशत, क्षुधितर, तृष्णातुरर, रौद्रेपीड़ितर नाड़ी बुजिब नोवारि।

वातेऽधिके भवेन्नाड़ी प्रव्यक्ता तर्ज्जनीतले।
पित्ते व्यक्तामध्यमायां तृतीयाङ्गुलिगा कफे॥

वात प्रकुपित हले तर्ज्जनी अङ्गुलीत सञ्चाल करे। पित्त प्रकुपित हले मध्यमा अङ्गुलीत सञ्चाल करे। कफ प्रकुपित हले तृतीय अङ्गुलीत पाइ।

तर्ज्जनीमध्यमामध्ये वातपित्ते व्यवस्थिते।
अनामिकायां तर्ज्जन्यां व्यक्तोवातकफे भवेत्॥
मध्यमानामिकामध्ये स्फूटा पित्तकफाधिके।
अङ्गुली त्रितयेऽपि स्यात् प्रव्यक्ता सन्निपातिनः॥

वातपित्त दुइ गोटखाइ नाड़ीचलिले मध्यमातर्ज्जनीत वहे वातकफ दोषत अनामिका तर्ज्जनीत वहे। पित्तकफ दोषत मध्यमा अनामिकात वहे। सान्निपातिक नाड़ी तिनि आङ्गुलीत वहे।

## तथा च चरके

वाते— कुटिलाकुटिलारम्भात् तनुते कुटिलां गतिं।
वातात्मिकां गतिं धत्ते जलोकासर्पयोरिव॥

वातदोषत नाड़ी कुटिल करि, सर्पर जोकर गतिर निचिनाकै चले।

पित्ते— दाहं दधाना सर्व्वाङ्गे विशिष्टं हस्तपादयोः।
पित्त प्रकुपिता नाड़ी काकमण्डूकयोरिव॥

पित्त प्रकुपित नाड़ी दाहादि जन्माइ हस्त पादादित काउरी, भेकुलीर गतिर निचिनाकै चले।

कफे— हंसस्येव गतिं धत्ते गतिं पारावतस्य च।
कफात्मिका स्तम्भरूपा गतिरेषा प्रकीर्त्तिता॥

कफ प्रकुपित नाड़ी जाड्य हुइ, हाइ पारर गतिर निचिनाकै चले।

त्रिदोषे— गतिं धत्ते त्रिदोषात्मा नाड़ी तित्तिरीलावयोः।

सन्निपातिक नाड़ी, बटा तितिरी, स्यार निचिनाकै अतिवेगे चले।

स्थित्वा स्थित्वा चलति या सा हन्ति स्थानविच्युता ।
अतिक्षीणा च शीता च प्राणान् हन्ति न संशयः ॥

थाकि थाकि नाड़ी वहे स्थान एरि मृत्यु कराइ । क्षीण नाड़ी शीतल नाड़ी हले मृत्यु करे ६ ।

ज्वरवेगे च धमनी सोष्णावेगवती भवेत् ।
अजीर्णे च भवेन्नारी कठिनाविलगामिनी ॥

प्रधान ज्वरवेगत नाड़ी तप्त खरे वहे । अग्निमन्दत धातुक्षीणत कृशत मन्दमन्द गमन ।

चपलाक्षुधितस्यापि तृप्तस्य वहति स्थिरा ।
सुखिनस्तु स्थिरा ज्ञेया तथा वलवती मता ॥

चञ्चल वहे क्षुधितर, सन्तोषित जनर सुखे वहे । सुखिनर, स्थिरधातुर, पुष्टशरीरर गहीनि वहे ।

अन्यच्च—कामात् क्रोधाद् वेगवती क्षीणाचिन्ताभयाप्लुता ।
मन्दं मन्दं कुटिलकुटिलं स्पन्दते या च नाड़ी ।
तस्यावश्यं भवति मरणं पक्षमप्राहतो वा ॥

असाध्या नाड़ी—प्रातः स्निग्धवती नाड़ी मध्याह्ने चोष्णतां व्रजेत् ।
सायाह्ने शीतला चैव सा नाड़ी प्राणघातिका ॥

**इति नाड़ीपरीक्षा ।**

---

६ । अथ नाड़ीस्पन्दनसंख्या आयुर्व्वेदसंग्रहे देवेन्द्रः—

षष्ट्या स्पन्दास्तु मात्राभिः षट्पञ्चाशद् भवन्ति हि ।
शिशोः सद्य प्रसूतस्य पञ्चाशत तदनन्तरम ॥
चत्वारिंशत् ततः स्पन्दाः षट्त्रिंशद् यौवने ततः ।
प्रौढस्यैकोनत्रिंशत् स्युर्वार्द्धक्येऽष्टौ च विंशतिः ॥
पुंसोऽतिस्थविरस्य स्युरेकत्रिंशदतःपरम् ।
योषितः पुरुषाणाञ्च स्पन्दास्तुल्याः प्रकीर्त्तिताः ॥
प्रवृद्धानां रमणीनान्तु द्व्यधिकाः सम्मता बुधैः ।
दशगुर्व्वक्षरोच्चारकालः प्राणः षड़ात्मकैः ॥
तैः पलं स्यात्तु तत् षष्ट्या दण्ड इत्यभिधीयते ॥

१० मात्राय १ प्राण, ६ प्राणे १ पल, ६० पले १ दण्ड । १ मात्रा काल १ पल, ६० भागर १ भाग अर्थात् १ विपल । १ पलत स्पन्दनर संख्या ५६ बार प्रभृति ।

## अथ दूतादिज्ञानम्

दूताः सजातयोऽव्यङ्गाः पटवो निर्म्मलाम्बराः ।
सुखिनोऽश्ववृषारूढाः शुभ्रपुष्पफलैर्य्युताः ॥
सजातयः सुचेष्टाश्च ते जीवदिशि सङ्गताः ।
भिषजं समये प्राप्तास्ते दूता बहुसम्मताः ॥

## अथ स्वप्नलक्षणम्

स्वप्नेषु नग्नान् मुण्डांश्च रक्तकृष्णाम्बरावृतान् ।
व्यङ्गांश्च विकृतान् कृष्णान् सपाशान् सायुधानपि ॥
बध्नतो निघ्नतश्चापि दक्षिणां दिशमाश्रितान् ।
महिषोष्ट्रखरारूढान् दृष्ट्वा तस्य भवेत् मृतिः ॥
अधो यो निपतत्युच्चात् जलाग्नौ वा विलीयते ।
श्वापदैर्दंश्यते योऽपि मत्स्यादैर्गिलितो भवेत् ॥
यस्य नेत्रे विलीयेत दीपोनिर्व्वाणतां व्रजेत् ।
तैलान् सुरान् पिबेद्वापि लौहम्वा लभते तिलान् ।
समुत्थो लभते रोगं रोगी यात्येव पञ्चताम् ॥
दुःस्वप्नान्येवमादीनि दृष्ट्वा स्वप्नेषु कस्यचित् ।
स्नानं कुर्य्यादुपोष्यैव दद्याद्धेम तिलान्वयम् ॥
पठेत् स्तोत्राणि देवानां रात्रौ देवालये वसेत् ।
कृत्वैवं त्रिदिनं मर्त्यो दुःस्वप्नात् परिमुच्यते ॥
स्तोत्राणि सहस्रनामादीनि ।

इति दुःस्वप्नः ।

## अथ शुभस्वप्नः

स्वप्नेषु यः सुरान् भूपान् याचतः सुहृदो द्विजान् ।
समिद्धाग्निञ्च तीर्थानि पश्येत् सुखमवाप्नुयात् ॥
तीर्त्वा कलुषनीराणि जित्वा शत्रुगणानपि ।
आरुह्य सौध गोशैलकरिवाहान् सुखी भवेत् ॥
शुभ्र पुष्पादि वासांसि मांसमत्स्य फलान्यपि ।
प्राप्यातुरः सुखी भूयात् सुस्थो धनमवाप्नुयात् ॥

अगम्यागमनश्चैव विष्ठया लिपितो मृतिः ।
आममांसाशनं स्वप्ने धनारोग्याप्तये विदुः ॥
जलौकाभ्रमरी चैव मक्षिका दंशयेद् यदि ।
रोगी च भवेदारोग्यः सुस्थो धनमवाप्नुयात् ॥

**इति शुभस्वप्नाध्यायः ।**

**॥ इति वैद्यकसारोद्धारः सम्पूर्णः ॥**

भुजाब्धिमुनिचन्द्रे षु सारोद्धारप्रवर्त्तिकां ।
प्रालिखन् नरसिंहः श्रीव्रजनाथस्य पुस्तिकां । १०
दुर्गादेव्याः पदद्वन्द्वं प्रणम्य सततं मुदा ।
पक्षाब्धिमैत्रके शाके श्रीव्रजनाथशर्म्मणः ।
आयुर्व्वेदाद्धृतो ग्रन्थः सारोद्धारः प्रवर्त्तकः ॥

१० । भुजाब्धि मुनयः चन्द्रे वैलम्य सारोद्धारकः ।
प्रालिखन् नरसह्वाग्रिव्रजनाथस्य पुस्तिकां ॥ —इति मूले पाठः ।

# निर्घण्टः [ वर्णानुक्रमिकः ]

## INDEX